॥श्रीश्रीगौरगदाधरौ विजयेताम्॥

श्रीश्रीलरूपगोस्वामिप्रभुपादप्रणीतः

# श्रीश्रीभक्तिरसामृतसिन्धुः

प्रथमखण्ड

## पूर्वविभागः

श्री हरिदास शास्त्री

॥ श्रीश्रीगौरगदाधरौ विजयेताम् ॥

श्रीश्रीलरूपगोस्वामिप्रभुपादप्रणीतः

# श्रीश्रीभक्तिरसामृतसिन्धुः

## प्रथम खण्ड

(रसोपयोगि-स्थायिभावोपपादनो नाम पूर्वविभागः)

श्रील-जीवगोस्वामि-प्रभुपाद-कृत-'दुर्गमसङ्गमनी' टीकया,
श्रील-मुकुन्ददास-गोस्वामिपाद-कृत-'अर्थरत्नाल्प-दीपिका' टीकया,
श्रील-विश्वनाथचक्रवर्त्तिपाद-कृत-'भक्तिसार-प्रदर्शिनी' टीकया,
श्रीधामवृन्दावन-वास्तव्य-न्यायवैशेषिकशास्त्रि-नव्यन्यायाचार्य-
काव्य-व्याकरण-साङ्ख्य-मीमांसा-वेदान्त-तर्क-तर्क-न्याय-
वैष्णवदर्शनतीर्थ-विद्यारत्नाद्युपाध्यलङ्कृत-
श्रीहरिदासशास्त्रि-कृत-हिन्दी-अनुवादेन च समलङ्कृतः।

सद्ग्रन्थ प्रकाशक
श्रीगदाधरगौरहरि प्रेस,
श्रीहरिदास निवास, पुराना कालीदह,
वृन्दावन, मथुरा, (उत्तर प्रदेश)।
श्रीचैतन्याब्द—५३०

ॐ विष्णुपाद परमहंस अष्टोत्तरशत नित्यलीला प्रविष्ट

श्रील श्री हरिदास शास्त्रीजी महाराज

संस्थापक एवं भूतपूर्व अध्यक्ष :-

श्री हरिदास शास्त्री गोसेवा संस्थान
श्रीहरिदास निवास, पुराना कालीदह,
वृन्दावन, मथुरा, (उत्तर प्रदेश)।
दूरभाष: 9313103109, 8958379762

www.sriharidasniwas.org
info@sriharidasniwas.org

प्रकाशन तिथि :
व्यास पूजा मुड़िया, श्री गुरूपूर्णिमा महोत्सव
द्वितीय आषाढ़ पूर्णिमा, संवत् 2072, श्रीगौराङ्गाब्द 530

मूल्य: 400 रुपया



ग्रन्थ प्राप्ति स्थानः
खण्डेलवाल बुक डिपो
आठ खम्बा वृंदावन
जिला मथुरा (उत्तर प्रदेश)

# श्रीश्रीभक्तिरसामृतसिन्धौ रसोपयोगि-स्थायिभावोपपादनो नाम पूर्वविभागे

## विषयानुक्रमः

### प्रथमालहरी— सामान्यभक्तिः



### द्वितीयालहरी— साधनभक्तिः

## तृतीयालहरी— भावभक्तिः

| विषय | श्लो० सं० | पृ० सं० |
|---|---|---|
| श्रीकृष्णतद्भक्तप्रसादजः | १५ | ४१७ |
| श्रीकृष्णप्रसादजः | १६ | ४१७ |
| वाचिकप्रसादजः | १७ | ४१८ |
| आलोकदानजः | १८ | ४१९ |
| हार्दः | १९-२० | ४२० |
| तद्भक्तप्रसादजः | २१-२३ | ४२१ |
| रतेः पञ्चविधत्वम् | २४ | ४२१ |
| जातभावाङ्कुर-लक्षणानि | २५-२६ | ४२२ |
| तत्र क्षान्तिः | २७-२८ | ४२३ |
| अव्यर्थकालत्वम् | २९ | ४२४ |
| विरक्तिः | ३०-३१ | ४२४ |
| मानशून्यता | ३२-३३ | ४२५ |
| आशाबन्धः | ३४-३५ | ४२६ |
| समुत्कण्ठा | ३६-३७ | ४२९ |
| नामगाने: सदारुचिः | ३८ | ४३० |
| तद्गुणाख्याने आसक्तिः | ३९ | ४३० |
| तद्वसतिस्थले प्रीतिः | ४० | ४३१ |
| रत्याभासः | ४१-४५ | ४३२ |
| तत्र प्रतिबिम्बः (रत्याभासः) | ४६-४८ | ४३६ |
| अथ छाया (रत्याभासः) | ४९-५३ | ४३९ |
| श्रीकृष्णप्रेष्ठापराधतो भावभावाभासदशाभ्यामपि पतनम् | ५४-५७ | ४४३ |
| श्रीकृष्णप्रसादज भावलक्षणम् | ५८ | ४४७ |
| जातभावस्य जनस्य वैगुण्यलिप्तत्वाभावः | ५९-६० | ४४८ |

## चतुर्थीलहरी— प्रेमभक्तिः

| विषय | श्लो० सं० | पृ० सं० |
|---|---|---|
| प्रेमा | १-४ | ४५३ |
| तत्र भावोत्थः | ५ | ४५७ |
| वैधभावोत्थः | ६ | ४५७ |
| रागानुगीयभावोत्थः | ७-८ | ४५८ |
| हरेरतिप्रसादोत्थः | ९-११ | ४६० |
| तत्राद्यः (माहात्म्यज्ञानयुक्तः) | १२ | ४६२ |
| केवलप्रेमा | १३-१४ | ४६३ |
| प्रेमोदयक्रमः | १५-१६ | ४६५ |
| प्रेम्णः सुदुर्गमत्वम् | १७-१८ | ४६६ |
| स्नेहादिभेदानुल्लेखे कारणप्रदर्शनम् | १९-२० | ४६९ |
| पूर्वविभागोपसंहार-श्लोकः | २१ | ४७० |

श्रील हरिदास शास्त्रीजी महाराज द्वारा प्रकटित व सेवित

**श्रीगदाधरगौर श्रीराधागोविन्ददेवजी महाराज**

श्रीहरिदास निवास, पुराना कालीदह, वृन्दावन

ग्रन्थकार श्रील रूप गोस्वामी सेवित श्रीराधा-गोविन्ददेवजी महाराज
(वर्तमान में जयपुर में विराजमान)

दुर्गमसङ्गमनी टीकाकार श्रील जीव गोस्वामी सेवित श्रीराधा-दामोदरदेवजी महाराज
श्रीधाम वृन्दावन

श्रील हरिदास शास्त्रीजी महाराज द्वारा सेवित श्रीहरिदासेश्वर हनुमानजी महाराज
श्रीहरिदास निवास, पुराना कालीदह, वृन्दावन

भक्तिसारप्रदर्शिनी टीकाकार श्रील विश्वनाथ चक्रवर्ती ठाकुरजी का समाधि मन्दिर
श्री राधागोकुलानन्ददेवजी मन्दिर, श्रीधाम वृन्दावन

ॐ विष्णुपाद परमहंस अष्टोत्तर शत नित्यलीला प्रविष्ट
श्रील हरिदास शास्त्रीजी महाराज की समाधि
श्रीहरिदास निवास, पुराना कालीदह, वृन्दावन

श्रील हरिदास शास्त्रीजी महाराज श्रीभक्तिरसामृतसिन्धु का हिन्दी अनुवाद करते हुए

॥ श्रीश्रीगौरगदाधरौ विजयेताम् ॥

श्रीश्रीलरूपगोस्वामिप्रभुपादप्रणीतः

# श्रीश्रीभक्तिरसामृतसिन्धुः

## (रसोपयोगि-स्थायिभावोपपादनो नाम पूर्वविभागः)

### भगवद्भक्तिभेदनिरूपकः प्रथमा लहरी— सामान्यभक्तिः

श्रीश्रीराधागोविन्ददेवौ विजयेते

अखिलरसामृतमूर्त्तिः प्रसृमररुचिरुद्धतारकापालिः।
कलितश्यामा-ललितो राधाप्रेयान् विधुर्जयति॥ (१)

अनुवाद

प्रथम अर्थ — श्रीकृष्ण पक्ष में

जो अखिलरसामृतमूर्ति हैं, जिन्होंने अपने सौन्दर्य के प्रभाव से तारका एवं पाली नामक सखियों को अपने वशीभूत किया है, तथा श्यामा एवं ललिता सखियों को प्रीतिपूर्वक अपनाया है, उन श्रीमती राधा के प्रिय श्रीकृष्ण की जय हो॥ १॥

द्वितीय अर्थ — चन्द्र पक्ष में

जो अखिलरसामृतमूर्ति हैं, चारो ओर ज्योत्स्ना से तारा समूह को निष्प्रभ करते हैं, रात्रि के सौन्दर्य्य को जो स्थापन करते हैं, उन माधवी पूर्णिमा के राधाप्रिय (राधा नामक तारे के प्रिय) चन्द्र की जय हो॥ १॥

**श्रीश्रीराधादामोदरौ जयतः**

**श्रील जीवगोस्वामिप्रभुपादकृता**

**दुर्गमसङ्गमनी टीका**

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः।
श्रीवल्लभोऽनुजः सोऽसौ श्रीरूपो जीवसद्गतिः॥ १॥

अथ श्रीमान् सोऽयं ग्रन्थकार: सकलभागवतलोकहिताभिलाषपरवशतया प्रकाशितै: स्वहृदयदिव्यकमलकोषविलासिभि: श्रीमद्भागवतरसैरेव भक्तिरसामृतसिन्धुनामानं ग्रन्थमपूर्वरचनमाचिन्वानस्तद्वर्णयितव्यस्यैव च सर्वोत्तमतां निश्चिन्वानस्तद्व्यञ्जनयैव मङ्गलमासञ्जयति; एवं सर्व एव ग्रन्थोऽयं मङ्गलरूप इति च विज्ञापयति,— अखिलेति। विधु: श्रीकृष्णो जयति सर्वोत्कर्षेण वर्त्तते; यद्यपि विधु: श्रीवत्सलाञ्छन इति सामान्यभगवदाविर्भावपर्य्यायस्तथाऽपि विधुनोति खण्डयति सर्वदु:खमतिक्रामति सर्वं चेति, यद्वा, विदधाति करोति सर्वसुखं सर्वं चेति निरुक्ते: पर्य्यवसाने विचार्य्यमाणे तत्रैव विश्रान्ते:, असुराणामपि मुक्तिप्रदत्वेन स्ववैभवातिक्रान्तसर्वत्वेन परमापूर्वस्वप्रेम-महासुखपर्य्यन्त-सुखविस्तारकत्वेन स्वयंभगवत्त्वेन च तस्यैव प्रसिद्धे:, अतएवामरेणापि तत्प्राधान्येनैव तानि नामानि प्रोक्तानि;— 'वसुदेवोऽस्य जनक:' इत्याद्युक्ते:।

एतदेव सर्वं जयत्यर्थेन स्पष्टीकृतं; सर्वोत्कर्षेण वृत्तिर्नाम तत्तदेवेति; अतएव प्राकट्यसमयमात्रदृष्ट्या या लोकस्याप्रतीतिस्तस्या निरासकोऽयं वर्त्तमान: प्रयोग:; तथा च प्रमाणानि( भा. १-९-३९)- 'विजयरथकुटुम्ब' इत्यादौ— ''यमिह निरीक्ष्य हता गता: स्वरूपम्'' इति, (भा. ३-२-२१) 'स्वयं त्वसाम्यातिशयस्त्र्यधीश: स्वाराज्यलक्ष्म्याप्तसमस्तकाम:। बलिं हरद्भिश्चिरलोकपालै:, किरीटकोट्येडितपादपीठ:॥' इति; (भा.९-२४-६५), 'यस्याननं मकरकुण्डलचारुकर्ण, भ्राजत्कपोलसुभगं सुविलासहासम्। नित्योत्सवं न ततृपुर्दृशिभि: पिबन्त्यो, नार्य्यो नराश्च मुदिता: कुपिता निमेश्च''॥ इति; (भा. १०-२९-४०) 'का स्त्र्यङ्ग! ते कलपदामृतवेणुगीत-सम्मोहिताऽर्य्यचरितान्न चलेत्त्रिलोक्याम्। त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं, यद्गोद्विजद्रुममृगा: पुलकान्यबिभ्रन्', इति, (भा. ३-२-१२) 'यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्। विस्मापनं स्वस्य च सौभगर्द्धे: परं पदं भूषणभूषणाङ्गम्'॥ इति, (भा. १-३-२८) 'एते चांशकला: पुंस: कृष्णस्तु भगवान् स्वयमिति, (भा. १०-९०-४८) ''जयति जननिवासो देवकीजन्मवाद:'' इत्यादीनि श्रीभागवते।

अथ तत्तदुत्कर्षहेतुं स्वरूपलक्षणमाह— अखिलरसा वक्ष्यमाणा: शान्ताद्या द्वादश यस्मिन् तादृशममृतं परमानन्द एव मूर्त्तिर्यस्य स: (भा. १०-४१-२८)— 'आनन्दमूर्तिमुपगुह्ये'ति ( भा. १०-१४-२२) 'त्वय्येव नित्यसुखबोधतनावनन्ते' इति (भा. १०-४३-१७) 'मल्लानामशनिरि'त्यादि श्रीभागवतात्, 'तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसयेदि'ति श्रीगोपालतापनीभ्यश्च; तत्रापि रसविशेषविशिष्टपरिकरवैशिष्ट्येनाविर्भाववैशिष्ट्यं दृश्यते; अतएवादिरसविशेषविशिष्टसम्बन्धेन नितराम्; यथा— (भा. १०-४४-१४) 'गोप्यस्तप: किमचरन् यदमुष्य रूपं, लावण्यसारमसमोर्ध्वमनन्यसिद्धम्। दृग्भि: पिबन्त्यनुसवाभिनवं दुराप, मेकान्तधाम यशस: श्रिय ऐश्वरस्य॥' (भा १०-३२-१४), 'त्रैलोक्यलक्ष्म्येकपदं वपुर्दधद्' इति, (भा. १०-३३-६) ''तत्रातिशुशुभे ताभि:'' इत्यादि श्रीभागवते; तासु च गोपीषु मुख्या दश भविष्योत्तरे श्रूयन्ते, यथा— 'गोपाली पालिका धन्या विशाखाऽन्या धनिष्ठिका। राधाऽनुराधा सोमाभा तारका दशमी तथा।' इति; विशाखा ध्याननिष्ठिकेति पाठान्तरं, तथेति दशम्यपि तारकानाम्न्येवेत्यर्थ:, दशमीत्यप्येकं नाम वा,

स्कान्दप्रह्लादसंहिता-द्वारका-माहात्म्ये च- 'ललितोवाच' इत्यादौ मुख्यास्वष्टासु पूर्वोक्ताभ्योऽन्या ललिता-श्यामला-शैव्या-पद्मा-भद्राश्च श्रूयन्ते, पूर्वोक्तास्तु राधा-धन्या-विशाखाश्च। तदेतदभिप्रेत्य तत्रापि मुख्यमुख्याभिरुत्तरोत्तरवैशिष्ट्यं दर्शयितुमवरमुख्ये द्वे तारकापाली तावन्निष्कृष्य ताभ्यां वैशिष्ट्यमाह,- प्रसृमराभिः प्रसरणशीलाभिः रुचिभिः कान्तिभिः रुद्धे वशीकृते तारकापालिः येन सः, पालिकेति तु संज्ञायां कन्विधानात्, पालीतिदीर्घान्तोऽपि क्वचिद् दृश्यते। अथ मध्यममुख्याभ्यामाह,- कलिते आत्मसात्कृते श्यामा श्यामला ललिता च येन सः।

अथ परममुख्ययाऽह- राधायां (राधायाः) प्रेयानतिशयेन प्रीतिकर्त्ता,- 'इगुपधज्ञाप्रीकिरः कः' इति कर्त्तरि क-प्रत्ययविधेः। अतएवास्या एवासाधारण्यमालोक्य पूर्ववद्युग्मत्वेनापि नेयं निर्दिष्टा। अतस्तस्या एव प्राधान्यं पाद्मे कार्त्तिकमाहात्म्ये उत्तरखण्डे तत्कुण्डप्रसङ्गे- 'यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा। सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा'॥ इति, अतएव मात्स्यस्कान्दादौ शक्तित्वसाधारण्येनाभिन्नतया गणनायामपि तस्या एव वृन्दावने प्राधान्याभिप्रायेणाह- 'रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने' इति, तथा च बृहद्गौतमीये तस्या एव मन्त्रकथने- 'देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा' इति, ऋक्परिशिष्टश्रुतावपि- 'राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा' इति। अतएवाहुः- (भा. १०-३०-२८) 'अनयाराधितो नूनम्' इत्यादि।

अथ श्लेषार्थव्याख्या- तत्रैक श्लेषेणोपमां सूचयंस्तयाऽर्थविशेषं पुष्णाति; सर्वलौकिकालौकिकातीतेऽपि तस्मिन् लौकिकार्थविशेषोपमाद्वारा लोकानां बुद्धिप्रवेशः स्यादिति केनाप्यंशेनोपमेयं, सर्वतमस्तापजदुःखशमकत्वेन सर्वसुखदत्वेन च, तत्र पूर्ववन्निरुक्तिपर्य्यवसाने विचार्य्यमाणे राकापतेरेव विधुत्वं मुख्यं पर्य्यवस्यतीति सर्वतः प्रभावात् पूर्णतांशेन च। एवं सूर्य्यादीनां तापशमनत्वादि नास्तीति नोपमानयोग्यता, ततो विधुः सर्वत उत्कर्षेण वर्त्तते इति लभ्यते; वर्त्तमानप्रयोगांशस्तु प्रत्यृतुराजमेव तत्तद्रूपतयाऽनुवृत्तेः। एवं विशेष्ये साम्यं दर्शयित्वा विशेषणेऽपि साम्यं दर्शयति,- अखिलेत्यादिभिः, अखिलोऽखण्डो रस आस्वादो यत्र तादृशममृतं पीयूषं, तदात्मिकैव मूर्तिर्मण्डलं यस्य, अत्र शब्देन साम्यं रसनीयत्वांशेनार्थेनापि योज्यं;- तथा प्रसृमराभी रुचिभिः कान्तिभी रुद्धावृता तारकाणां पालिः श्रेणी येनेति पूर्ववन्निजकान्तिवशीकृतकान्तिमतीगणविराजमानत्वांशेनापि ज्ञेयम्।

तथा- 'श्यामा तु वागुलौ अप्रसूताङ्गनायां च तथा सोमलतोषधौ। त्रिवृता-शारिका-गुन्द्रा-निशा-कृष्णा-प्रियङ्गुषु॥' इति विश्वप्रकाशात्, कलितमूरीकृतं श्यामाया रात्रेर्ललितं विलासो येनेति रात्रिविलासित्त्वेनापि ज्ञेयम्; तथा राधायां विशाखानाम्न्यां तारायां प्रेयानधिकप्रीतिमान् ऋतुराजपूर्णिमायां तदनुगामित्वाद्, इति तदनुगतिमात्रसाध्यस्ववैभवविज्ञत्वांशेनापि ज्ञेयम्। उपमानस्य चैतानि विशेषणान्युत्कर्षवाचकानि- सूर्य्यादेस्तादृशमूर्त्तित्वाभावात् तारानाशनक्रियत्वेन तत्साहित्यशोभित्वाभावात् सुखविशेषकररात्रिविलासाभावात् तादृशविज्ञत्वानभिव्यक्तेश्चेति।

सिद्धान्तरसभावानां ध्वन्यलङ्कारयोरपि।
अनन्तत्वात्स्फुटत्त्वाच्च व्यज्यते दुर्गमं त्विह॥

लिखनं सर्वमेवास्मिन्नाशङ्कानाशगर्भितम्।
वृथात्वशङ्कया त्वत्र नावध्येयमबुद्धिभिः॥

ग्रन्थकृतां स्वारस्यात् , कतिचित्पाठास्तु ये मया त्यक्ताः। नात्रानिष्टं चिन्त्यं, चिन्त्यं तेषामभीष्टं हि॥ १॥

## अनुवाद

सनातन (चतुःसन में अन्तर्भूत सनातन) के समान जिनके ज्येष्ठ भ्राता श्रीमान् सनातन हैं, एवं श्रीवल्लभ जिनके अनुज हैं, ऐसे श्रीरूप गोस्वामीजी जीव का आश्रय हैं।

अनन्तर ग्रन्थकार श्रीरूपगोस्वामीचरण सकल भक्तगणों के हिताभिलाष के परवश होकर, निजहृदय के दिव्यकमलकोष में विलसित (विराजित) श्रीमद्भागवत रससमूह के द्वारा भक्तिरसामृत नामक अभिनव ग्रन्थ की रचना करने के लिए उसमें वर्णित विषय की सर्वोत्तमता निश्चायक व्यञ्जनापरक मङ्गलाचरण कर रहे हैं, एवं यह सम्पूर्ण ग्रन्थ ही मङ्गलस्वरूप है, इसको भी सूचित करने के लिए कहते हैं—

अखिलरसामृतमूर्त्तिः प्रसृमररुचिरुद्धतारकापालिः।
कलित श्यामा-ललितो, राधा प्रेयान् विधुर्जयति॥ १॥

विधु अर्थात् श्रीकृष्ण जय युक्त हो रहे हैं, उनमें समस्त प्रकार के उत्कर्ष विद्यमान हैं।

यद्यपि 'विधु' शब्द से कोषकार के 'श्रीवत्सलाञ्छन' वचन के द्वारा सामान्य भगवत् आविर्भाव का ही बोध होता है, तथापि 'समस्त दुःख निवारण करने के कारण, एवं सबको (अवतारों को) अतिक्रम करके जो विराजते हैं, अथवा समस्त सुखों को उत्पन्न करते हैं, समस्त वस्तुओं को उत्पन्न करते हैं, वह विधु हैं' इस निरुक्ति का पर्यवसान शास्त्रीय विचार करने से श्रीकृष्ण में पर्यवसित होता है। इसलिए विधु शब्द से श्रीकृष्ण को ही जानना होगा।

असुरों को भी मुक्ति प्रदान करने के कारण, अपने वैभव के द्वारा सबको अतिक्रमण करके विद्यमान होने के कारण, परम अपूर्व निजप्रेम महासुख पर्य्यन्त (एकता अनुकूलता रूप) सुख का विस्तारक होने के कारण, एवं स्वयं भगवान् होने के कारण श्रीकृष्ण में ही विधु शब्द का पर्यवसान होता है। अतएव अमरकोष में भी श्रीकृष्ण के प्राधान्य से ही भगवान् के नामों का उल्लेख हुआ है—'वसुदेव जिनके जनक हैं।'

विधु शब्द के ये सभी अर्थ 'जयति' शब्द के अर्थ द्वारा स्पष्ट हुए हैं। सब प्रकार से उत्कर्ष का अर्थ यही है। प्रकट समय में ही यह सम्भव है, अपर समय में नहीं, लोगों की इस प्रकार की आशङ्का निरास के लिए कहते हैं— 'जयति', इस 'वर्त्तमानकाल' प्रयोग से जानना होगा कि उत्कर्ष सूचक समस्त पदार्थ सर्वदा ही श्रीकृष्ण में विद्यमान हैं।

उपरोक्त कथित दुःख निवारणादि के विषय में प्रमाण समूह— भा. १-९-३९—

विजयरथकुटुम्ब आत्ततोत्रे
धृतहयरश्मिनि तच्छ्रियेक्षणीये।

भगवति रतिरस्तु मे मुमूर्षो-

र्यमिह निरीक्ष्य हता गताः सरूपम् ॥

अर्जुन के रथ की रक्षा में सावधान, जिन श्रीकृष्ण के बायें हाथ में घोड़ों की रास थी, और दाहिने हाथ में चाबुक, इन दोनों की शोभा से उस समय जिनकी अपूर्व छवि बन गयी थी, तथा महाभारत युद्ध में मरने वाले वीर जिनकी इस छवि का दर्शन करते रहने के कारण सारूप्य मोक्ष को प्राप्त किये थे, उन्हीं पार्थसारथी भगवान् श्रीकृष्ण में मुझ मरणासन्न की परम प्रीति हो।

भा. ३-२-२१—

स्वयं त्वसाम्यातिशयस्त्र्यधीशः,

स्वाराज्यलक्ष्म्याप्तसमस्तकामः।

बलिं हरद्भिश्चिरलोकपालैः,

किरीटकोट्येडितपादपीठः ॥

श्रीकृष्ण स्वयं भगवान् हैं; वे तीनों शक्तियों के अधीश्वर हैं। उनके समान भी कोई नहीं है, उनसे बढ़कर तो कौन होगा? वे अपने स्वतः सिद्ध परमानन्द स्वरूप ऐश्वर्य से ही सर्वदा पूर्णकाम हैं। इन्द्रादि असंख्य लोकपालगण नाना प्रकार के भेंट प्रभृति समर्पण पूर्वक करोड़ों-करोड़ों मुकुटों के अग्रभाग से उनके चरण रखने की चौकी की स्तुति किया करते हैं।

भा. ९-२४-६५—

यस्याननं मकरकुण्डलचारुकर्ण-

भ्राजत्कपोलसुभगं सविलासहासम्।

नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो

नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥

भगवान् के मकराकृति कुण्डल से शोभित मनोहर कर्णयुगल एवं उसके द्वारा दीप्यमान कपोलद्वय ऐसे सुन्दर लगते थे जैसे कि उनके विलास एवं हास युक्त मुखमण्डल में नित्य उत्सव हो रहा हो। सभी नर-नारी आनन्दपूर्वक नेत्रों से उनके वदनमण्डल की इस माधुरी का निरन्तर पान करते रहने पर भी तृप्त नहीं होते, किन्तु पलकें गिरने से उनके गिराने वाले निमि पर कुपित होते।

भा. १०-२९-४०—

का स्त्र्यङ्ग! ते कलपदामृतवेणुगीत-

सम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम्।

त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं

यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥

हे कृष्ण! तीनों लोकों में ऐसी कौन सी स्त्री है, जो सुमधुर पद और दीर्घ मूर्च्छनाओं से युक्त तुम्हारे वेणुगीत से सम्मोहित होकर, तथा इस त्रिलोकसुन्दर रूप जिसे देखकर गो, पक्षी, वृक्ष, हरिण

अथवा पशु भी पुलकित हो जाते हैं; उसे अपने नेत्रों से निहारकर आर्यमर्यादा (निजधर्म) से विचलित न हो जाय!

भा. ३-२-१२—

यन्मर्त्यलीलौपयिकं स्वयोग-
मायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धेः
परं पदं भूषणभूषणाङ्गम्॥

भगवान् ने अपनी योगमाया के बल से मर्त्यलीलोपयोगी जो विग्रह प्रकट किया था, वह इतना मनोहर था कि उससे स्वयं (वैकुण्ठ स्थित श्रीनारायण) को भी विस्मय हो जाता था। उसमें सौभाग्य सम्पत्ति की पराकाष्ठा थी। उनका अङ्ग आभूषणों का भी आभूषण था, अर्थात् उनका अङ्ग परम सौन्दर्ययुक्त था।

भा. १-३-२८—

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे॥

ये सब अवतार तो भगवान् के अंशावतार अथवा कलावतार हैं, परन्तु श्रीकृष्ण तो स्वयं भगवान् (अवतारी) हैं। जब लोग दैत्यों के अत्याचार से व्याकुल हो उठते हैं, तब ये सभी अवतार युग-युग में उन पीड़ित लोगों की रक्षा कर उन्हें सुखी करते हैं।

भा. १०-९०-४८—

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन् कामदेवम्॥

भगवान् श्रीकृष्ण ही समस्त जीवों के आश्रय स्थान हैं। यद्यपि वे सदा-सर्वदा सर्वत्र उपस्थित रहते हैं, फिर भी कहने के लिये उन्होंने देवकीजी के गर्भ से जन्म लिया है। यदुवंशी वीर पार्षदों के रूप में उनकी सेवा करते रहते हैं। उन्होंने अपने भुजबल से अधर्म का अन्त कर दिया है। परीक्षित्! भगवान् चराचर जगत् का दुःख स्वभाविक मिटाते रहते हैं। मन्द-मन्द मुस्कान से युक्त उनका मुखारविन्द व्रजस्त्रियों और पुरस्त्रियों के हृदय में प्रेमभाव का सञ्चार करता रहता है। वास्तव में सारे जगत् पर वही विजयी हैं। उन्हीं की जय हो! जय हो!।

उन उन उत्कर्ष हेतु स्वरूपलक्षण को कहते हैं—

'अखिल रसामृतमूर्त्तिः'— अखिल रस— शान्त, दास्य, सख्य, वात्सल्य और मधुर ये पाँच मुख्य हैं, और हास्य, करुण, रौद्र, वीर, भयानक, बीभत्स एवं अद्भुत ये सात गौण माने गये हैं। श्रीकृष्ण इन समस्त द्वादश रसों की परमानन्द मूर्त्ति हैं। उन्हीं का जयगान हो रहा है। इसका प्रमाण इस प्रकार है—

भा. १०।४१।२८-

दृष्ट्वा मुहुःश्रुतमनुद्रुतचेतसस्तं

तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः।

आनन्दमूर्तिमुपगुह्य दृशाऽऽत्मलब्धं

हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम्॥

मथुरा की स्त्रियाँ बहुत दिनों से भगवान् श्रीकृष्ण की अद्भुत लीलाएँ सुनती आ रही थीं। उनके चित्त चिरकाल से श्रीकृष्ण के लिये व्याकुल हो रहे थे। आज उन्होंने उनको देखा। भगवान् श्रीकृष्ण ने भी अपनी प्रेमभरी चितवन और मन्द मुसकान की सुधा से सींचकर उनका सम्मान किया। परीक्षित्! उन स्त्रियों ने नेत्रों के द्वारा भगवान् को अपने हृदय में ले जाकर उनके आनन्दमय स्वरूप का आलिङ्गन किया। उनका शरीर पुलकित हो उठा और बहुत दिनों की विरह-व्याधि शान्त हो गयी।

भा. १०-१४-२२-

तस्मादिदं जगदशेषमसत्स्वरूपं

स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।

त्वय्येव नित्यसुखबोधतनावनन्ते

मायात उद्यदपि यत् सदिवावभाति॥

इसलिये यह सम्पूर्ण जगत् स्वप्न के समान असत्य, अज्ञानरूप और दुःख पर दुःख देने वाला है। आप परमानन्द, परम ज्ञानस्वरूप एवं अनन्त हैं। यह आपकी माया से उत्पन्न एवं विलीन होने पर भी आपमें आपकी सत्ता से सत्य के समान प्रतीत होता है।

भा. १०-४३-१७-

मल्लानामशनिर्नृणां नरवरः

स्त्रीणां स्मरो मूर्तिमान्

गोपानां स्वजनोऽसतां क्षितिभुजां

शास्ता स्वपित्रोः शिशुः।

मृत्युर्भोजपतेर्विराडविदुषां

तत्त्वं परं योगिनाम्

वृष्णीनां परदेवतेति विदितो

रङ्गं गतः साग्रजः ॥

जिस समय भगवान् श्रीकृष्ण बलरामजी के साथ रंगभूमि में पधारे, उस समय वे पहलवानों को वज्रकठोर शरीर, साधारण मनुष्यों को नर-रत्न, स्त्रियों को मूर्तिमान् कामदेव, गोपों को स्वजन, दुष्ट राजाओं को दण्ड देने वाले शासक, माता-पिता के समान बड़े-बूढ़ों को शिशु, कंस को मृत्यु, अज्ञानियों को विराट् पुरुष, योगियों को परम तत्त्व और भक्त शिरोमणि वृष्णिवंशियों को अपने इष्टदेव जान पड़े। सबने अपने-अपने भावानुरूप क्रमशः रौद्र, अद्भुत, शृंगार, हास्य, वीर, वात्सल्य, भयानक, बीभत्स,

शान्त और प्रेमभक्तिरस का अनुभव किया।

श्री गोपाल तापनी में भी उक्त है—"कृष्ण ही परम देवता हैं। उनका ध्यान करे, उन्हीं में प्रीति करे।" ऐसा होने पर भी रसविशेषविशिष्ट-परिकरवैशिष्ट्य से ही आविर्भाव का वैशिष्ट्य देखने में आता है। सुतरां आदि रस— मधुर रस के सम्बन्ध से आविर्भाव की विशेषता है। यथा— भा. १०-४४-१४ में उक्त है—

गोप्यस्तप: किमचरन् यदमुष्य रूपं,
लावण्यसारमसमोर्ध्वमनन्यसिद्धम्।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप,-
मेकान्तधाम यशसः श्रिय ऐश्वरस्य॥

हे सखी! पता नहीं, गोपियों ने कौन-सी तपस्या की थी, जो नेत्ररूपी पात्रों से नित्य-निरन्तर इनकी रूप-माधुरी का पान करती रहती हैं। इनका रूप क्या है, लावण्य का सार! संसार में या उससे परे किसी का भी रूप इनके रूप के समान नहीं है, फिर बढ़कर होने की तो बात ही क्या है। सो भी किसी के सँवारने-सजाने से नहीं, गहने-कपड़े से भी नहीं, बल्कि स्वयंसिद्ध है। इस रूप को देखते-देखते तृप्ति भी नहीं होती, क्योंकि यह प्रतिक्षण नूतन होता जाता है। समग्र यश, सौन्दर्य और ऐश्वर्य इसी के आश्रित हैं। सखियों! परन्तु इसका दर्शन तो औरों के लिये बड़ा ही दुर्लभ है, वह तो गोपियों के ही भाग्य में सुलभ है।

भा. १०-३२-१४—

तत्रोपविष्टो भगवान् स ईश्वरो
योगेश्वरान्तर्हृदि कल्पितासनः।
चकास गोपीपरिषद्गतोऽर्चित-
स्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्॥

बड़े-बड़े योगेश्वर अपने योगसाधन से पवित्र किये हुए हृदय में जिनके लिये आसन की कल्पना करते रहते हैं, किन्तु फिर भी अपने हृदय-सिंहासन पर बिठा नहीं पाते, वही सर्वशक्तिमान् भगवान् यमुनाजी की रेती में गोपियों की ओढ़नी पर बैठ गये। सहस्र-सहस्र गोपियों के बीच में उनसे पूजित होकर भगवान् बड़े ही शोभायमान हो रहे थे। परीक्षित्! तीनों लोकों में, तीनों कालों में जितना भी सौन्दर्य प्रकाशित होता है, वह सब तो भगवान् के सौन्दर्य के बिन्दुमात्र का आभासभर है। वे उसके एकमात्र आश्रय हैं।

भा. १०-३३-७—

तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः।
मध्ये मणीनां हैमानां महामरकतो यथा॥

यमुनाजी की रमणरेती पर व्रजसुन्दरियों के बीच में भगवान् श्रीकृष्ण की बड़ी अनोखी शोभा हुई। ऐसा जान पड़ता था, मानो अगणित पीली-पीली दमकती हुई सुवर्ण-मणियों के बीच में ज्योतिर्मयी

नीलमणि चमक रही हो।

इस प्रकार श्रीमद्भागवत में उनका उत्कर्ष वर्णित है। उन गोपियों के बीच में मुख्या दस हैं, इसका वर्णन भविष्योत्तर पुराण में इस प्रकार है– "गोपाली, पालिका, धन्या, विशाखा, धनिष्ठिका, राधा, अनुराधा, सोमाभा, तारका और दशमी। इसमें "विशाखा ध्यान निष्ठिका" इस प्रकार पाठान्तर है। दशमी का नाम तारका है, अथवा दशमी एक अन्य गोपी का नाम है।

स्कन्द पुराण की प्रह्लाद संहिता के द्वारका माहात्म्य में उक्त है–"ललिता ने कहा" इत्यादि, मुख्य आठ के मध्य में पहले कहे गये नामों से अलग ललिता-श्यामला-शैव्या-पद्मा-भद्रा के नाम हैं। पहले कहे गये नाम राधा, धन्या, विशाखा हैं।

इसी अभिप्राय से मुख्य मुख्य से उत्तरोत्तर के वैशिष्ट्य को दिखाने के लिए अवरमुख्य दो तारका व पाली को निकालकर इन दोनों के साथ श्रीकृष्ण के वैशिष्ट्य को दिखाते हैं। प्रसृमराभिः– प्रसरणशील रुचि कान्ति के द्वारा रुद्ध वशीभूत किये हैं तारका व पाली को, वह विधु श्रीकृष्ण हैं।

पालि शब्द के उत्तर संज्ञा में कन् प्रत्यय करने से पालिका शब्द बनता है। कहीं पर दीर्घ ईरामान्त पाली शब्द भी देखने में आता है।

अनन्तर मध्यम मुख्य को कहते हैं– कलिते आत्मसात्कृते– श्यामा-श्यामला ललिता को जिन्होंने अपनाया है, वह विधु (श्रीकृष्ण) उत्कर्ष मण्डित हो रहा है।

अब परम मुख्या गोपिका की बात कहते हैं– राधायाम्– राधा के प्रति अतिशय प्रीतिकर्त्ता हैं। सूत्र को कहते हैं– 'इगुपधज्ञाप्रीकिरः कः' कर्त्तरि वाच्य में 'क' प्रत्यय होता है, अतएव राधा को उनके असाधारण होने के कारण पहले की तरह दो-दो के साथ न कहकर एकक कहा गया है– राधा प्रेयान् विधुर्जयति। इसलिए इनके प्राधान्य को कार्त्तिक माहात्म्य में उनके कुण्ड के प्रसङ्ग में इस प्रकार कहा गया है–

विष्णु अर्थात् कृष्ण की प्रिया जिस प्रकार राधा हैं, उस प्रकार उनका कुण्ड राधाकुण्ड भी प्रिय है, कारण समस्त गोपियों में 'राधा' कृष्ण की अत्यन्त प्रिया हैं।

अतएव मत्स्यपुराण एवं स्कन्दपुराण में श्रीकृष्ण की शक्तियों के मध्य में साधारण रूप से वर्णन करने पर भी श्रीवृन्दावन में उनका प्राधान्य वर्णन करने के लिए कहा गया है– "द्वारका में रुक्मिणी श्रेष्ठा हैं, किन्तु वृन्दावन नामक वन में श्रीराधा का ही प्राधान्य है।" बृहद्गौतमीय ग्रन्थ में श्रीराधा के मन्त्र कथन के समय कहा गया है– " देवी राधिका परदेवता कृष्णमयी हैं; वह सर्वलक्ष्मीमयी, सर्वकान्ति एवं श्रीकृष्णाकर्षणकारिणी हैं।" ऋक्परिशिष्ट श्रुति में भी वर्णित है– "राधा के साथ माधव, एवं माधव के साथ राधिका अत्यन्त शोभित हैं।" अतएव श्रीमद्भागवत के १०-३०-२८ में उक्त है–

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः॥

अवश्य ही सर्वशक्तिमान् भगवान् श्रीकृष्ण की यह आराधिका होगी। इसीलिये इस पर प्रसन्न होकर हमारे प्राणप्यारे गोविन्द हमें छोड़कर इसे एकान्त में ले गये हैं।

श्लोक की श्लेषार्थ व्याख्या इस प्रकार है— उस एक ही श्लेष के द्वारा उपमा को सूचित करते हुए उससे विशेष अर्थ प्रकाश करते हैं। समस्त लौकिकातीत होने पर भी उपमेय के कुछ अंश में लोगों की बुद्धि प्रविष्ट हो, इसलिए लौकिक अर्थ विशेष उपमा के द्वारा वर्णन किया गया है। समस्त तम-अन्धकार एवं दिन के ताप से जो दुःख होता है, उसका निवारक होकर सबको सुखी करने के कारण पूर्ववत् विचार करने से राकापति (चन्द्रमा) में ही विधुत्व मुख्य रूप से पर्य्यवसित होता है। यह सर्वत्र प्रभावशीलता एवं पूर्णता अंश से होता है।

सूर्य प्रभृति में तापशमत्व नहीं है, इसलिए इनमें उपमान होने की योग्यता नहीं है। इसलिए विधु का ही सर्वोत्कर्ष प्रतिपादित होता है। यहाँ पर 'जयति' वर्त्तमान में प्रयोग हुआ है। इसका अर्थ है— प्रत्येक ऋतुराज वसन्त में इस प्रकार होता है। दो मास का नाम (चैत्र, वैशाख) मधु व माधव है, वसन्त पूर्णिमा में चन्द्र का पूर्ण उत्कर्ष होता है।

विधुर्जयति— विधु विशेष्य है, अन्यान्य पद विशेषण हैं। विशेष्य के साथ समता दिखाकर विशेषण में भी समता को दिखाते हैं। अखिलरसामृतमूर्त्ति—आदि में, अखिल-अखण्ड रस का आस्वादन जहाँ पर है, उस प्रकार अमृत पीयूष। उससे बनी हुई मूर्त्ति है जिसकी। यहाँ पर शब्द से समता दिखाकर, अर्थ जो रसनीय, आस्वादनीय है, के साथ भी समता योज्य है। जिनकी प्रसृमराभी (प्रसरणशील) रुचि (कान्ति, चाँदनी) के द्वारा रुद्ध आवृत है तारकाओं की पालि श्रेणी, इस प्रकार विधु जय युक्त हो रहे हैं। एक अंश से समता को पहले की तरह जानना होगा, अर्थात् पूर्ववत् निजकान्ति से वशीकृत कान्तिमतीगण के साथ विराजमानता अंश के साथ समता को जानना होगा।

श्यामा शब्द का अर्थ दिखाते हैं— विश्व प्रकाश कोष में उक्त है— "श्यामा तु वागुलौ अप्रसूताङ्गनायां च तथा सोमलतौषधौ। त्रिवृता शारिका गुन्द्रा निशा कृष्णा प्रियङ्गुषु॥" 'कलित श्यामा' श्लोक उल्लिखित अंश में जो श्यामा शब्द है, उसका अर्थ है— रात्रि (निशा)।

कलितं विस्तार किया श्यामा रात्रि का ललित-विलास जिन्होंने। चन्द्र अर्थात् विधु का विलास रात्रि में ही होता है, इस प्रकार जानना होगा । इस प्रकार राधा विशाखा शब्द से कही जाती है। विशाखा नक्षत्र से जो मास होता है, उसको वैशाख कहते हैं। राधा अर्थात् विशाखा नामक नक्षत्र से पूर्णिमा होने के कारण विशाखा नामक तारा में अत्यधिक प्रेयान् अर्थात् अधिक प्रीतिमान् है। ऋतुराज पूर्णिमा में विशाखा नक्षत्र-तारा का अनुक्रमण होता है। वैभव विज्ञता अंश में उनका अनुगमन आवश्यक है, इसको जानना होगा, अर्थात् विशाखा नक्षत्र युक्त पूर्णिमा में अत्यधिक सौन्दर्य्य प्रकाश होता है।

उपमान में जो विशेषण समूह हैं वे सब उत्कर्ष वाचक हैं। सूर्य्य आदि की इस प्रकार मूर्त्ति सम्भव नहीं है। सूर्य प्रभृति का तारा नाशन स्वभाव होने के कारण उन सबके साथ सहभाव सम्भव नहीं है। सुख विशेषकर रात्रि विलास सम्भव न होने के कारण सूर्य का ग्रहण नहीं हुआ है। सूर्योदय दिन में होता है, रात्रि में नहीं। चन्द्र के समान रसास्वादन की विज्ञता सूर्य में नहीं है।

इस ग्रन्थ में सिद्धान्त, रस एवं भावों का, तथा ध्वनि व अलंकारों का अनन्त प्रकाश होने के कारण एवं पद्य सुस्पष्ट होने से यहाँ पर दुर्गम अंश का प्रकाश किया गया है, इसलिए इस टीका का नाम दुर्गमसङ्गमनी है। इससे समस्त शङ्कायें दूर होंगी।

यहाँ पर ग्रन्थकार की सहमति से ही पाठ का परिवर्त्तन किया गया है। यह प्रतिकूल नहीं है, अनुकूल है॥ १ ॥

## श्रीश्रीलकृष्णदासकविराजगोस्वामिपदाश्रित-
## श्रील-मुकुन्ददास-गोस्वामिपादकृता—
## अर्थरत्नाल्प-दीपिका

लोकं गोप्यं सुमधुररसं स्वादयन् योऽवतीर्णो, धन्ये गौड़े व्रजपतिसुतः कृष्णचैतन्यनामा।
आचाण्डालात् सकलजगति प्रेमभक्तेः प्रदाता, कारुण्याब्धिर्वसतु हृदि स श्रीशचीनन्दनो मे॥ क॥

श्रीराधिका-माधविका-वसन्तं व्रजाक्षिपद्मबन्धुम्।
रसज्ञभक्तौघ-चकोरचन्द्रं नमाम्यहं नन्दतनूजमीश्वरम्॥ ख॥

दुर्गमं सुगमं तत्वं भवेद् यस्य प्रसादतः।
राधाकृष्णरसे मग्नं श्रीमद्रूपं नमामि तम्॥ ग॥

रागानुगामि-भजनोल्लासमानसानां, श्रीराधया सह सदा स्मरतां व्रजेन्दुम्।
श्रीरूपपादकमलाश्रित-चेतसां मे, चित्तं सतां मधुकरीयतु पादपद्मे॥ घ॥

अथ श्रीमद्ग्रन्थकारः श्रीश्रीचैतन्यदेवस्य कृपया प्रकाशितश्रीकृष्णरसवर्णनात्मकतयात्यद्भुततमं भक्तिरसामृतसिन्धुनामानं ग्रन्थं सर्वभागवतलोकहिताभिलाषपरवशतया कुर्वन् प्रथमं तावत् स्वाभीप्सितपरिपूर्त्यौ स्वेष्टदेव सङ्कीर्त्तनरूपं मङ्गलमाचरति, तेनैव च ग्रन्थार्थश्च सङ्क्षेपतो दर्शयति,— अखिलेति। विधुः श्रीकृष्णो जयति— मायाशक्त्यानन्तकोटिब्रह्माण्डानि, चिच्छक्त्याख्यस्वरूपशक्त्या वैकुण्ठादिमहालीलाः स्वरूपेण प्राभव-वैभव-महावस्थाख्य-स्वांशविलासान्, स्वशक्त्यावेशेन पृथ्वादिशक्त्यावेशावतारान् विदधाति करोति प्रकाशयतीति विधुरिति 'विधु'शब्दस्यासङ्कोचवृत्या तत्रैव पर्य्यवसानम्।

तस्यैवावतारावतारावतारिनामंशित्वाच्च, 'जयति' इति पदेन— स्व-स्व-लोकेषु तत्तत्परिकरसम्बन्धतो गुणान् दर्शयद्भ्यस्तत्तदवतारि—नायकेभ्य उत्कर्षेण द्वारकादौ मथुरादौ गोकुले पूर्णान् पूर्णतरान् पूर्णतमान् गुणान् क्रमेण प्रकाशयन् सदा विराजत इत्युक्तम्; नमस्कारश्चाक्षिप्तस्तं प्रति नतोऽस्मीति।

तत्र स्वयं भगवत्व-सर्व्वावतारादिकारणत्वयोः— 'ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः। अनादिरादिर्गोविन्दः सर्व्वकारणकारणम्' इत्यादि ब्रह्मसंहितादिवचनानि प्रमाणम्।
स्व-स्व-परिकरैर्गोकुलादिषु सदा विराजमानत्वे— (भा. १-१०-२६) 'अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम्। यदेष पुंसामृषभः प्रियः श्रियः स्वजन्मना चङ्क्रमणेनाञ्चति'

इत्यादि वचनानि।

ननु गोकुल-मथुरादिषु बहुविधभक्तैरेकः कथं सदावर्त्तते, बाल्य-पौगण्डभाक्-किशोर-स्वरूपेषु कतमोऽयं प्रकाशस्तत्राह— अखिलेति। अखिलानां पञ्चविधानां भक्तानां ये रसाः शान्तः प्रीतः प्रेयान् वत्सलो मधुरश्चेति पञ्च मुख्याः, हासोऽद्भुतो वीरः करुणो रौद्रो भयानको बीभत्स इति सप्त गौणाः— एवं द्वादशभेदास्तएव ह्लादिनीशक्तिवृत्तिरूपत्वादमृतः परमानन्दस्तद्रूपा मूर्त्तिर्यस्य;—सर्व्वरसानां विषयत्वादाश्रयत्वाच्च तन्मूर्त्तित्वं तस्य नानाप्रकाशवत्वेन धर्मी किशोर एव सर्वभक्तसुखहेतुरित्यर्थः। धर्मित्वेऽप्यस्यासमानोर्द्ध्वप्रेमरूपगुणाया श्रीराधायाः सुखार्थं चेष्टादीनि बोधयितुं— प्रसृमरेत्यादिपदत्रयम्। प्रसृमराभी रुचिभी रुद्धे वशीकृते तारकापाली येन सः, तारकापाल्योः कथनं श्रीराधाया अन्यविपक्षतटस्थ-व्रजदेवीनामुपलक्षणम्, राधया सह स्वच्छन्दविहाराय रसोपकरणभूता वशीकृता इत्यर्थः। कलिते पूर्व्वोक्ताभ्यां परमप्रेमास्पदतया गृहीते श्यामा-ललिते येन सः; श्यामायाः कथनं श्रीराधाया अन्यसुहृत्पक्षाणामुपलक्षणं, 'ललिताया'स्तु तदन्यसखीनाम्; तत्रापि सुहृत्पक्षाणां सखीनां कृष्णे प्रेमाधिक्याल्ललिताया उत्तरत्रोक्तिः। प्रेयान् राधायामतिशयेन प्रीतिकर्त्ता,—अतएवास्या असाधारण्यमालोक्य पूर्व्ववद् युग्मत्वेन नेयं निर्द्दिष्टा; अस्याः सम्बन्धे कृष्णस्य सौन्दर्य्यादिगुणानां परमोत्कर्षश्च बोधितः, पूर्णप्रेम्णैव पूर्णप्रकाशौचित्यात्; श्रीराधायाः सर्वव्रजदेवीभ्यः प्रेमरूपगुणैराधिक्यं यथोज्ज्वलनीलमणौ— (राधा—२), 'महाभावस्वरूपेयं गुणैरतिवरीयसी' इति, पाद्मे च— 'यथा राधा प्रियाविष्णोस्तस्याः कुण्डं प्रियं तथा। सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा' इति, अतएव मात्स्ये— 'रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने' इति, तथा च बृहद्गौतमीये तस्या मन्त्र कथने— 'देवीकृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा'। इति, तत्सम्बन्धे कृष्णगुणोत्कर्षो यथा ऋक्परिशिष्ट श्रुतौ— 'राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा' इति।

अत्र चन्द्रवर्णनरूपो द्वितीयोऽर्थोऽप्राकरणिकत्वाद् व्यङ्ग्यः; तत्पक्षे व्याख्या,— विधुनोति खण्डयति तापजदुःखमिति निरुक्तेरसङ्कोचेन पूर्णचन्द्रो लभ्यते; जयति तापात्मकात् सूर्य्यादेरुत्कर्षेण वर्त्तते; प्रतिपूर्णिमायां तत्तद्रूपतया प्रकाशाद् वर्तमान-प्रयोगः। अखिलरसा मधुराद्या यस्मिंस्तदमृतमयी मूर्त्तिर्मण्डलं यस्य सः, तमस्तापजदुःखशान्तिपूर्व्वकसर्वजनसुखहेतुरित्यर्थः, तथा, प्रसृमराभी रुचिभिर्ज्योत्स्नाभी रुद्धा आवृता तारकाणां पालिर्येन, तथा कलितं प्रकटितं श्यामाया रात्रेर्ललितं विलासो येन; तथा राधाप्रेयान् राधायां विशाखानाम्न्यां तारायां प्रेयानधिकप्रीतिमानिति। ऋतुराजपूर्णिमायां तदनुगामित्वाच्चन्द्रस्य परमोत्कर्षश्च दर्शितः। अत्रोपमालङ्कारः शब्दशक्तिमूलानुरूपध्वनिः।

यत्प्रसादं विनात्रत्या अर्थाः सर्वैः सुदुर्गमाः।
स्वयं स्फोरयतात् प्रीतः श्रीमद्रूपः स तान् मयि॥ १॥

### अनुवाद

अति गोपनीय, एकता-अनुकूलतारूप सुमधुर भक्तिरस का आस्वादन जगतवासियों को कराने

के लिए, धन्य गौड़-देश में अवतीर्ण होकर चाण्डाल पर्यन्त समस्त प्राणियों को प्रेम भक्ति जिन्होंने प्रदान किये हैं, करुणासागर व्रजेन्द्रनन्दन श्रीकृष्ण, जो शचीनन्दन-कृष्णचैतन्य नाम धारण किये हैं, वह मेरे हृदय में निरन्तर निवास करें ॥ क ॥

जो श्रीराधिका, माधविका एवं समस्त व्रजजनों के नयन कमलों के लिए पद्मबन्धु सूर्य हैं, तथा रसज्ञ भक्त समूह चकोर के लिए चन्द्र स्वरूप हैं, मैं उन नन्दनन्दन ईश्वर श्रीकृष्ण को नमस्कार करता हूँ॥ ख ॥

जिनकी प्रसन्नता से दुर्गम तत्त्व भी सुगम होता है, राधाकृष्ण के भक्ति रस में जो निमग्न हैं, उन श्रीमद्रूपगोस्वामीजी को मैं नमस्कार करता हूँ॥ ग ॥

अनन्तर, रागानुगीय भक्तगणों को प्रणाम करते हुए कहते हैं- जिनके मन रागानुगीय भजन में उल्लसित हैं, श्रीराधा के साथ व्रजेन्दु कृष्ण का सदा स्मरण करते रहते हैं, और जिनके चित्त श्रीरूप गोस्वामीपाद के चरणकमल का आश्रय करते हैं, इस प्रकार भक्तगणों के चरण कमलों में मेरा चित्त मधुकर बने॥ घ ॥

श्रीमद्ग्रन्थकार श्रीरूपगोस्वामीचरणजी श्रीश्रीचैतन्यदेव की कृपा से प्रकाशित, श्रीकृष्णरस वर्णनात्मक होने के कारण, अति अद्भुत भक्तिरसामृतसिन्धु नामक ग्रन्थ, समस्त भागवतलोकों का हिताभिलाषी होकर रचना करने के लिए प्रथम निज अभीप्सित परिपूर्त्ति हेतु इष्ट देवता का संकीर्त्तनरूप मङ्गलाचरण करते हैं, तथा उससे ही ग्रन्थ के समस्त विषय को संक्षेप में वर्णित करते हैं-

अखिलरसामृतसिन्धुः प्रसृमररुचिरुद्धतारकापालिः।
कलितश्यामाललितो, राधा प्रेयान् विधुर्जयति ॥

विधुः श्रीकृष्णो जयति- श्रीकृष्ण रूप विधु जययुक्त हो रहे हैं। विधु- श्रीकृष्ण किस प्रकार से उत्कर्ष प्राप्त हैं? उसको कहते हैं- माया शक्ति के द्वारा अनन्त कोटि ब्रह्माण्ड की रचना करते हैं। चित्शक्ति नामक स्वरूपशक्ति के द्वारा वैकुण्ठादि महालीला करते हैं। स्वरूप के द्वारा प्राभव, वैभव, महावस्थ नामक स्वांश विलास करते हैं। स्वशक्त्यावेश के द्वारा पृथु आदि शक्त्यावेश अवतार समस्त कार्य करते हैं, विधान करते हैं, प्रकाश करते रहते हैं, इसलिए उनको विधु कहते हैं। विधु शब्द का असङ्कोच वृत्ति से इस प्रकार पर्यवसान होता है। उन्हीं को अवतार तथा अवतार-अवतारियों का अंशी कहते हैं।

'जयति' पद के द्वारा निज-निज लोकों में उन-उनके परिकरों के सम्बन्ध में जो गुण हैं, उन सबों से अत्यधिक गुण दिखाने के लिए द्वारका, मथुरा, गोकुल में पूर्ण, पूर्णतर, पूर्णतम गुण समूह को क्रमशः प्रकाश करते हुए उत्कर्ष मण्डित हो रहे हैं। अर्थात् सर्वोत्कर्षेण विराजमान हैं, इसलिए विधु श्रीकृष्ण ही हैं। नमस्काररूप मङ्गलाचरण भी सर्वोत्कर्ष स्वीकार करने से ही होता है। अर्थात् उनको मैं नमस्कार करता हूँ।

सर्व उत्कर्ष के लिए स्वयं भगवान् होना, समस्त अवतारादि का कारण होना आवश्यक है, उसका प्रमाण ब्रह्मसंहिता के वचन से देते हैं-

"ईश्वरः परमः कृष्णः सच्चिदानन्द विग्रहः।
अनादिरादिर्गोविन्दः सर्वकारण कारणम् ॥"

अर्थात् श्रीकृष्ण परम ईश्वर हैं, सच्चिदानन्द विग्रह हैं, अर्थात् उनकी श्रीमूर्त्ति नित्यज्ञानानन्द स्वरूप है। आप स्वयं अनादि हैं, अतः समस्त तत्त्वों के आदि हैं। आप सबके मूल हैं, आपके पहले अपर कोई तत्त्व नहीं हैं। आपका दूसरा नाम श्रीगोविन्द है। आप अनन्त जगत के समग्र कारणों के मूल कारण स्वरूप हैं।

निज-निज परिकरों के साथ गोकुलादि में सदा विराजते हैं। इसका प्रमाण श्रीमद्भागवतमहापुराण (१-१०-२६) में है–

अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम्।
यदेष पुंसामृषभः प्रियः श्रियः स्वजन्मना चङ्क्रमणेनाञ्चति॥

अहो! यह यदुवंश परम प्रशंसनीय है, क्योंकि लक्ष्मीपति पुरुषोत्तम श्रीकृष्ण ने जन्म लेकर इस वंश को सम्मानित किया है। यह पवित्र मधुवन (व्रजमण्डल) भी अत्यन्त धन्य है, जिसे इन्होंने अपने शैशव एवं किशोरावस्था में घूम-फिरकर सुशोभित किया है।

गोकुल मथुरा आदि में अनेक प्रकार भक्तों के साथ सदा एकक कैसे रहते हैं? बाल्य, पौगण्ड, कैशोर स्वरूप के मध्य में कौन सा यह प्रकाश है? इसके उत्तर में कहते हैं– अखिलरसामृतमूर्तिः। अखिल– पञ्चविध भक्तों के मध्य में जो रस हैं, उसमें पाँच मुख्य हैं– शान्त, दास्य, सख्य, वात्सल्य और मधुर। हास, अद्भुत, वीर, करुण, रौद्र, भयानक और बीभत्स ये सात गौण हैं। ये बारह प्रकार के रस हैं। ये सब ह्लादिनी शक्तिवृत्ति रूप होने के कारण अमृतमय, परमानन्दस्वरूप हैं, और यही मूर्त्ति है जिनकी; वे समस्त रसों का विषय एवं आश्रय रूप मूर्त्ति हैं। उनके अनेक प्रकाश होने पर भी धर्मी किशोर ही समस्त भक्तों का सुख हेतु है।

धर्मी होने पर भी असमानोर्द्ध्व प्रेमरूपगुणसम्पन्न श्रीराधा के सुख के लिए चेष्टा आदि का बोध कराने के लिए प्रसृमर आदि तीन पद दिये गये हैं। प्रसृमर रुचि के द्वारा रोध किये हैं, वशीभूत किये हैं, तारका पाली को जिन्होंने वे। तारका पाली कथन से अन्य विपक्ष तटस्थ व्रजदेवियों को भी जानना होगा। राधा के साथ स्वच्छन्द विहार के लिए रसोपकरणभूता वशीकृता, इस प्रकार अर्थ है। कलिते– पूर्वोक्त से परम प्रेमास्पदरूप से ग्रहण किये हैं– श्यामा ललिता को जिन्होंने। श्यामा शब्द से श्रीराधा के अन्य सुहृत पक्ष को जानना होगा। ललिता से अन्य सखियों को भी जानना होगा। वहाँ पर सुहृत पक्ष की सखियों का कृष्ण के प्रति प्रेमाधिक्य होने के कारण आगे ललिता का कथन हुआ है।

प्रेयान्– राधा के प्रति अतिशय प्रीतिकर्त्ता हैं, अतएव इनका असाधारण्य देखकर पहले के तरह युग्मरूप में नहीं कहा गया है, एकक कहा गया है। श्रीराधा के सम्बन्ध में श्रीकृष्ण के सौन्दर्य आदि गुणों का प्रकाश भी परमोत्कर्ष रूप में ज्ञापित किया है।

समस्त व्रजदेवियों के मध्य में प्रेमरूप गुण के द्वारा आधिक्य श्रीराधा में ही है। इसका विवरण उज्ज्वलनीलमणि ग्रन्थ के राधा प्रकरण में है– "महाभावस्वरूपेयं गुणैरतिवरीयसी" यह राधा महाभाव स्वरूपा हैं, और गुणों से भी सर्वश्रेष्ठ हैं।

पद्म पुराण में भी उक्त है–

"यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा।
सर्वगोपीषु सैवैका विष्णोरत्यन्त वल्लभा॥"

राधा जिस प्रकार श्रीकृष्ण की प्रिया हैं, उनका कुण्ड भी उसी प्रकार प्रिय है। समस्त गोपियों के बीच में एकमात्र श्रीराधा ही श्रीकृष्ण को अत्यन्त प्रिय हैं।

मत्स्य पुराण में उक्त है– "रुक्मिणी द्वारकायान्तु राधा वृन्दावने वने" द्वारका में रुक्मिणी जिस प्रकार प्रिय हैं, वन वृन्दावन में श्रीराधा भी उसी प्रकार प्रिय हैं।

उनके मन्त्र कथन प्रसङ्ग में बृहद्गौतमीय में उक्त है–

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥"

देवी राधिका परदेवता कृष्णमयी हैं। वह सर्वलक्ष्मीमयी, सर्वकान्ति, सम्मोहिनी पराशक्ति हैं।

उनके सम्बन्ध में कृष्ण गुणोत्कर्ष का वर्णन ऋक् परिशिष्ट श्रुति में है–"राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा" इति। अर्थात् राधा के साथ माधव शोभित हैं और माधव के साथ राधिका शोभित हैं।

यहाँ पर चन्द्र वर्णन रूप द्वितीय अर्थ अप्राकरणिक होने के कारण व्यञ्जना वृत्ति लभ्य है। उस पक्ष में व्याख्या इस प्रकार है– विधुनोति खण्डयति तापजदुःखं– जो ताप जन्य दुःख का नाश करता है। इस प्रकार असंकोच वृत्ति से पूर्ण चन्द्र का बोध होता है। जयति शब्द से सर्वोत्कर्ष का बोध होता है, वह सूर्यादि जनित ताप निवारक होने के कारण सूर्य से भी उत्कर्ष युक्त है।

प्रत्येक पूर्णिमा में पूर्णतया प्रकाश होने के कारण जयति वर्त्तमान काल का प्रयोग हुआ है।

अखिलरस मधुर प्रभृति हैं जिसमें, इस प्रकार अमृतमयी मूर्त्तिमण्डल है जिनकी, वह तमः तापज दुःख शान्ति पूर्वक सर्वजन सुख हेतुभूत है इस प्रकार अर्थ होता है।

तथा प्रसरणशील ज्योत्स्ना के द्वारा रुद्ध आवृत किया है तारा श्रेणी को जिन्होंने वह । तथा रात्रि के ललित विलास को प्रकट किया है जिन्होंने वह चन्द्र।

राधा प्रेयान् – राधा अर्थात् विशाखा नामक तारा में प्रेयान् अतिशय प्रीतिकर्त्ता है। ऋतुराज पूर्णिमा में उसका आगमन होने के कारण वैशाखी पूर्णिमा होती है। उस समय चन्द्र की पूर्णता एवं अत्यन्त कान्ति भी होती है।

यहाँ पर श्लोक में उपमालङ्कार है, एवं शब्द शक्तिमूलक अनुरणनरूप ध्वनि भी है।

जिनकी प्रसन्नता के बिना यहाँ के सुदुर्गम अर्थ समूह का बोध होना सम्भव नहीं है, प्रसन्न होकर जो सुदुर्गम अर्थ समूह का बोध भी कराते हैं, श्रीमान् श्रीरूपगोस्वामी मेरे प्रति प्रसन्न हों॥ १॥

## श्रील-विश्वनाथचक्रवर्त्तिपाद-विरचिता–
## भक्तिसार-प्रदर्शिनी टीका
### श्रीकृष्णाय नमः

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे। यो धत्ते सर्वभूतानामभवायोशतीः कलाः॥ क॥

श्रीचैतन्यमुखोद्‌गीर्णा हरेकृष्णेति वर्णकाः। मज्जयन्तो जगत् प्रेम्नि विजयन्तां तदाह्वयाः॥ ख॥

अथ सोऽयं निखिल-सहृदय-हृद्यसमुदयहृदयालङ्कारः सकलकविमण्डलाखण्डलो भगवन्निर्देश-परम-मङ्गल-सुधा-धारा-परम्परया निर्मीयमाणे प्रत्यूहतापानुद्‌गमकेऽप्यस्मिन् ग्रन्थे सदाचारसम्माननार्थमवश्यकर्त्तव्यमङ्गलाचरणमप्यनुषञ्जयति, अखिलेति। विधुः-श्रीकृष्णो जयति...... सर्वोत्कर्षेण वर्त्तते, यद्यपि 'विधुः श्रीवत्सलाञ्छनः' इत्यभिधानात् विधुशब्दः सर्वभगवत्पर एव, तथापि राधाप्रेयानित्याद्यसाधारणविशेषणैः श्रीकृष्णमेव प्रतिपादयतीति ज्ञेयम्।

तदुत्कर्षहेतुं स्वरूपलक्षणमाह,— अखिला रसा वक्ष्यमाणाः शान्ताद्या द्वादश यस्मिन् तादृशममृतं परमानन्द एव मूर्त्तिर्यस्य सः। तत्रापि रसविशेष-विशिष्टपरिकरवैशिष्ट्येनाविर्भाववैशिष्ट्यं दृश्यते; अतएवादिरस-विशेष-विशिष्ट-परिकर-सम्बन्धेन नितराम्; यथा दशमे (भा. ३-४४-१४) गोप्यस्तपः किमचरन् यदमुष्य रूपं, लावण्यसारमसमोर्द्ध्वमनन्यसिद्धम्। दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य॥'' इति, (भा. १०-३२-१४) ''त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधत्'' इत्यादि, (भा. १०-३३-६) तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः इत्यादि। तासु गोपीषु मुख्या दश भविष्योत्तरे श्रूयन्ते,— ''गोपालीपालिकाधन्या विशाखान्या धनिष्ठिका। राधानुराधा सोमाभा तारका दशमी तथा।'' इति,— तथेति दशम्यपि तारकानाम्न्येवेत्यर्थः, दशमीत्येकं नाम वा; स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये च, — 'ललितोवाच' इत्यादौ मुख्यास्वष्टसु पूर्वोक्ताभ्योऽन्या ललिता-श्यामला-शैव्या-पद्मा-भद्राश्च श्रूयन्ते; पूर्वोक्तास्तु राधाधन्याविशाखाश्च। तदेतदभिप्रेत्य तत्रापि मुख्यामुख्याभिरुत्तरोत्तरवैशिष्ट्यं दर्शयितुमवरमुख्यात्वं (मुख्ये द्वे) तावन्निष्कृष्य ताभ्यां श्रीकृष्णस्य वैशिष्ट्यमाह,— प्रसृमराभिः प्रसरणशीलाभिः रुचिभिः कान्तिभिः रुद्धे वशीकृते तारका-पालीनाम्न्यौ यूथेश्वर्यौ येन (सः)। अथ मध्यममुख्याभ्यामाह,— कलिते स्वीकृते श्यामा-ललिते येन सः। अथ परममुख्याया वैशिष्ट्यमाह,— राधायाः प्रेयान् अतिशयेन प्रीतिकर्त्ता,— इगुपधज्ञाप्रीकिरः क' इति कप्रत्ययविधेः। अतएवास्याः एवासाधारण्यमालोक्य पूर्ववद् युग्मत्वेनापि नेयं निर्दिष्टा। अतस्तस्या एव प्राधान्यं पाद्मोत्तरखण्डे कार्त्तिकमाहात्म्ये तत्कुण्डप्रसङ्गे—'यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा। सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा॥'' इति। अतएव मत्स्यपुराणे शक्तित्वसाधारण्येनाभिन्नतया गणनायामपि तस्या एव वृन्दावने प्राधान्याभिप्रायेणाह, 'रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने'। इति, तथा च वृहद्‌गौतमीये तस्या एव मन्त्र कथने— 'देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥'' इति, ऋक्परिशिष्टश्रुतावपि— 'राधया माधवो देवो; माधवेनैव राधिका। विभ्राजन्ते जनेष्वा' इति। अतएव दशमे (भा. १०-३०-२८) गोप्य आहुः— 'अनयाराधितो नूनं भगवान् हरिरीश्वरः' इति।

सर्वलौकिकालौकिकातीतेऽपि तस्मिन् लौकिकार्थविशेषोपमाद्वारा लोकानां बुद्धिप्रवेशः स्यादिति केनाप्यंशेनोपमानमाह; पक्षे, विधुश्चन्द्रो जयति सर्वोत्कर्षेण वर्त्तते। एवं विशेष्ये साम्यं दर्शयित्वा विशेषणेऽपि साम्यं दर्शयति,— अखिलोऽखण्डो रस आस्वादो यत्र तादृशममृतं पीयुषं तदात्मिकैव मूर्त्तिर्यस्य। तारकापालीः— तारकाश्रेणी। अत्र शब्दसाम्यं रसनीयत्वांशेनार्थेनापि योज्यम्,

तथा प्रसृमराभी रुचिभिः कान्तिभी रुद्धावृता तारकाणां पालिर्येन स इति पूर्ववन्निजकान्तिमत्तारागणविराजमानत्वांशेनापि ज्ञेयम्। विश्वप्रकाशे श्यामाशब्दो रात्रि पर्य्यायः; कलितमुरीकृतं श्यामाया रात्रेर्ललितं विलासो येन सः, इति रात्रिविलासित्वेनापि साम्यं ज्ञेयम्; तथा राधायां विशाखानाम्न्यां तारायां प्रेयान् अति (अधिकं) प्रीतिमान्॥ १ ॥

## अनुवाद

अकुण्ठ मेधस् भगवान् कृष्ण को मैं प्रणाम करता हूँ जो समस्त प्राणियों का संसार सागर से उद्धार करने के लिए अनेक कमनीय लीला का विस्तार करते रहते हैं॥ क॥

श्री चैतन्यमुखोद्गीर्ण 'हरेकृष्ण' यह मन्त्र जगत् को प्रेम में निमग्न करते हुये उनका कथन सर्वोत्कर्ष मण्डित हो॥ ख॥

निखिल सहृदय हृद्य समुदय हृदयालङ्कार– सकल कवि मण्डल आखण्डल भगवन् निर्देश परम मंगल सुधा धारा परम्परा क्रम से निर्माण करने के लिए–प्रत्यूह तापानुद्गमक इस शास्त्र में सदाचार के सम्मानार्थ–अवश्य कर्त्तव्य मङ्गलाचरण ग्रन्थकार करते हैं, अर्थात् यह ग्रन्थ स्वयं अमङ्गलनाशक मङ्गलमय है फिर भी सदाचार को सम्मान देना अवश्य कर्त्तव्य होने के कारण मङ्गलाचरण करते हुए ग्रन्थकार ग्रन्थ आरम्भ कर रहे हैं–

"अखिलरसामृतमूर्त्तिः प्रसृमर-रुचिरुद्ध तारकापालिः।
कलितश्यामाललितो, राधा-प्रेयान् विधुर्जयति॥"

विधु–श्रीकृष्णो जयति सर्वोत्कर्षेण वर्त्तते। श्रीकृष्ण सर्वोत्कर्ष रूप से विराजित हैं। यद्यपि 'विधुः श्रीवत्सलाञ्छन' अभिधान में लिखा है इसलिए विधु शब्द समस्त भगवान् का ही बोधक है, तथापि 'राधा प्रेयान्' इत्यादि इस प्रकार असाधारण विशेषण के द्वारा श्रीकृष्ण का ही प्रतिपादन होता है। उसके उत्कर्ष हेतु स्वरूप लक्षण को कहते हैं– "अखिला रसा" वक्ष्यमाण शान्त प्रभृति द्वादश रस हैं जिनमें, उस प्रकार अमृत परमानन्द ही मूर्त्ति हैं जिनकी वह श्रीकृष्ण हैं।

उनमें भी रस विशेष विशिष्ट परिकर वैशिष्ट्य से आविर्भाव का वैशिष्ट्य देखने में आता है। अतएव आदि रस विशेष विशिष्ट परिकर सम्बन्ध से व्रजीय कृष्ण का वैशिष्ट्य होता है। अतएव भागवत दशम स्कन्ध के १०-४४-१४ में उक्त है–

गोप्यस्तपः किमचरन् यदमुष्य रूपं
लावण्य सारमसमोर्द्ध्वमनन्य सिद्धम्।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधाम यशसः श्रिय ऐश्वरस्य॥

हे सखी! पता नहीं, गोपियों ने कौन-सी तपस्या की थी, जो नेत्रों के दोनों से नित्य-निरन्तर इनकी रूप-माधुरी का पान करती रहती हैं। इनका रूप क्या है, लावण्य का सार! संसार में या उससे परे किसी का भी रूप इनके रूप के समान नहीं है, फिर बढ़कर होने की तो बात ही क्या है। सो भी किसी के

सँवारने-सजाने से नहीं, गहने-कपड़े से भी नहीं, बल्कि स्वयंसिद्ध है। इस रूप को देखते-देखते तृप्ति भी नहीं होती क्योंकि यह प्रतिक्षण नूतन होता जाता है। समग्र यश, सौन्दर्य और ऐश्वर्य इसी के आश्रित हैं। सखियों! परन्तु इसका दर्शन तो औरों के लिये बड़ा ही दुर्लभ है। वह तो गोपियों के ही भाग्य में सुलभ है।

भा. १०-३२-१४—

तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः।
चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्॥

बड़े-बड़े योगेश्वर अपने योगसाधन से पवित्र किये हुए हृदय में जिनके लिये आसन की कल्पना करते रहते हैं, किन्तु फिर भी अपने हृदय-सिंहासन पर बिठा नहीं पाते, वही सर्वशक्तिमान् भगवान् यमुनाजी की रेती में गोपियों की ओढ़नी पर बैठ गये। सहस्र-सहस्र गोपियों के बीच में उनसे पूजित होकर भगवान् बड़े ही शोभायमान हो रहे थे। परीक्षित्! तीनों लोकों में—तीनों कालों में जितना भी सौन्दर्य प्रकाशित होता है, वह सब तो भगवान् के बिन्दुमात्र सौन्दर्य का आभास भर है। वे उसके एकमात्र आश्रय हैं।

भा. १०-३३-७—

तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः।
मध्ये मणीनां हैमानां महामरकतो यथा॥

यमुनाजी की रमणरेती पर व्रजसुन्दरियों के बीच में भगवान् श्रीकृष्ण की बड़ी अनोखी शोभा हुई। ऐसा जान पड़ता था, मानो अगणित पीली-पीली दमकती हुई सुवर्ण-मणियों के बीच में ज्योतिर्मयी नीलमणि चमक रही हो।

उन सब गोपियों में दस मुख्या हैं। भविष्योत्तर में वर्णित है— "गोपाली-पालिका धन्या विशाखान्या धनिष्ठिका, राधानुराधा सोमाभा तारका दशमी तथा।" दशमी भी तारका नाम से प्रसिद्ध है—किम्वा दशमी एक अन्य गोपी का नाम है। स्कन्द पुराण में प्रह्लाद संहिता के द्वारका माहात्म्य में उक्त "ललितोवाच" इत्यादि में मुख्य आठ के मध्य में पहले कही गयी से अलग ललिता-श्यामला-शैव्या-पद्मा-भद्रा के नाम हैं। पहले कही गयी राधा धन्या विशाखा हैं।

इसी अभिप्राय से मुख्य मुख्य से उत्तरोत्तर के वैशिष्ट्य को दिखाने के लिए अवरमुख्य दो तारका व पाली को निकालकर इन दोनों के साथ श्रीकृष्ण का वैशिष्ट्य दिखाते हैं। प्रसृमराभिः— प्रसरणशील रुचि अर्थात् कान्ति के द्वारा रुद्ध वशीभूत किये हैं तारका व पाली को, वह विधु श्रीकृष्ण हैं।

मध्यम मुख्य युगल के द्वारा भी उत्कर्ष दिखाते हुए कहते हैं—"कलिते स्वीकृते-श्यामा ललिते येन सः" अर्थात् श्यामा ललिता को जिन्होंने स्वीकार किया है— वह श्रीकृष्ण हैं।

अनन्तर परम मुख्य का वैशिष्ट्य कहते हैं। राधायाः प्रेयान्— अतिशय प्रीतिकर्त्ता हैं। "इगुपधज्ञा प्रीकिरः कः" इस सूत्र से 'क' का विधान हुआ है। अतएव इसके असाधारण्य को देखकर पहले के तरह युग्म रूप से निर्देश नहीं किया। उनके प्राधान्य का वर्णन पाद्मोत्तर खण्ड के कार्त्तिक माहात्म्य के उनके कुण्ड के प्रसङ्ग में है—"यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा। सर्व गोपीषु सैवैका विष्णोरत्यन्तवल्लभा॥" राधा जिस प्रकार श्रीकृष्ण की प्रिय हैं उस प्रकार प्रिय उनका कुण्ड भी है। क्योंकि

समस्त गोपियों के मध्य में श्रीराधा विष्णु की अत्यन्त प्रिया हैं।

मत्स्य पुराण में शक्तियों के बीच में शक्तिरूप में राधा शब्द का पाठ करने पर भी वृन्दावन में राधा का ही प्राधान्य है। इस अभिप्राय से कहते हैं—"रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने।" द्वारका में रुक्मिणी प्रसिद्ध हैं, श्रीराधा वृन्दावन में प्रसिद्ध हैं अर्थात् श्रेष्ठ हैं।

बृहद्गौतमीय ग्रन्थ में राधा के मन्त्र कथन के समय लिखित है— "देवी कृष्णमयी प्रोक्ता, राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनीपरा।" देवी राधिका परदेवता कृष्णमयी हैं, सर्वलक्ष्मीमयी, सर्वकान्तिमयी एवं परा सम्मोहिनी भी हैं।

ऋक् परिशिष्ट श्रुति में लिखित है— "राधया माधवो देवो, माधवेनैव राधिका। विभ्राजन्ते जनेष्वा"। राधा के साथ माधव शोभित हैं, माधव के साथ राधा भी शोभित हैं। इसलिए श्रीमद्भागवत के १०-३०-२८ में उक्त है—

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः॥

अवश्य ही सर्वशक्तिमान् भगवान् श्रीकृष्ण की यह आराधिका होगी। इसीलिये इस पर प्रसन्न होकर हमारे प्राणप्यारे श्यामसुन्दर ने हमें छोड़ दिया है, और इसे एकान्त में ले गये हैं।

सर्वलौकिक-अलौकिक से अतीत में भी लौकिकार्थ विशेष उपमा के द्वारा लोकों की बुद्धि का प्रवेश हो, इसलिए एक अंश से उपमान को कहते हैं। पक्ष में विधु-चन्द्र जययुक्त हैं, सर्वोत्कर्ष से विराजित हैं। इस प्रकार विशेष्य के साथ समता दिखाकर, विशेषण के साथ भी समता दिखाते हैं— अखिल-अखण्डरस आस्वाद है जहाँ, उस प्रकार अमृत-पीयूष स्वरूप ही जिसकी मूर्त्ति है, वह। तारकापाली-तारकाश्रेणी। यहाँ शब्द साम्य रसनीयत्वांश अर्थ के साथ भी जोड़ना है।

उस प्रकार प्रसृमराभी— प्रसरणशील कान्तियों के द्वारा जो तारकापाली-तारकाश्रेणी को रुद्ध आवृत किये है, वह। पहले के तरह निज कान्तिमत्तारागण विराजमानत्व अंश के साथ जानना होगा।

विश्वप्रकाश कोष में श्यामा शब्द से रात्रि को लिखा है। कलित अर्थात् विस्तार किया श्यामा अर्थात् रात्रि का विलास जिसने, वह। इस प्रकार रात्रि विलासित्व के कारण समानता है। तथा राधा अर्थात् विशाखा नामक तारा में अतिशय प्रीतिमान् है, वह जययुक्त है॥ १॥

**हृदि यस्य प्रेरणया प्रवर्त्तितोऽहं वराकरूपोऽपि।**
**तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य॥ (२)**

### अनुवाद

ग्रन्थकार निजेष्ट देवता निजभक्ति प्रवर्त्तक कलियुग पावनावतार श्रीश्रीकृष्ण चैतन्य महाप्रभु की वन्दना करते हुए कहते हैं— हृदय में अर्थात् मन में जिनकी प्रेरणा प्राप्त कर स्वयं क्षुद्र होकर भी ग्रन्थ रचना में प्रवृत्त हो रहा हूँ, उन चैतन्यदेव श्रीहरि के पादपद्म की वन्दना कर रहा हूँ॥ २॥

## दुर्गमसङ्गमनी

अथ निजभक्तिप्रवर्त्तनेन कलियुगपावनावतारं विशेषतः स्वाश्रयचरणकमलं श्रीश्रीकृष्णचैतन्यदेवं भगवन्तं नमस्करोति,— हृदीति। हृदि यस्य प्रेरणया प्रवर्तितोऽस्मिन् सन्दर्भ इति शेषः। वराकेति स्वयं दैन्येनोक्तं, सरस्वती तु तदसहमाना 'वरं श्रेष्ठम् आ सम्यक् कायति शब्दायत इति' तद्द्वारेणैव तं स्तावयति, मत्कवितायामपि तत्प्रेरणयैवात्र प्रवृत्तिः स्यान्नान्यथेत्यपेरर्थः॥ २॥

## अनुवाद

अनन्तर निजभक्ति प्रवर्त्तन के द्वारा कलियुग पावनावतार, विशेषतः स्वाश्रय चरणकमल श्रीश्रीकृष्णचैतन्यदेव भगवान् को नमस्कार करता हूँ। हृदय में जिनकी प्रेरणा प्राप्त कर ग्रन्थ रचना में प्रवृत्त हुआ हूँ। वराक शब्द क्षुद्रार्थ वाचक होने पर भी ग्रन्थकार की दैन्योक्ति को सहन न कर पाने से सरस्वती कह रही हैं— वरं श्रेष्ठं, जो सर्वश्रेष्ठ वस्तु को सम्यक् प्रकार से शब्द शास्त्रों में ग्रथित कर सकते हैं, वही वराक हैं। सुतरां इसी पद से ग्रन्थकार स्तुति करने के योग्य हो गये हैं। मेरे द्वारा रचित होने पर भी श्रीकृष्णचैतन्यदेव की कृपा से ही ग्रन्थ रचना करने में प्रवृत्त हूँ, अन्यथा यह कार्य हो नहीं सकता। अपि शब्द का यही अर्थ है॥२॥

## अर्थरत्नाल्प-दीपिका

अतिदुर्बोधभक्तिरसनिरूपणे अयोग्यमानी श्रीकृष्णचैतन्यस्य कृपया तत् सम्भावयन् तञ्च नन्दनन्दनत्वेन बोधयन् भूयोऽपि मङ्गलमाचरति,— हृदीति। तस्य हरेः श्रीकृष्णस्य पदकमलं वन्दे। तस्य कस्य— यस्य हृदि प्रेरणयात्र रसवर्णने प्रवृत्तिः; अत्रेत्यर्थादध्याहार्य्यम्, कीदृगप्यहम् वराकरूपोऽपि वराकस्वभावोऽपि 'रूपं स्वभावसौन्दर्य्ये' इति विश्वः, सादृश्यार्थे रूपप्रत्ययः, वराकसदृशोऽपि; पक्षे, वराकश्चासौ रूपो रूपाख्यः स इति स्वनाम्नः स्वग्रन्थे प्रकटनम्; वराकस्यापि मम ब्रह्मशिवादिदुर्गमेऽप्यर्थे निजयोजकत्वेनेश्वरस्यैवैतत्कर्तृत्वम्, न तु ममेति कवेर्विनयेन भगवदैश्वर्य्यस्य सूचिकोक्तिः।

ननु जयतीत्यनेन कृष्णस्त्वया वन्दितोऽस्ति, पुनः किमर्थं वन्दनमिति चेत्तत्राह,— चैतन्यदेवस्य,— योऽसौ राधाप्रेयान् श्रीकृष्ण इह खलु त्रिविधतापैस्तापितान् जनान् भजनगन्धमप्यजानतो महाकृपालुमौलित्वात्तापशमनपूर्व्वकं दास्यसख्यादिभक्तौ स्वयमाचरणादिना प्रवर्त्तनेच्छुस्तत्र प्रवृत्तेभ्यस्तत्तद्भक्तिरसमहामृतलहरीवितरणाय राधादिनिजमधुररसपरिवाराणां महाभावाढ्यानां प्रेमस्नेहादिना विवशस्तेषां महाभावादिमाधुर्य्यं कीदृशमिति तदाश्रयत्वेन तदास्वादयितुं च तत्तत्स्वाभाविक भावामृतोच्छलितस्वान्तसिन्धुभिर्नित्यनिजपरिवारैः सह स्वयं श्रीकृष्णचैतन्यरूपेण प्रकटीबभूव, तस्येति— भगवत्प्रतिपादकपुराणादिसारोद्धारात्मकोऽयं सन्दर्भ इति चागतम्।

ननु श्रीकृष्णचैतन्यस्य श्रीकृष्णत्वे किं प्रमाणमिति चेत्, श्रीभगवद्गीतावचनं तावदवधार्य्यतां (४-८)— 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति, धर्मश्च तत्प्रवर्त्तितनामसङ्कीर्त्तनरूप एव मुख्यः कलौ; यदुक्तं श्रीविष्णुपुराणे 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति

कलौ सङ्कीर्त्य केशवम्॥' इति, एकादशे कलियुगोपास्यप्रसङ्गे स्पष्टमेव तस्य भगवत्वं निरूपितम्; तद् यथा (११-३-३२) 'कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्। यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः॥' इति; अस्यार्थः— त्विषा कान्त्या योऽकृष्णो गौरस्तं सुमेधसो विवेकिनः कलौ यजन्ति उपासते। कैर्यजन्ति? यज्ञैः पूजा-सम्भारैः; किं भूतैर्यज्ञैः? सङ्कीर्त्तनप्रायैः— सङ्कीर्त्तनं बहुभिर्मिलित्वात्युच्चैः श्रीकृष्णगानं, तत्प्रधानैः। कथम्भूतं तम्? कृष्णवर्णं, कृष्णं कृष्णेति नाम वा वर्णयति परमप्रेमविवशतया गायति, परमकारुणिकतयोपदिशति चेति तथा तम्; पुनः किम्भूतम्? साङ्गोपाङ्गास्त्रपार्षदम्— अङ्गं श्रीनित्यानन्दः, उपाङ्गं श्रीमदद्वैताचार्य्यः, अङ्गञ्चोपाङ्गञ्च अङ्गोपाङ्गम्, तदस्त्राणीव महाप्रभावमयत्वात्, सुदर्शनाद्यस्त्रनिग्राह्यदैत्यतुल्यबहिर्मुखानां तद्दर्शनादेव भक्तौ प्रवृत्या असुरस्वभावपरित्यागात्; अङ्गोपाङ्गास्त्राणि च पार्षदाश्च श्रीगदाधरपण्डितप्रभृतयोऽन्तरङ्गशक्तिरूपाः, श्रीनिवासप्रभृतयो भक्तरूपाश्चाङ्गोपाङ्गास्त्रपार्षदास्तैः सह वर्तमानम्। अङ्गोपाङ्गस्यास्त्रवन्निरूपणं— पार्षदानां दर्शनाद् भक्तिप्रवृत्तिपूर्व्वकासुरस्वभावपरित्यागे सत्यपि तस्याधिक्यार्थम्; स्वयं भगवत्वमपि सूचयत्येतद्विशेषणम्।

अस्य गौरत्वञ्च (भा. १०-८-१३)— 'आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः। शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥' इति गर्गवचने पारिशेष्य-प्रमाणलब्धम्; तथाहि 'इदानीं कृष्णतां गतः' इत्यत्रेदानीमित्यनेन द्वापरस्योक्तत्वात् 'द्वापरे भगवान् कृष्णः' (भा. ११-५-२७) विधानाच्च कृष्णस्य द्वापरोपास्यत्वमुक्तम्। शुक्लरक्तयोः सत्यत्रेतोपास्यत्वेनैकादश एव वर्णितत्वाच्च कलौ श्रीगौरः परिशिष्यते। अतो वैशम्पायनीयसहस्रनामस्तोत्रे 'सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी। तथा सन्यासकृत् समः शान्तो निष्ठाशान्तिपरायणः॥' इति।

नन्वासन्नित्यनेन पीतस्यातीतत्वनिर्देशात् कथं भाविनो गौरस्य ग्रहणमिति चेत् प्राचीनगौरापेक्षयातीत्वनिर्देश इति क्रमः। नह्यस्मिन्नेव कलौ श्रीगौरावतारः किन्तु प्रतिकल्प अष्टाविंशच्चतुर्युगद्वापरान्ते श्रीकृष्णावतारवत् तत्पश्चात् कलौ श्रीगौरावतारस्य निश्चयात्।

नन्वेतैर्वचनैर्युगावतारत्वमस्यायातम्; कथं श्रीकृष्णः स्वयमवतीर्ण इति चेत्, द्वापरोपास्यस्य श्यामस्य यशोदानन्दनेऽन्तर्भाव इव कल्युपास्यस्य कृष्णवर्ण युगावतारस्य श्रीशचीनन्दनेऽन्तर्भावोऽङ्गोपाङ्गास्त्रपार्षदैः सहावतारात्। 'ज्ञानतः सुलभा मुक्तिर्भुक्तिर्यज्ञादिपुण्यतः। सेयं साधनसाहस्रैर्हरिभक्तिः सुदुर्ल्लभा॥ भुक्तिं मुक्तिं हरिर्दद्यादर्चितोऽन्यत्र सेविनाम्। भक्तिं तु न ददात्येव यतो वश्यकरी हरेः'। इत्यादि वचनेभ्यो यस्याः साधनसाहस्रकरणेऽप्यप्राप्तिश्रवणं तां, तस्याः स्ववश्यकारिकाया रतिलक्षणायाः तस्या अपि परमोत्कर्षरूपायाः प्रेमलक्षणायाश्च भक्ते जगाई-माधाईप्रभृति-महापातकिभ्योऽपि वितरणात्, मुनीनामपि मनसोऽप्यगोचरस्य श्रीकृष्णावताररहस्यस्य प्रकाशनात्, विद्वदनुभवसिद्धत्वाच्च। अथ विद्वदनुभवः; तत्र ग्रन्थकृतां स यथा— 'अपरं कस्यापि प्रणयिजनवृन्दस्य कुतुकी, रसस्तोमं हृत्वा मधुरमुपभोक्तुं कमपि यः। रुचं स्वामावव्रे द्युतिमिह तदीयां प्रकटयन्, स देवश्चैतन्याकृतिरतितरां नः कृपयतु॥' परमविद्वच्छिरोमणीनां

श्रीसार्वभौमभट्टाचार्य्याणां— 'कालान्नष्टं भक्तियोगम्' इत्यादि; 'कृष्णो देवः कलियुगभवं लोकमालोक्य सर्वं, पापासक्तं समजनि कृपासिन्धुचैतन्यमूर्त्तिः। तस्मिन् येषां न भवति सदा कृष्णबुद्धिर्नराणां, धिक् तान् धिक् तान् धिगिति धिगिति व्याहरेत् किं मृदङ्गः॥' इति च तेषामेव; श्रीरघुनाथदासगोस्वामिनां यथा— 'शचीसूनुं नन्दीश्वरपतिसुतत्वे गुरुवरं मुकुन्दप्रेष्ठत्वे स्मर परमजस्रं ननु मनः' इति, श्रीजीवगोस्वामिनां यथा— 'अन्तःकृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम्। कलौ सङ्कीर्त्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः॥' इति; श्रीप्रबोधसरस्वतीनां यथा— 'वन्दे श्रीकृष्णचैतन्यं गौरं कृष्णमपि स्वयं। यो राधाभावसंलुब्धः स्वभावं नितरां जहौ॥" इत्यादि सहस्रम्।

ननु तस्य श्रीकृष्णत्वे— "प्रत्यक्षरूपधृग्देवो दृश्यते न कलौ हरिः। कृतादिष्वेव तेनासौ त्रियुगः परिपठ्यते॥ कलेरन्ते च सम्प्राप्ते कल्किनं ब्रह्मवादिनं। अनुप्रविश्य कुरुते वासुदेवो जगत्स्थिति" मिति त्रियुगनामव्याख्यातृविष्णुधर्मवचनतस्तस्य कलौ प्रत्यक्षता विरुध्येतेति चेन्न, यत इदमेव प्रत्युत तस्य साक्षात्श्रीकृष्णत्वे लिङ्गं निरतिशयैश्वर्येण मर्य्यादामतिक्रम्य श्रीकृष्णस्य कलिप्रथमेऽवस्थानवदस्यापि तथात्वेनैव कलाववतरणसम्भवादिति॥ २॥

## अनुवाद

अति दुर्बोध भक्तिरस निरूपण करने में अपने को अयोग्य मानकर, श्रीकृष्ण चैतन्य महाप्रभु की कृपा से वह सम्भव है, कारण वह श्रीनन्दनन्दन श्रीकृष्ण ही हैं, इसलिये पुनर्वार मङ्गलाचरण कर रहे हैं— 'हृदि यस्य प्रेरणया' श्लोक के द्वारा। उन हरि श्रीकृष्ण के चरण कमलों की वन्दना करता हूँ। उनकी किनकी? कहते हैं— जिनकी प्रेरणा हृदय में, मन में होने से रस वर्णन करने में मेरी प्रवृत्ति हुई है। अत्र 'इस प्रकार ग्रन्थ करने में', यह ऊपर से लगा लेना पड़ेगा, क्योंकि उस शब्द का उल्लेख यहाँ नहीं है।

मैं किस प्रकार हूँ? वराक रूप हूँ, अर्थात् क्षुद्र स्वभाव का हूँ, विश्व प्रकाश कोष में रूप शब्द का अर्थ स्वभाव और सौन्दर्य है। सादृश्यार्थ में भी रूप प्रत्यय होता है, वराक सदृश होने पर भी।

पक्ष में— निज नाम का उल्लेख इस शब्द से किया गया है। "वराकश्चासौ रूपो रूपाख्यः स" इससे ग्रन्थकार का नाम स्वग्रन्थ में प्रकट हुआ।

मैं क्षुद्र हूँ, वराक हूँ— ब्रह्मा शिवादि के लिये भी जो वस्तु दुर्गम है, उस विषय में मेरी जो प्रवृत्ति हुई है, उसका कर्त्ता ईश्वर ही हैं, मैं नहीं हूँ। कवि विनय से भगवद् ऐश्वर्य को प्रकट करते हैं।

'राधा प्रेयान् विधुर्जयति' पहले श्लोक में श्रीकृष्ण की वन्दना हुई है, पुनर्वार क्यों वन्दन करते हो? कहते हैं— चैतन्यदेव की कृपा से प्रवृत्ति हुई है।

जो राधा प्रेयान् श्रीकृष्ण हैं, वह त्रिताप से तापित जनगण को, जिनमें भजन गन्ध भी नहीं हैं, उन सबके प्रति कृपा करने के लिए महाकृपालु शिरोमणि होने से ताप प्रशमन करके दास्य, सख्यादि भक्ति में स्वयं आचरण करके प्रवृत्त कराने के लिये श्रीकृष्ण चैतन्य रूप में प्रकट हुए हैं।

जिन सबकी प्रवृत्ति उस रस में होगी, उन सबको भक्तिरसामृतलहरी वितरण करने के लिए, राधादि निज मधुर रस परिवार के महाभावाद्य प्रेम स्नेहादि के द्वारा जो विवश हैं, उन सबके भाव माधुर्य किस प्रकार हैं? आश्रय जातीय भाव को लेकर उसका आस्वादन करने के लिए, उन उन स्वाभाविक भावामृत

उच्छलित अन्तःकरण युक्त निज परिवार के साथ स्वयं श्रीकृष्णचैतन्य रूप में आविर्भूत हुए हैं।

श्रीकृष्णचैतन्य जो श्रीकृष्ण हैं, इसमें प्रमाण क्या है? भगवत् प्रतिपादक पुराणादि का सारोद्धारात्मक यह सन्दर्भ है। श्रीभगवद्‌गीता वचन का अनुसन्धान करना परम आवश्यक है। गी. ४-८–

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्म संस्थापनार्थाय सम्भवामि युगे युगे ॥"

साधु पुरुषों का उद्धार करने के लिए, दुष्टों का विनाश करने के लिए, और धर्म की अच्छी तरह से स्थापना करने के लिए, मैं युग-युग में प्रकट हुआ करता हूँ।

उन्होंने धर्म का प्रवर्त्तन किया, कलि में नाम संकीर्त्तन रूप धर्म ही मुख्य है।

विष्णुपुराण में उक्त है–

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥"

सत्ययुग में ध्यान करने से, त्रेतायुग में यज्ञ करने से, द्वापरयुग में अर्चना करने से जो फल होता है, वह फल कलियुग में केशव के नाम संकीर्त्तन से होता है।

कलियुग के उपास्य प्रसङ्ग में श्रीमद्‌भागवत के (११-५-३२) में उक्त है–

"कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥

कलियुग के उपास्य होते हैं– कृष्ण वर्ण, अर्थात् जो कृष्ण का वर्णन करते हैं, कान्ति में अकृष्ण वर्ण हैं, अर्थात् गौर वर्ण हैं। अङ्ग, उपाङ्ग अस्त्र एवं पार्षद होते हैं। बुद्धिमान व्यक्तिगण नाम सङ्कीर्त्तन यज्ञ से उनकी आराधना करते हैं।

इसका अर्थ– त्विषा, कान्त्या अकृष्ण, जो गौरवर्ण के हैं, सुमेधस-विवेकी व्यक्तिगण कलियुग में उनकी उपासना करते हैं। किसके द्वारा उपासना करते हैं? यज्ञैः– पूजा सम्भार के द्वारा। यज्ञ किस प्रकार है? संकीर्त्तन रूप है, संकीर्त्तन– अनेक व्यक्तियों द्वारा मिलकर जोर-जोर से श्रीकृष्ण नाम गान, एवं तत् प्रधान होता है।

वे किस प्रकार हैं? कृष्णवर्ण, कृष्ण नाम परिचायक रूप है जिनका, किम्वा परम प्रेमविवश होकर श्रीकृष्ण नाम का जो गान करते हैं, अथवा परम कारुणिक होने से जो कृष्ण का उपदेश करते हैं।

पुनः किस प्रकार हैं? साङ्गोपाङ्गास्त्रपार्षदम्– अङ्ग श्रीनित्यानन्द, उपाङ्ग श्रीमदद्वैताचार्य, यह हैं अङ्ग, उपाङ्ग; ये उनके अस्त्र के तरह हैं, महाप्रभावमय होने के कारण। सुदर्शनादि अस्त्र के द्वारा असुरों के समान बर्हिमुख जनों की उनके दर्शनमात्र से ही भक्ति में प्रवृत्ति होकर आसुर स्वभाव छूट जाता है।

अङ्ग, उपाङ्ग अस्त्र समूह व पार्षद समूह श्रीगदाधर पण्डित आदि हैं; ये सब अन्तरङ्ग शक्तिरूप हैं। श्रीनिवास आदि भक्तरूप हैं, ये सब अङ्ग, उपाङ्ग अस्त्र-पार्षद हैं, उन सबके साथ विद्यमान हैं।

अङ्ग, उपाङ्ग को अस्त्र की भाँति निरूपण करने का अभिप्राय है– पार्षदों को देखने से ही भक्ति में प्रवृत्ति होकर असुर स्वभाव का परित्याग होता है, यह यहाँ आधिक्य है। इस विशेषण के द्वारा उनकी

स्वयं भगवत्ता स्थापित होती है।

इन उपास्य के गौरवर्ण होने का प्रमाण श्रीमद्भागवत के (१०-८-१३) में इस प्रकार है–

"आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥"

"और यह जो साँवला-साँवला है, यह प्रत्येक युग में शरीर ग्रहण करता है। पिछले युगों में इसने क्रमशः श्वेत, रक्त और पीत, ये तीन विभिन्न रंग स्वीकार किये थे। अब यह कृष्णवर्ण हुआ है, इसलिए इसका नाम "कृष्ण" होगा।" गर्ग महाराज की इस वाणी से पारिशेष्य प्रमाण के द्वारा यह प्राप्त हुआ, अर्थात् कलियुग के उपास्य गौरवर्ण के हुए।

"इदानीं कृष्णतां गतः"–इदानीं शब्द से अब इस द्वापर में हुआ। (भा. ११-५-२७) में उक्त है–

"द्वापरे भगवाञ्छ्यामः पीतवासा निजायुधः।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥"

राजन्! द्वापर युग में भगवान् के श्रीविग्रह का रंग होता है– साँवला। वे पीताम्बर तथा शङ्ख, चक्र, गदा आदि अपने आयुध धारण करते हैं। वक्षःस्थल पर श्रीवत्स का चिह्न, भृगुलता, कौस्तुभमणि आदि लक्षणों से वे पहचाने जाते हैं। इस विधान से कृष्ण ही द्वापर के उपास्य हैं।

शुक्ल, रक्त का सत्य, त्रेता में उपास्यत्व एकादश स्कन्ध में वर्णित है। पारिशेष्य न्याय से कलियुग में श्रीगौर का उपास्यत्व प्राप्त होता है। अतः वैशम्पायनीय सहस्रनाम स्त्रोत में कहा गया है–

"सुवर्ण वर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।
सन्यासकृत् समः शान्तो निष्ठा शान्ति परायणः॥"

सुवर्ण की भाँति वर्ण, सोने के समान अङ्ग, उत्तम अङ्गों का संगठन, चन्दन का अङ्गद परिधान किये हैं; सन्यास धारण किये हैं; सम, शान्त, निष्ठा, शान्ति परायण हैं।

आसन् शब्द का प्रयोग गर्ग महाराज ने किया है, अतः पीत का अतीत में निर्देश हुआ है, इससे कैसे भविष्य में होने वाले गौर का ग्रहण होगा? इसका उत्तर यह है– प्राचीन गौर को लक्ष्य करके अतीतत्त्व का निर्देश किया गया है। न केवल इस कलियुग में ही गौर का अवतार हुआ है, किन्तु प्रत्येक कल्प के अष्टाविंश चतुर्युग के द्वापर के अन्त में जब श्रीकृष्णावतार होता है, तब उसके पीछे जो कलियुग होता है, उस कलियुग में श्रीगौरावतार का निश्चय है।

इन सब वचनों के द्वारा युगावतार का आगमन बोध होता है। कैसे समझेंगे श्रीकृष्ण स्वयं अवतीर्ण हुए हैं? कहते हैं– द्वापर में जैसे श्याम वर्ण भगवान् का यशोदानन्दन में अन्तर्भाव होता है; वैसे कलि में उपास्य कृष्णवर्ण युगावतार का श्रीशचीनन्दन में अन्तर्भाव होकर अङ्ग, उपाङ्ग, अस्त्र पार्षद के साथ अवतार होता है।

"ज्ञानतः सुलभा मुक्तिर्भुक्तिर्यज्ञादिपुण्यतः।
सेयं साधनसाहस्रैर्हरिभक्तिः सुदुर्लभा ॥"

तन्त्र में उक्त है– ज्ञान के द्वारा मुक्ति सुलभ है, और यज्ञादि पुण्य-कर्मों के द्वारा भुक्ति (भोग) प्राप्त करना सरल है, किन्तु सहस्र साधनों के द्वारा भी हरिभक्ति सुदुर्लभ है।

भुक्तिं मुक्तिं हरिर्दद्यादर्चितोऽन्यत्र सेविनाम्।
भक्तिं तु न ददात्येव यतो वश्यकरी हरेः॥

भोग और मोक्ष हरि के सेवन से प्राप्त हो सकते हैं, किन्तु भक्ति देते ही नहीं, कारण– भक्ति भगवान् को वशीभूत करती है।

इत्यादि वचन से ज्ञात होता है कि जो भक्ति सहस्र-सहस्र साधनों से भी नहीं मिल सकती है, उस प्रकार की स्ववशकारिणी रतिलक्षणा भक्ति को, उसमें भी परम उत्कर्षरूपा प्रेमलक्षणा भक्ति को भी जगाई-मधाई आदि महापातकि जनगण को वितरण किये हैं, वे स्वयं कृष्ण ही हैं।

मुनियों के मनों के अगोचर कृष्णावतार रहस्य का प्रकाश करने के कारण श्रीगौर श्रीकृष्ण के आविर्भाव विशेष हैं। विद्वद्गणों का अनुभव भी यही है। ग्रन्थकार ने कहा है (श्रीचैतन्याष्टकम् ३)–

अपारं कस्यापि प्रणयिजनवृन्दस्य कुतुकी।
रस स्तोमं हृत्वा मधुरमुपभोक्तुं कमपि यः।
रुचिं स्वामावव्रे द्युतिमिह तदीयां प्रकटयन्।
स देवश्चैतन्याकृतिरतितरां नः कृपयतुः॥

जो कौतूहलवश प्रणयिजनवृन्द के अपार रस समूह को चुराकर मधुररस का आस्वादन करने के लिए प्रिया श्रीराधा की कान्ति से अपने को मण्डित करके आविर्भूत हुए हैं, वे चैतन्याकृति देव हम सबके प्रति कृपा करें।

परम विद्वच्छिरोमणि श्रीवासुदेव सार्वभौम महोदय ने भी कहा है– "कालान्नष्टं भक्तियोगम्" कालकवलित भक्तियोग का पुनरुद्धार करने के लिए जो शचीनन्दन रूप में आविर्भूत हुए हैं, उनके चरणारविन्दों में मेरा मन-भ्रमर रत हो।

श्रीवासुदेव सार्वभौमपाद का वचन है–

"कृष्णो देवः कलियुगभवं लोकमालोक्य सर्वं,
पापासक्तं समजनि कृपासिन्धुचैतन्यमूर्त्तिः।
तस्मिन् येषां न भवति सदा कृष्णबुद्धिर्नराणां,
धिक् तान् धिक् तान् धिगिति धिगिति व्याहरेत् किं मृदङ्गः॥"

कलियुगवासी जनगण को पापासक्त देखकर, कृपासिन्धु चैतन्यमूर्त्ति धारणकर जो कृष्णदेव आविर्भूत हुए हैं, उनमें जिन लोगों की कृष्ण बुद्धि नहीं होती है; उन सबको धिक्कार देने के लिए ही क्या मृदङ्ग धिक् तान् उन सबको धिक्कार, उन सभी को धिक्कार, धिक् धिक् कहते रहते हैं?

श्रीरघुनाथदास गोस्वामीपाद ने भी कहा है–

"शचीसूनुं नन्दीश्वरपतिसुतत्वे गुरुवरं।
मुकुन्दप्रेष्ठत्वं स्मर परमजस्रं ननुमनः॥"

शचीनन्दन गौर हरि को नन्दनन्दन रूप में एवं गुरु महाराज को मुकुन्द के प्रिय रूप में मेरे मन अनवरत स्मरण करते रहो।

श्रीजीवगोस्वामीपाद ने कहा है—

"अन्तः कृष्णं बहिर्गौरं दर्शिताङ्गादि वैभवम्।
कलौ सङ्कीर्त्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः॥"

जो अन्दर में श्रीकृष्ण हैं, परन्तु बाहर गौर वर्ण हैं, एवं अङ्गादि वैभव को जिन्होंने प्रकट किये हैं, कलियुग में सङ्कीर्त्तनादि के द्वारा हम सब उन्हीं कृष्णचैतन्य के आश्रित हैं।

श्रीप्रबोधानन्द सरस्वती पाद ने लिखा है—

"वन्दे श्रीकृष्णचैतन्यं गौरं कृष्णमपिस्वयं।
यो राधाभावसंलुब्धः स्वभावं नितरां जहौ॥"

स्वयं श्रीकृष्ण स्वरूप श्रीकृष्णचैतन्यदेव की मैं वन्दना करता हूँ, जिन्होंने राधा भाव संलुब्ध होकर अपने भाव को परित्याग कर दिया।

इस प्रकार सहस्रों प्रमाण हैं।

श्रीगौराङ्ग यदि श्रीकृष्ण ही होते हैं, तो—

"प्रत्यक्षरूप धृग् देवो दृश्यते न कलौ हरिः।
कृतादिष्वेव तेनासौ त्रियुगः परिपठ्यते॥
कलेरन्ते च सम्प्राप्ते कल्किनं ब्रह्मवादिनम्।
अनुप्रविश्य कुरुते वासुदेवो जगत् स्थितिमिति॥"

श्रीहरि कलियुग में साक्षात् रूप में नहीं आते हैं। सत्य, त्रेता, द्वापर में आते हैं इसलिए उनको त्रियुग कहा जाता है। कलि का अन्त होने लगने से ब्रह्मवादी कल्कि में प्रविष्ट होकर, भगवान् वासुदेव जगत् की स्थिति को सम्भालेंगे।

विष्णु धर्म वचन से त्रियुग का कथन प्राप्त होने से कलि में श्रीहरि की प्रत्यक्षता विरुद्ध होती है, ऐसा नहीं कहा जा सकता है, क्योंकि श्रीगौराङ्ग महाप्रभु साक्षात् श्रीकृष्ण ही हैं। निरतिशय ऐश्वर्यवान् होने के कारण श्रीकृष्ण जिस प्रकार मर्यादा का अतिक्रमण करके कलियुग के प्रथम में अवस्थान किये, उसी प्रकार इनका भी कलि में अवतरण करना सम्भव है॥ २॥

## भक्तिसार-प्रदर्शिनी

अथ निजभक्तिप्रवर्त्तनेन कलियुगपावनावतारं विशेषतः स्वाश्रयचरणकमलं श्रीश्रीचैतन्यदेवं भगवन्तं नमस्करोति,— हृदीति। हृदि विषये यस्य प्रेरणया। प्रवर्त्तित इत्यस्मिन् ग्रन्थ इति शेषः। वराकेति स्वयं दैन्येनोक्तम्; वस्तुतस्तु वरं श्रेष्ठम् आ सम्यक् कायते शब्दायते इति तमेव स्तावयतीत्यर्थः। मत्कवितायामपि तत्-प्रेरणयैवात्र प्रवृत्तिः स्यान्नान्यथेत्यपेरर्थः॥ २॥

## अनुवाद

अनन्तर निजभक्ति प्रवर्त्तन के द्वारा कलियुग पावनावतार, विशेषकर स्वाश्रय चरणकमल भगवान् श्रीश्रीचैतन्यदेव को प्रणाम करते हैं,— हृदीति। हृदय में, मन में जिनकी प्रेरणा से इस कार्य में प्रवृत्त हुआ

हूँ। 'इस ग्रन्थ में' इतना बाहर से लगाना होगा। दैन्य से ही वराक शब्द को लिखा है। किन्तु उत्तम रूप से जो शब्द का प्रकाश करते हैं, वही वराक हैं। उन्हीं का स्तव करते हैं। ग्रन्थकार का कथन है- मेरी कविता में प्रेरणा उन्हीं की है, अन्यथा प्रवृत्ति होती ही नहीं, यही श्लोक स्थित अपि शब्द का अर्थ है॥२॥

**विश्राममन्दिरतया तस्य सनातनतनोर्मदीशस्य।**
**भक्तिरसामृतसिन्धुर्भवतु सदाऽयं प्रमोदाय॥ (३)**

## अनुवाद

मेरे इष्ट देवता स्वरूप श्रीकृष्ण का ही नाना रूप में प्रकाशित तनु के मध्य में जो सनातन नामक तनु- श्री सनातन गोस्वामी पाद हैं, उनके विश्राम मन्दिर रूप में भक्तिरसामृतसिन्धु नामक यह ग्रन्थ सदा प्रमोदकर हो॥ ३॥

## दुर्गमसङ्गमनी

अथ निजेष्टदेवावतारत्वेन निजगुरुं स्तुवन् प्रार्थयते,- विश्रामेति। भक्तिरसरूपस्यामृतस्य सिन्धुरिवेति तन्नामायं ग्रन्थस्तस्य श्रीकृष्णाख्यस्य मदीशस्य सदा स्वेनैव रूपेण स्थितस्यैव प्रकाशितनानारूपतनोर्या सनातननाम्नी तनुस्तस्या विश्राममन्दिरतया तत्तुल्यतयाऽङ्गीकारेणेत्यर्थः; अन्यस्या अपि नारायणाख्याया: सदाप्रसिद्धसमानार्थसनातनतनोः सिन्धुर्विश्राममन्दिरं भवतीति॥ ३॥

## अनुवाद

अनन्तर निज इष्टदेव के अवतार रूप में निज गुरुदेव का स्तव करके प्रार्थना करते हैं- भक्तिरस रूप अमृतसिन्धु की तरह यह भक्तिरसामृतसिन्धु नामक ग्रन्थ है। मेरे ईश्वर श्रीकृष्ण सदा निज रूप में स्थित होने पर भी वे नानारूप तनु प्रकाशित करते हैं। उनके मध्य में सनातन (श्रीसनातन गोस्वामी) नामक जो तनु है, उनके विश्राम मन्दिर की भाँति यह ग्रन्थ हो, अर्थात् अमृत समुद्र जिस प्रकार सुखकर विश्राम के लिए होता है, उस प्रकार श्रीगुरुदेव सनातन के भी विश्राम के लिए श्रीभक्तिरसामृतसिन्धु हो।

श्री नारायण, जिनका तनु सनातन है, वे क्षीर समुद्र में विश्राम करते हैं; इस प्रकार यह ग्रन्थ गुरुदेव 'सनातन' के तनु का विश्राम मन्दिर बने॥ ३॥

## अर्थरत्नाल्प-दीपिका

अथास्य ग्रन्थस्य श्रीकृष्णस्य प्रमोदहेतुतां श्लेषेण सनातननाम्नो निजगुरोश्च ताम् अर्थात्तौ प्रार्थयते,- विश्रामेति। भक्तिरसामृतसिन्धुस्तन्नामायं ग्रन्थः। तस्य श्रीकृष्णाख्यस्य मदीशस्य विश्राममन्दिरतया प्रमोदाय भवतु, मदीशो मन्दिरवद् विश्रामसुखमत्राङ्गीकरोत्वित्यर्थः। अन्योऽपि सिन्धुर्भगवतो विश्राममन्दिरं भवतीति। किम्भूतस्य? सनातनतनोः सनातनी नित्या तनुः श्रीविग्रहो यस्य, श्लेषपक्षे- सनातननामा तनुर्यस्य, तस्य भक्तिवैराग्यादिगुणैः प्रसिद्धस्य मत्प्रभोः॥ ३॥

## अनुवाद

अनन्तर, यह ग्रन्थ श्रीकृष्ण का आनन्दकर हो, श्लेष से सनातन नामक निज गुरुदेव का भी

आनन्ददायक बने, इसलिए दोनों की प्रार्थना कर रहे हैं— भक्तिरसामृतसिन्धु नामक यह ग्रन्थ विश्राम मन्दिर स्वरूप हो। श्रीकृष्ण नामक मेरे स्वामी का विश्राम मन्दिर जिस प्रकार उनका आनन्दकर होता है, उस प्रकार हो; अर्थात् मेरे स्वामी विश्राम मन्दिर में विश्राम करके जिस प्रकार सुख अनुभव करते हैं, उस प्रकार इस ग्रन्थ से भी सुखी हों। अन्य सिन्धु भी भगवान् के विश्राम मन्दिर हैं, इस प्रकार यह भी विश्राम गृह बने। मेरे स्वामी किस प्रकार हैं? सनातन तनु हैं— सनातनी नित्या तनु श्रीविग्रह है जिनकी। श्लेष पक्ष में अर्थ है— सनातन नामक तनु है जिनका, भक्ति वैराग्यादि गुणों से प्रसिद्ध मेरे प्रभु श्रीसनातन गोस्वामी इस ग्रन्थ से सुखी बनें ॥ ३ ॥

### भक्तिसार-प्रदर्शिनी

अथ निजेष्टदेवतावतारत्वेन निजगुरुं स्तुवन् प्रार्थयते,— विश्रामेति। अयं भक्तिरसामृतसिन्धुस्तस्य मदीशस्य श्रीकृष्णस्य विश्राममन्दिरतया सदा प्रमोदाय भवतु; समुद्रस्य तद्विश्राममन्दिरत्वेन प्रसिद्धेः। कथम्भूतस्य नित्यतनोः, पक्षे सनातननाम्नी तनुर्यस्य तस्य मदीशस्य ॥ ३ ॥

### अनुवाद

अनन्तर निज इष्ट देवता के अवतार रूप निज गुरु का स्तव करते हुए प्रार्थना करते हैं— विश्राम इत्यादि। यह भक्तिरसामृतसिन्धु ग्रन्थ मेरे स्वामी श्रीकृष्ण के विश्राम मन्दिर के तरह सदा आनन्दकर हो, कारण— समुद्र उनका विश्राम मन्दिर होता है, ऐसा प्रसिद्ध है। वे कैसे हैं? उनका तनु नित्य है। पक्ष में— सनातन नामक तनु है जिनका, उन श्रीसनातन गोस्वामी नामक मेरे स्वामी का आनन्ददायक यह श्रीभक्ति-रसामृतसिन्धु ग्रन्थ हो ॥ ३ ॥

**भक्तिरसामृतसिन्धौ चरतः परिभूतकालजालभियः।**
**भक्तमकरानशीलितमुक्तिनदीकान्नमस्यामि ॥ (४)**

### अनुवाद

भक्तिरसरूप अमृतसिन्धु में विचरण पूर्वक जिन्होंने कालरूप जाल के भय को पराभूत किया है, और मुक्तिरूपी नदी का अनादर किया है, उन भक्तरूप मकरगण को मैं नमस्कार करता हूँ॥ ४॥

### दुर्गमसङ्गमनी

तदेवं नामग्राहं तं वन्दित्वा स्वाभीष्टानन्यानपि सामान्यतः सद्भक्तान् वन्दते— भक्तिरसेति। भक्ता एव मकरा मीनराजाख्या जलचरास्तान्नमस्यामि, मकरत्वेन रूपकेन सादृश्यत्रयमाह— भक्तिरस एवामृतसिन्धुर्नानाविधमुक्तिनदीनामाश्रयः परमपरमानन्दस्तस्मिन् चरतो विहरतोऽतो न शीलिता नादृता मुक्तिरेव नदी तद्रूपतया निरूपितं जन्ममरणादिबन्धच्छेदकमप्यनवच्छिन्नप्रवाहमपि ब्रह्मकैवल्यादिसुखं यैस्तान्, अनादृतेत्येव वा पाठः। अतएव परिभूतं जन्ममरणादिबन्धदुःखपरम्पराहेतोः कालरूपाज्जालाद्भयं यैस्तान्, (भा. ६-१३-२७) — 'नैषां वयं न च वयं प्रभवाम दण्डे' इत्युक्तेः, (भा. ३-२९-१३) 'सालोक्यसार्ष्टिसारूप्येत्यादेः', 'मत्सेवया प्रतीतं ते' इत्यादेश्च ॥ ४ ॥

## अनुवाद

नाम लेकर गुरु वन्दन के बाद अब निज अभीष्ट अन्य सद्भक्तों की वन्दना करते हैं। भक्त ही मकर हैं। मकर मीनराजाख्य जलचर है। उन सबको नमस्कार करता हूँ।

मकर रूप से रूपक करके तीन सादृश्य कहते हैं— भक्ति रस ही अमृत सिन्धु है, वह नाना प्रकार की मुक्तिरूपी नदियों का एकमात्र आश्रय है, एवं परमपरमानन्द स्वरूप है। उसमें विचरण करते हुए मुक्ति नदी का अनुशीलन अर्थात् आदर नहीं करते हैं। वे जन्म-मरणादि बन्ध दुःख-छेदक अनवच्छिन्न प्रवाहरूप होने पर भी मुक्ति नदी का आदर नहीं करते हैं। न शीलिता के स्थान में अनादृत पाठ भी है। अतएव परिभूत अर्थात् पराभव किये हैं जन्म-मरणादि बन्ध दुःखपरम्परा हेतु कालरूप जाल के भय को जिन्होंने, उनको नमस्कार करता हूँ। समान लोक में वास करना, समान ऐश्वर्य का अधिकारी बनना, समान रूप प्राप्त करना आदि को भी नहीं चाहते हैं, केवल भगवान् की सेवा से ही सन्तुष्ट होते हैं, उन सब भक्तों को नमस्कार करता हूँ। ये तथ्य निम्न श्लोकों से सूचित होते हैं—

भा. (६-३-२७)—

ते देवसिद्धपरिगीतपवित्रगाथा, ये साधवः समदृशो भगवत्प्रपन्नाः।
तान् नोपसीदत हरेर्गदयाभिगुप्तान्, नैषां वयं न च वयः प्रभवाम दण्डे॥

जो समदर्शी साधु भगवान् को ही अपना साध्य और साधन दोनों समझकर उनपर निर्भर हैं, बड़े-बड़े देवता और सिद्ध उनके पवित्र चरित्रों का प्रेम से गान करते रहते हैं। मेरे दूतों! भगवान् की गदा उनकी सदा रक्षा करती रहती है। उनके पास तुम लोग कभी भूलकर भी मत फटकना। उन्हें दण्ड देने की सामर्थ्य न हममें है, और न साक्षात् काल में ही।

भा. (३-२९-१३)—

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥

ऐसे निष्काम भक्त दिये जाने पर भी मेरी सेवा को छोड़कर सालोक्य, सार्ष्टि, सामीप्य, सारूप्य और सायुज्य मोक्ष तक नहीं लेते हैं।

भा. (९।४।६७)—

मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम्।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम्?॥

मेरे अनन्य भक्त सेवा से ही अपने को परिपूर्ण मानते हैं। मेरी सेवा के फलस्वरूप जब उन्हें सालोक्य, सारूप्य आदि मुक्तियाँ प्राप्त होती हैं तब वे उन्हें स्वीकार नहीं करते हैं, फिर काल के प्रभाव से नष्ट हो जाने वाली वस्तुओं की तो बात ही क्या है?॥ ४॥

## अर्थरत्नाल्प-दीपिका

अथ 'अविज्ञाताखिलक्लेशाः सदा कृष्णाश्रितक्रियाः। सिद्धाः स्युः सन्ततं प्रेमसौख्यास्वादपरायणाः॥' इति (२-१-२८०) लक्षणान् सिद्धभक्तान्नमस्येति, भक्तिरसेति। भक्ता

एव मकरा मीनराजाख्याः सिन्धुचरास्तान्। मकरत्वेन रूपकेन सादृश्यत्रयमाह,— भक्तिरस एवामृतसिन्धुर्नानाविधमुक्तिनदीनामाश्रयः परमानन्दस्तस्मिन् चरतो विहरतः;— अनेन विशेषणेन सन्ततप्रेमसौख्यास्वादपरायणत्वमुक्तम्। तत्र विहरणादेव परिभूतकालरूपाज्जालाद् भीर्भयं यैस्तान्; अनेनाविज्ञाताखिलक्लेशत्वम्। पूर्व्वहेतोरेव न शीलिता नादृता मुक्तिनदीस्तान् अशीलितमुक्तिनदीकान् श्रीकृष्णसेवानिर्वृत्या मुक्तिस्पृहा नास्तीत्यर्थः— अनेन सदा कृष्णाश्रितत्वम्॥ ४॥

## अनुवाद

जो अविद्या, अस्मिता, राग, द्वेष और अभिनिवेशरूप अखिल क्लेशों का अतिक्रम करके सदा कृष्ण को आश्रय कर सेवा में रत हैं, और एकता अनुकूलता रूप श्रीकृष्ण प्रेम सुख के आस्वादन परायण हैं, उनको सिद्ध भक्त कहते हैं। आगे इस भक्तिरसामृत सिन्धु के (२-१-२८०) में सिद्ध भक्त का ऐसा लक्षण कहा गया है।

सिद्ध भक्तों को नमस्कार करते हैं। भक्त ही यहाँ मकर हैं। मकर को मीनराज भी कहते हैं, वह सिन्धु में विचरण करता है। मकर रूप से रूपक करने से तीन सादृश्य बनते हैं— भक्तिरस ही अमृतसिन्धु, नानाविध मुक्ति नदियों का आश्रय एवं परमानन्दस्वरूप है; उसमें विहार करने वाले भक्तों को नमस्कार करता हूँ। इस विशेषण से वे भक्त अनवरत कृष्ण प्रेम सुख का आस्वादन करने में रत रहते हैं, इसका कथन हुआ है।

इस प्रकार भक्तिरसामृतसिन्धु में विहार करने के कारण, जिन्होंने कालरूप जाल के भय को मिटा दिया है, ऐसे भक्तों को प्रणाम करता हूँ, इससे अविज्ञात अखिल क्लेश का कथन हुआ है।

पूर्वोक्त कारणों से ही वे मुक्ति नदी का आदर नहीं करते हैं। श्रीकृष्ण की प्रेम सेवा के आनन्द से मुक्ति की इच्छा नहीं रहती है। इससे वे सदा कृष्ण के आश्रित रहते हैं, इसका प्रकाश हुआ है॥ ४॥

## भक्तिसार-प्रदर्शिनी

तदेवं नामग्राहं तं वन्दित्वा स्वाभीष्टानन्यानपि सामान्यतः सद्भक्तान् वन्दते— भक्तिरसेति। भक्ता एव मकरा मीनराजाख्या जलचरास्तान्नमस्यामि। मकरत्वेन रूपकेण सादृश्यत्रयमाह,— भक्तिरस एवामृतसिन्धुर्नानाविधमुक्तिनदीनामाश्रयः परमपरमानन्दस्वरूपस्तस्मिन् चरतो विहरतः। अतएव न शीलिता नादृता मुक्तिरूपा नदी यैस्तान्। पूर्वहेतोरेव परिभूतं तिरस्कृतं जन्ममरणादिबन्धदुःखपरम्पराहेतुभूतात् कालरूपाज्जालाद् भीर्भयं यैस्तान्॥४॥

## अनुवाद

नाम लेकर गुरु वन्दन के बाद अब निज अभीष्ट अन्य सद्भक्तों की वन्दना करते हैं। भक्त ही मकर हैं। मकर मीनराजाख्य जलचर है। उन सब भक्तों को नमस्कार करता हूँ। मकररूप में रूपक करने से तीन सादृश्य होते हैं— भक्तिरस ही अमृतसिन्धु, नानाविध मुक्ति नदियों का आश्रय एवं परमपरमानन्द स्वरूप है; उसमें भक्तगण विचरण करते रहते हैं, अतएव मुक्तिरूपा नदी का वे सब आदर नहीं करते हैं।

इसलिए जन्ममृत्यु आदि बन्ध दुःख परम्परा से उत्पन्न कालरूप जाल से जो भय है, उसका भी उन्होंने तिरस्कार कर दिया है। इस प्रकार के भक्तों को मैं प्रणाम करता हूँ॥ ४॥

**मीमांसकवडवाऽग्नेः कठिनामपि कुण्ठयन्नसौ जिह्वाम्।**
**स्फुरतु सनातन! सुचिरं तव भक्तिरसामृताम्भोधिः॥ (५)**

### अनुवाद

हे सनातन (श्रीकृष्ण एवं श्रीगुरु)! आपका यह भक्तिरसामृतसिन्धु मीमांसकरूप वडवाग्नि की कठिन जिह्वा को पराभूत करे तथा सुचिरकाल तक स्फुरित अर्थात् विराजित हो॥ ५॥

### दुर्गमसङ्गमनी

अथ निजग्रन्थस्य विरोधिकृत-पराभवाभावकरीं सदा स्फूर्त्तिं श्रीगुरुचरणान् प्रार्थयते— मीमांसकेति। मीमांसको द्विविधः, कर्म्मज्ञानविचारभेदेन। वडवाऽग्नेर्जिह्वा ज्वाला तद्भेदेनैवाग्नेः सप्तजिह्वत्वेन प्रसिद्धेः। तां यथा कुण्ठयन्नम्भोधिर्वर्त्तते, तथाऽयमपि मीमांसकानां वचनशक्तिमित्यर्थः। तत्कुण्ठनातिशयविवक्षायामेव तात्पर्य्यात्। उभयत्रापि तदीयरसस्वाभाव्यादिति भावः। अथवाऽन्याम्भोधितो विलक्षणत्वमत्रोक्तम्। तदेवमेतत्पद्यत्रयेण सिन्धुरूपकत्वं त्रिधापि स्थापितम्। सिन्धावन्यत्र वडवाऽग्नेः स्वाभाविकी स्थितिः, अत्र तु मीमांसकस्य यथा कथञ्चिदागन्तुकी स्यादित्याशङ्क्य तदेव प्रार्थितम्॥ ५॥

### अनुवाद

निज ग्रन्थ के विरोधियों के द्वारा किये जाने वाले विरुद्धाचरण को विनष्ट करने वाले इस भक्तिरसामृतसिन्धु की सदा स्फूर्ति के लिए श्रीगुरुचरणों में प्रार्थना करते हैं। मीमांसकेति— मीमांसक दो प्रकार के होते हैं, एक कर्म-मीमांसक अपर ज्ञान-मीमांसक। वड़वानल की जिह्वा अर्थात् ज्वाला के सात भेद हैं, जिससे अग्नि को सप्तजिह्वा कहते हैं। उस वड़वानल को दबाकर जिस प्रकार समुद्र विद्यमान रहता है, उस प्रकार मीमांसक की वचन शक्ति को दबाकर यह ग्रन्थ उत्कर्ष मण्डित हो, अर्थात् अतिशय रूप से कुण्ठित कर सदा विराजमान रहे, यही तात्पर्य है।

उभय पक्ष में ही (अर्थात् समुद्र पक्ष व ग्रन्थ पक्ष में) निजरस के स्वभाव द्वारा पराभव जानना होगा। अथवा अन्य अर्थात् प्राकृत समुद्र से भक्तिरसामृत समुद्र की विशेषता को यहाँ पर दिखाये हैं।

इस प्रकार तीन पद्यों के द्वारा तीन प्रकार से भक्तिरसामृतसिन्धु का सिन्धुरूपकत्व स्थापित हुआ। प्राकृत सिन्धु में वड़वानल की स्वाभाविक स्थिति होती है, किन्तु यहाँ पर मीमांसक की यथा कथञ्चित् आगन्तुक स्थिति हो सकती है, इसी आशंका से इस प्रकार प्रार्थना कर रहे हैं॥ ५॥

### अर्थरत्नाल्प-दीपिका

अथ निजग्रन्थस्य विरोधिकृतप्रतिबन्धनाशपूर्व्विकां बहुकालस्फूर्त्तिं पूर्व्ववत् श्रीकृष्णगुरू प्रार्थयते— मीमांसकेति, पूर्व्वोत्तरभेदेन मीमांसको द्विविधः। यथाम्भोधिर्वड़वाग्नेर्ज्वालात्मिकां जिह्वां कठिनाममृद्वीमपि स्वस्य रसस्वभावेन कुण्ठयन् सुचिरं स्फुरति, तथायमपि मीमांसकानां तां कुण्ठयन्

पूर्व्वपक्षासमर्थां कुर्व्वन् स्फुरतु विराजतां, तत्कृपयैव भवत्वित्यर्थः। गुरुपक्षे तु रस्यभावत्वेन तवेति सम्बन्धः॥ ५॥

## अनुवाद

अनन्तर, निजग्रन्थ के विरोधिजन के द्वारा कृत प्रतिबन्ध का नाश करने वाली भक्तिरसामृतसिन्धु की बहुकाल स्फूर्त्ति हो, इसलिए श्रीकृष्ण और गुरुदेव दोनों को प्रार्थना करते हैं।

पूर्व (कर्म), उत्तर (ज्ञान) भेद से मीमांसक दो तरह के हैं। समुद्र जिस प्रकार अपने जल से कठिन वड़वानल की ज्वालात्मिका जिह्वा को निज रस अर्थात् जल के स्वभाव के द्वारा कुण्ठित कर सदा स्फूर्त्ति प्राप्त करता है, उस प्रकार यह भक्तिरसामृतसिन्धु ग्रन्थ भी मीमांसकों को कुण्ठित करके अर्थात् भक्तिविषय में खण्डन करने के लिए असमर्थ बनाकर, विजयी होकर विराजित हो। यह कार्य श्रीकृष्ण की कृपा से ही सम्भव है। गुरु के पक्ष में रस्य भाव रूप से श्रीगुरुदेव की स्फूर्त्ति विरोधियों की विनाशक होगी॥ ५॥

## भक्तिसार-प्रदर्शिनी

अथ निजग्रन्थस्य विरोधिकृतपराभवाभावकरीं सदा स्फूर्त्तिं प्रार्थयते— मीमांसक इति। हे सनातन! तव भक्तिरसामृताम्भोधिः सुचिरं मयि स्फुरतु। किं कुर्वन्?— मीमांसक रूपवड़वाग्नेर्जिह्वाज्वाला तत्तद्भेदेनैवाग्नेः सप्तजिह्वत्वेन प्रसिद्धेः; तां यथा कुण्ठयन्नम्भोधिर्वर्त्तते, तथायमपि मीसांसकानां वचनशक्तिमित्यर्थः॥ ५॥

## अनुवाद

अनन्तर भक्तिरसामृतसिन्धु नामक निज ग्रन्थ की विरोधिकृत पराभवाभावकरी स्फूर्त्ति की प्रार्थना करते हैं— हे सनातन! आपका भक्तिरसामृतसिन्धु चिरकाल उत्तमरूप से मुझको स्फूर्त्ति को प्राप्त हो।

क्या करते हुए स्फूर्त्ति प्राप्ति हो? कहते हैं— मीमांसकरूप बड़वाग्नि की जिह्वाज्वाला, जिसके सात भेद हैं, जिससे अग्नि को सप्तजिह्वा कहते हैं; उसको दबाकर जिस प्रकार समुद्र अपने जल से महीयान् होकर रहता है, उस प्रकार भक्तिरसामृतसिन्धु ग्रन्थ भी अपने भक्तिरस से मीमांसक की वचन शक्ति को दबाकर विराजित हो॥ ५॥

**भक्तिरसस्य प्रस्तुतिरखिलजगन्मङ्गलप्रसङ्गस्य।**
**अज्ञेनापि मयाऽस्य क्रियते सुहृदां प्रमोदाय ॥ (६)**

## अनुवाद

अज्ञ होने पर भी भक्तिरस रसिक सुहृद्जनों को आनन्दित करने के लिए, समस्त जगत के मङ्गल स्वरूप श्रीकृष्ण का प्रसंग जिसमें है, उस भक्तिरस का प्रणयन कर रहा हूँ॥ ६॥

## दुर्गमसङ्गमनी

मम पुनरनुकूलानां प्रतिकूलानाञ्च पण्डितानां समाधाने न शक्तिः, किन्त्वेतदर्थमेवेदं क्रियत

इत्याह– भक्तिरसस्येति। अज्ञेनेति। पूर्ववद्दैन्येऽपि न विद्यते ज्ञो यस्मात्तेनेति ज्ञेयम्। अपिरत्र स्वतः प्रयोजनाभावं व्यञ्जयति॥ ६॥

## अनुवाद

अनुकूल व प्रतिकूल पण्डितों के प्रश्नों का समाधान करने की शक्ति मुझमें नहीं है, किन्तु अज्ञ होने पर भी भक्तिरस का वर्णन निरुपाधि हितकर्त्ता सुहृदों के प्रमोद के लिए कर रहा हूँ। पहले 'वराक' शब्द का प्रयोग जिस प्रकार दैन्य से किया गया है, उसी प्रकार यहाँ पर 'अज्ञ' शब्द का भी प्रयोग किया गया है। अर्थ है– इनके अपेक्षा कोई ज्ञानी नहीं है, इस प्रकार महाज्ञानी होकर इस ग्रन्थ का प्रणयन कर रहे हैं। अपि शब्द से स्वतः प्रयोजनाभाव व्यञ्जित किया है ॥ ६॥

## अर्थरत्नाल्प-दीपिका

ननु किमर्थमेतादृश आग्रह इति चेत्तत्र भक्तिरसतत्पराणां निरुपाधिहितकर्तृणां प्रीतयेऽस्यारम्भः क्रियते; प्रसङ्गात् सर्वलोकमङ्गलञ्च स्यादित्याह,– भक्तिरसस्येति; निजप्रौढ़िं वारयितुं 'हृदि यस्य प्रेरणया प्रवर्त्तितोऽहं वराकरूपोऽपि' इति स्मारयति,– अज्ञेनापीति॥ ६॥

## अनुवाद

इस प्रकार ग्रन्थ करने का आग्रह क्यों कर रहे हैं? कहते हैं– भक्तिरसतत्पर निरुपाधि हितकर्त्ता सुहृद्जनों को आनन्दित करने के लिए इसका प्रणयन कर रहा हूँ। इसके प्रसंग से समस्त लोकों का मङ्गल होगा।

निज पाण्डित्याभिमान का वारण करने के लिए 'हृदय में जिनकी प्रेरणा प्राप्त कर, स्वयं क्षुद्र होकर भी ग्रन्थ रचना में प्रवृत्त हो रहा हूँ, उन चैतन्यदेव श्रीहरि के पादपद्म की वन्दना कर रहा हूँ' इस वाक्य को स्मरण दिलाते हुए कहते हैं– मैं अज्ञ होकर भी जगन्मङ्गलकारी भक्तिरस का प्रणयन कर रहा हूँ। इससे शोभन हृदय वाले सुखी होंगे॥ ६॥

## भक्तिसार-प्रदर्शिनी

मम पुनरनुकूलानां प्रतिकूलानाञ्च पण्डितानां समाधाने न शक्तिः, किन्तु सुहृदां प्रमोदार्थमेव क्रियते इत्याह– भक्तिरसस्येति। अखिल जगन्मङ्गलस्य श्रीकृष्णस्य प्रसङ्गो यत्र तथाविधस्य भक्तिरसस्य प्रस्तुतिर्मया क्रियते। अज्ञेनेति– पूर्ववद् दैन्येऽपि न विद्यते ज्ञो यस्मात्तेनेति॥ ६॥

## अनुवाद

अनुकूल, प्रतिकूल पण्डितों के वचनों का समाधान करने में मेरी शक्ति नहीं है, किन्तु सुहृदों को आनन्दित करने के लिए प्रणयन कर रहा हूँ। जिसमें अखिल जगन्मङ्गलकारी श्रीकृष्ण का प्रसङ्ग है, उस प्रकार भक्तिरस की प्रस्तुति मैं कर रहा हूँ। पहले जैसे 'वराक' शब्द का प्रयोग दीनता प्रकट करने के लिये किये थे उसी प्रकार यहाँ पर भी 'अज्ञ' शब्द का प्रयोग दैन्य से कर रहे हैं। वस्तुतः उनके समान कोई पण्डित नहीं है, इस प्रकार परमविज्ञ होकर जनगण मङ्गल के लिए भक्ति रस की प्रस्तुति कर रहे हैं॥ ६॥

**एतस्य भगवद्भक्तिरसामृतपयोनिधेः।**
**चत्वारः खलु वक्ष्यन्ते भागाः पूर्वादयः क्रमात्॥ (७)**

### अनुवाद

इस भगवद्भक्तिरसामृत पयोनिधि में पूर्वादि चार विभाग क्रम से वर्णित होंगे॥ ७॥

### दुर्गमसङ्गमनी

अथ ग्रन्थमारब्धुं तत्परिपाटीं दर्शयति– एतस्येति– चतुर्भिः॥ ७॥

### अनुवाद

ग्रन्थ आरम्भ करने के लिए उसकी परिपाटी को एतस्य इत्यादि चार श्लोकों के द्वारा कहते हैं॥७॥

### अर्थरत्नाल्प-दीपिका

ग्रन्थस्य सिन्धुसदृशीमनुक्रमणिकां दर्शयति,– एतस्येत्यादि त्रिभिः॥ ७॥

### अनुवाद

ग्रन्थ का रूपक सिन्धु के साथ करने के कारण उसकी सिन्धुसदृश अनुक्रमणिका को कहते हैं, एतस्य इत्यादि तीन श्लोकों के द्वारा॥ ७॥

### भक्तिसार-प्रदर्शिनी

अथ ग्रन्थमारब्धुं तत्परिपाटीं दर्शयति,– एतस्येति चतुर्भिः॥ ७॥

### अनुवाद

अनन्तर ग्रन्थ आरम्भ करने के लिए उसकी परिपाटी को एतस्य इत्यादि चार श्लोकों के द्वारा कहते हैं॥ ७॥

**तत्र पूर्वे विभागेऽस्मिन् भक्तिभेदनिरूपके।**
**अनुक्रमेण वक्तव्यं लहरीणां चतुष्टयम्॥ (८)**

### अनुवाद

इसमें भक्तिभेदनिरूपक पूर्व विभाग में क्रमपूर्वक चार लहरी वर्णित होंगी॥ ८॥

### अर्थरत्नाल्प-दीपिका

तत्र चतुर्षु विभागेषु मध्ये पूर्व्वे प्रथमे॥ ८॥

### अनुवाद

चार विभागों के मध्य में पूर्व विभाग में क्रम से चार लहरी वर्णित होंगी॥ ८॥

**आद्या सामान्यभक्त्याढ्या द्वितीया साधनान्विता।**
**भावाश्रिता तृतीया च तुर्य्या प्रेमनिरूपिका ॥ (९)**

### अनुवाद

पहले में सामान्य भक्ति का निरूपण, दूसरे में साधन भक्ति का निरूपण, तृतीय में भाव भक्ति का निरूपण और चतुर्थ में प्रेमभक्ति का निरूपण होगा ॥ ९ ॥

### अर्थरत्नाल्प-दीपिका

अनुक्रममाह— आद्या प्रथमा लहरी सामान्या साधनादिविशेषणमप्राप्ता या भक्तिस्तयाढ्या, तुर्य्या चतुर्थी ॥ ९ ॥

### अनुवाद

अनुक्रम को कहते हैं— प्रथम लहरी में साधनादिविशेषण रहित भक्ति का निरूपण होने से वह सामान्यभक्ति संज्ञा प्राप्त है। तुर्य्या अर्थात् चतुर्थ ॥ ९ ॥

**तत्रादौ सुष्ठु वैशिष्ट्यमस्याः कथयितुं स्फुटम्।**
**लक्षणं क्रियते भक्तेरुत्तमायाः सतां मतम् ॥ (१०)**

### अनुवाद

पूर्व विभाग की प्रथम लहरी में स्पष्टरूप से भक्ति के उत्तम वैशिष्ट्य को कहने के लिए पहले महाजन (नारदादि) सम्मत उत्तमा भक्ति का लक्षण करता हूँ ॥ १० ॥

### दुर्गमसङ्गमनी

तत्रादाविति। तत्र पूर्वविभागगतप्रथमलहर्य्याम्, आदौ प्रथमत एव उत्तमायाः भक्तेर्लक्षणं क्रियते, प्रतिपाद्यत्वेन विधीयते, न तु सर्वात्मिकायाः। तत्र हेतुः— सुष्ठु वैशिष्ट्यं कथयितुमिति।
अन्यत्रान्याभिलाषज्ञानकर्म्माद्यावृतत्वेनापूर्णबलत्वात्, एतदंशत एवास्यास्तादृशत्वव्यक्तेः।
(भा. ५-१८-१२) 'यस्यास्ति भक्तिर्भगवत्यकिञ्चने'त्यादेश्च ॥ १० ॥

### अनुवाद

भक्तिरसामृतसिन्धु के पूर्व विभागगत प्रथम लहरी में पहले उत्तमा भक्ति का लक्षण करेंगे, जिसका प्रतिपादन सम्पूर्ण ग्रन्थ में करेंगे, समस्त प्रकार की भक्ति का विवरण नहीं देंगे। उसका कारण कहते हैं— 'भक्ति के वैशिष्ट्य को सुष्ठुरूप से कहने के लिए'। अन्यत्र भक्ति अन्याभिलाष व ज्ञान कर्मादि से आवृत होने के कारण वह अपूर्ण बलशाली है। इसी अंश में इस भक्ति का तादृशत्व अर्थात् उत्तमत्व कहा गया है। श्रीमद्भागवत के (५-१८-१२) में उक्त है—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः॥

जिस पुरुष की भगवान् में निष्काम भक्ति है, उसके हृदय में समस्त देवता धर्म-ज्ञानादि सम्पूर्ण सद्‌गुणों के साथ सदा निवास करते हैं, किन्तु जो भगवान का भक्त नहीं है, उसमें महापुरुषों के वे गुण आ ही कहाँ से सकते हैं? वह तो तरह-तरह के सङ्कल्प करके निरन्तर तुच्छ बाहरी विषयों की ओर ही दौड़ता रहता है॥ १०॥

## अर्थरत्नाल्प-दीपिका

अथ ग्रन्थमारभमाणो भक्तेर्लक्षणं प्रतिजानीते,— तत्रादावित्येकेन। तत्र पूर्व्व विभागप्रथमलहर्य्याम्, आदौ प्रथमतः, वैशिष्ट्यं— साधनं भाव प्रेमेति त्रैविध्यं; लक्षणमसाधारणो धर्मः, लक्षणं विना वैशिष्ट्यकथनासम्भवात्। किम्भूतं तत्? सतां नारदादीनां सम्मतं, न स्वकपोलकल्पितम्॥ १०॥

## अनुवाद

भक्तिरसामृतसिन्धु नामक ग्रन्थ आरम्भ करते हुए भक्ति का लक्षण करने की प्रतिज्ञा करते हैं, दश संख्यक पद्य के द्वारा। पूर्व विभाग के प्रथम लहरी में पहले भक्ति का वैशिष्ट्य दिखाने के लिए, भक्ति— साधन भक्ति, भाव भक्ति एवं प्रेम भक्ति भेद से तीन प्रकार की है। असाधारण धर्म ही लक्षण होता है। लक्षण के बिना वैशिष्ट्य नहीं कहा जा सकता है, इसलिए लक्षण की आवश्यकता है। वह लक्षण किस प्रकार होगा? श्रीनारदादि सम्मत होगा, स्वकपोलकल्पित नहीं होगा॥ १०॥

## भक्तिसार-प्रदर्शिनी

तत्रादाविति,— तत्र पूर्वविभागगतप्रथमलहर्य्याम्; आदौ प्रथमत एव उत्तमाया भक्तेर्लक्षणं क्रियते, प्रतिपाद्यतयाभिधीयते, न तु सर्वात्मिकायाः। लक्षणकरणे हेतुमाह,— सुष्ठु वैशिष्ट्यं वैलक्षण्यं कथयितुमिति। अन्यत्रान्याभिलाषज्ञानकर्माद्यावृतत्वेनापूर्णबलवत्त्वादेतदंशत एवास्याः शुद्धभक्तेर्वैलक्षण्यव्यक्तेः। यथोक्तं श्रीभागवते (५-१८-१२) 'यस्यास्ति भक्तिर्भगवत्यकिञ्चना' इत्यादेः॥ १०॥

## अनुवाद

पूर्व विभागगत प्रथम लहरी में पहले उत्तमा भक्ति का लक्षण करेंगे, प्रतिपाद्यरूप में वर्णन करेंगे, अर्थात् लक्षणाक्रान्त भक्ति का ही प्रतिपादन करेंगे। समस्त प्रकार की भक्ति का विवरण नहीं देंगे। लक्षण करने के कारण क्या हैं? कहते हैं, भक्ति का वैलक्षण्य सुन्दर रूप से दिखाने के लिए। अन्य (उत्तमाभक्ति के लक्षण से रहित सकामादि) भक्ति अन्याभिलाष व ज्ञान कर्मादि से आवृत होने के कारण अपूर्ण बलशाली है। इसी अंश में इस शुद्धभक्ति की विलक्षणता को कहा गया है। जैसा कि श्रीमद्‌भागवत (५-१८-१२) में उक्त है—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः॥

जिस पुरुष की भगवान् में निष्काम भक्ति है, उसके हृदय में समस्त देवता धर्म-ज्ञानादि सम्पूर्ण

सद्गुणों के साथ सदा निवास करते हैं, किन्तु जो भगवान का भक्त नहीं है, उसमें महापुरुषों के वे गुण आ ही कहाँ से सकते हैं? वह तो तरह-तरह के सङ्कल्प करके निरन्तर तुच्छ बाहरी विषयों की ओर ही दौड़ता रहता है॥ १०॥

**अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम्।**
**आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥ (११)**

### अनुवाद

अन्याभिलाषिता शून्य, ज्ञान कर्मादि के द्वारा अनावृत, आनुकूल्य से कृष्णानुशीलन को उत्तमा भक्ति कहते हैं॥ ११॥

### दुर्गमसङ्गमनी

अथ तस्या लक्षणं वदन्नेव ग्रन्थमारभते- अन्येति। अनुशीलनमत्र क्रियाशब्दवद्धात्वर्थमात्रमुच्यते। धात्वर्थश्च द्विविधः- प्रवृत्तिनिवृत्त्यात्मकः कायवाङ्मानसीयस्तत्तच्चेष्टारूपः; प्रीतिविषादात्मको मानसस्तत्तद्भावरूपश्च। सत्वाऽसत्वे तु परस्परोपमर्द्दितत्वाच्चेष्टाऽन्तर्गते एव। तदेवं सति कृष्णसम्बन्धि कृष्णार्थं वा अनुशीलनं कृष्णानुशीलनमिति। तत्सम्बन्धमात्रस्य तदर्थस्य वा विवक्षितत्वाद्गुरुपादाश्रयादौ भावरूपस्यापि क्रोडीकृतत्वात् तत्-स्थायिनि व्यभिचारिषु च भावेषु नाव्याप्तिः।

एतच्च कृष्णतद्भक्तकृपयैक लभ्यं, श्रीभगवतः स्वरूपशक्तिवृत्तिरूपमतोऽप्राकृतमपि कायादिवृत्तितादात्म्येनैव तत्र तत्राविर्भूतमिति ज्ञेयम्। अग्रे तु स्पष्टीकरिष्यते (१-३-१)।

कृष्णशब्दश्चात्र स्वयं भगवतः श्रीकृष्णस्य तद्रूपाणां चान्येषामपि ग्राहकः। तारतम्यञ्चाग्रे विवेचनीयं (२-१-२२०-२२४)।

तत्र भक्तिमात्रत्वसिद्ध्यर्थं विशेषणमानुकूल्येनेति। प्रातिकूल्ये भक्तित्वाप्रसिद्धेः। आनुकूल्यञ्चास्मिन्नुद्देश्याय श्रीकृष्णाय रोचमाना प्रवृत्तिः। प्रातिकूल्यन्तु तद्विपरीतं ज्ञेयम्।

तृतीया चेयं विशेषण एव, न तु उपलक्षणे, ततश्च यथा शस्त्रिणः समानयेत्युक्ते शस्त्राणामपि समानयनं प्रसज्यते तथानुकूल्यस्यापि भक्तित्वविधानं। न तु शस्त्रिणो भोजयेत्यत्र शस्त्राणामभोजनवत् तदविधानम्। नन्वानुकूल्यं भक्तिरित्येवास्तां, ततश्च राजाऽयं गच्छतीत्यत्र राजपदेन तत्परिकराणां ग्रहणं स्यात्! सत्यं। तथापि धात्वर्थभेदानां स्पष्टा प्रतिपत्तिर्न स्यादिति धात्वर्थमात्रग्रहणायानुशीलनपदमुपादीयते।

अन्विति पदं चानुकूल्ये जाते मुहुरेव शीलनं स्यादित्यभिप्रायेण कृतम्; तदेतत्स्वरूपलक्षणम्।

उत्तमात्वसिद्ध्यर्थन्तु तटस्थलक्षणेन विशेषणद्वयम्। अन्याभिलाषिताशून्यमिति। अत्रान्येति भक्त्येकाभिलाषेण युक्तमित्यर्थः। ज्ञानमत्र निर्भेदब्रह्मानुसन्धानं; न तु भजनीयतत्वानुसन्धानमपि, तस्यावश्यापेक्षणीयत्वात्। कर्म्म चात्र स्मृत्याद्युक्तं नित्यनैमित्तिकादि, न तु भजनीयपरिचर्य्यादि, तस्य तदनुशीलनरूपत्वात्। आदिशब्देन वैराग्ययोगसांख्याभ्यासादयः। अत्र श्रीकृष्णानुशीलनं कृष्णभक्तिरिति

वक्तव्ये भगवच्छास्त्रेषु केवलस्य च भक्तिशब्दस्य तत्रैव विश्रान्तिरित्यभिप्रायात्तथोक्तं, तथैव ह्यग्रिमवाक्यमिति॥ ११॥

## अनुवाद

उत्तमाभक्ति का लक्षण करते हुये ग्रन्थ का आरम्भ कर रहे हैं—

अन्याभिलाषिता शून्यं ज्ञान कर्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥

भक्ति भिन्न अपर अभिलाषिता शून्य, ज्ञान कर्म के द्वारा अनावृत, आनुकूल्य से कृष्णानुशीलन करना ही उत्तमा भक्ति है।

लक्षण में उक्त अनुशीलन पद से क्रियाशब्दवत् धातु के अर्थमात्र को जानना होगा। धातु का अर्थ द्विविध है— प्रवृत्ति-निवृत्ति मूलक काय-वाङ्-मानस चेष्टा रूप; प्रीति विषादात्मक मानसिक भाव रूप। सत्त्व-असत्त्व परस्पर का उपमर्दक होने से चेष्टा के अन्तर्गत माने जाते हैं। ऐसा होने पर, कृष्ण सम्बन्धि एवं कृष्ण के लिए अनुशीलन है— कृष्णानुशीलन।

उनसे सम्बन्धित मात्र के लिये और उनके लिये आनुकूल्यानुशीलन कहने से श्रीगुरुपादाश्रयादि में भावभक्ति का भी ग्रहण होने से स्थायी एवं व्यभिचारी भावों में इस लक्षण का अव्याप्ति दोष नहीं होता है।

इस उत्तमा भक्ति की प्राप्ति केवल श्रीकृष्ण एवं श्रीकृष्ण के भक्तों की कृपा से ही होती है। श्री भगवान् की स्वरूप शक्ति की वृत्तिरूप होने से यह अप्राकृत होकर भी शरीर, वाक्य एवं मन की वृत्तियों के साथ एकीभूत होकर भक्तजनों में आविर्भूत होती है। आगे ग्रन्थ में (१-३-१) इस बात को स्पष्ट करेंगे।

लक्षण में जो कृष्ण शब्द का प्रयोग हुआ है, उससे स्वयं भगवान् श्रीकृष्ण, उनके समस्त रूपों एवं अन्य अवतारों का भी ग्रहण हुआ है। इनके तारतम्य का विवेचन आगे (२-१-२२०-२२४) में होगा।

नित्य-गुणो वनमाली, यदपि शिखामणिरशेषनेतृणाम्।
भक्तापेक्षिकमस्य, त्रिविधत्वं लिख्यते तदपि॥
हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा।
श्रेष्ठ मध्यादिभिः शब्दैर्नाट्ये यः परिपठ्यते॥
प्रकाशिताखिल-गुणः स्मृतः पूर्णतमो बुधैः।
असर्वव्यञ्जकः पूर्णतरः पूर्णोऽल्पदर्शकः॥
कृष्णस्य पूर्णतमता व्यक्ताभूद् गोकुलान्तरे।
पूर्णता पूर्णतरता द्वारका मथुरादिषु॥
स पुनश्चतुर्विधः स्याद् धीरोदात्तश्च धीरललितश्च।
धीरप्रशान्तनामा, तथैव धीरोद्धतः कथितः॥

निखिल नायक चूड़ामणि श्रीकृष्ण नित्य गुणशाली होने पर भी भक्त की भक्ति के अनुसार

प्रकाश हेतु उनके तीन प्रकार के रूप लिखित हो रहे हैं।

हरि पूर्णतम, पूर्णतर व पूर्ण, इन तीन रूपों में हैं। नाट्यशास्त्र में इसी को श्रेष्ठ मध्यमादि शब्द से कहा गया है।

निखिल गुण प्रकाश होने पर पूर्णतम, उससे थोड़ा कम होने पर पूर्णतर, उससे भी कम होने पर पूर्ण हैं।

कृष्ण की गोकुल में पूर्णतमता, मथुरा में पूर्णतरता एवं द्वारका में पूर्णता व्यक्त हुई है।

यह पुनः चार प्रकार होते हैं– धीरोदात्त, धीरललित, धीरप्रशान्त और धीरोद्धत।

भक्तिमात्रत्व सिद्धि के लिए कृष्णानुशीलन का विशेषण दिया है– आनुकूल्य से। क्योंकि प्रतिकूल आचरण होने से भक्ति नहीं होगी। आनुकूल्य शब्द का अर्थ है– उद्देश्य श्रीकृष्ण को जो अच्छा लगे उस प्रकार की प्रवृत्ति। प्रतिकूल ठीक इसके विपरीत है, जो कृष्ण को अच्छा नहीं लगता वह प्रतिकूल है।

आनुकूल्येन– यहाँ पर जो तृतीया विभक्ति है, वह विशेषण के अर्थ में है, जो सदा सर्वदा रहता है। यह उपलक्षण अर्थ में नहीं है, जो कभी रहता है कभी नहीं रहता, इस प्रकार आनुकूल्य नहीं होना चाहिये। जैसे शस्त्रधारियों को ले आओ, कहने से शस्त्र के साथ लाना बोध होता है, इसी प्रकार यहाँ पर आनुकूल्य का भी भक्तित्व विधान किया गया है। शस्त्रधारी को भोजन करवाओ, कहने पर शस्त्रों को भोजन नहीं करवाना बोध होता है, इस प्रकार नहीं।

तब तो आनुकूल्य ही भक्ति है, इस प्रकार कहना ठीक है, जैसे राजा जा रहे हैं, इस प्रकार कहने से परिकरों के साथ राजा का जाना प्रतीत होता है। कहना ठीक है, तथापि धात्वर्थ समूह का जो भेद है, उसका स्पष्ट ज्ञान नहीं होगा, इसलिए समस्त क्रियाओं का सुस्पष्ट बोध नहीं होगा, इसलिए धात्वर्थ मात्र को ग्रहण करने के लिए अनुशीलन पद का प्रयोग किया गया है।

अनुशीलन शब्द में जो अनु पद दिया गया है, उससे बोध होता है कि अनवरत, बारम्बार, सदा-सर्वदा आनुकूल्य से अनुशीलन करना है।

अब तक कथित 'आनुकूल्य से कृष्णानुशीलन करना' यह भक्ति का स्वरूप लक्षण है।

भक्ति के उत्तमात्व सिद्धि के लिए तटस्थ लक्षण (जो स्वरूप के बाहर रहकर परिचय करवाता है) के द्वारा दो विशेषण देते हैं–

प्रथम विशेषण है– अन्याभिलाषिताशून्यं– एकमात्र भक्ति के अभिलाष से युक्त होना चाहिये। भक्ति को छोड़कर अपर अभिलाष कृष्ण के भजन में नहीं होनी चाहिये।

दूसरा विशेषण है–ज्ञान कर्म्माद्यनावृतम्– ज्ञान कर्म से आच्छादित नहीं होना चाहिये। यहाँ ज्ञान शब्द से निर्भेदब्रह्मानुसन्धानरूप ज्ञान को जानना होगा। भजनीय के अनुसन्धानरूप जो ज्ञान है, उसको नहीं, क्योंकि भजनीय के अनुसन्धान आदि ज्ञान की परम आवश्यकता है। कर्म के द्वारा भी 'आनुकूल्येन कृष्णानुशीलनम्' ढका हुआ नहीं होना चाहिये। यहाँ कर्म से तात्पर्य है स्मृति आदि में उक्त नित्य-नैमित्तिकादि कर्म न कि भजनीय परिचर्यादि रूप कर्म, क्योंकि भजनीय परिचर्यादि रूप कर्म

कृष्णानुशीलन रूप हैं।

ज्ञान कर्मादि—अनावृतम्, यहाँ पर जो आदि शब्द है, उससे वैराग्य-योग-सांख्य प्रभृति के अभ्यास को जानना चाहिये। अभिप्राय यह है कि कृष्णानुशीलन को इन वैराग्यादि से अनावृत होना चाहिए।

यहाँ श्लोक में 'श्रीकृष्णानुशीलनं कृष्णभक्ति' इस प्रकार कथन ठीक होने पर भी भगवत् शास्त्रों में केवल भक्ति शब्द का प्रयोग श्रीकृष्ण भक्ति में ही पर्यवसित हुआ है, इसी अभिप्राय से केवल भक्ति शब्द का प्रयोग किया गया है। ऐसा अग्रिम वाक्य (१-१-१२) में दिखाया गया है॥ ११॥

## अर्थरत्नाल्प-दीपिका

कृष्णानुशीलनं कृष्णस्य देहेन्द्रियान्तःकरणैरभ्यासः, 'शील उपधारण' इति चौरादिको धातुः। कृष्णशब्दश्चात्र यत्र ग्रन्थे यस्य भगवतः प्रतिपादनं तत्र तस्य नाम देयमिति नारायणादीनामुपलक्षणम्। यस्यानुशीलनं तस्यार्थत एव प्राप्तिः स्यादित्यभिप्रेत्य भक्तिरित्येवोक्तं, न तु कृष्णभक्तिरिति। तत्र भक्तिमात्रसिद्ध्यर्थं विशेषणम्— आनुकूल्येनेति, आनुकूल्यं कृष्णरोचकप्रवृत्तिः, तृतीयेयं विशेषणे, नतूपलक्षणे,— शस्त्रिणः समानयेतिवदानुकूल्यस्यापि भक्तित्वविधानमुत्तमात्वसिद्ध्यर्थम् तटस्थलक्षणेनान्येत्यादिविशेषणद्वयम्, ज्ञानमाध्यात्मिकं, कर्म नित्यनैमित्तिकदानव्रतादि— स्मृत्याद्युक्तम्, आदि पदेनालस्यं गृहीतम्। लक्षणमिदमासाधनमामहाभावमन्वेति॥ ११॥

## अनुवाद

कृष्णानुशीलन शब्द का अर्थ है— कृष्ण का देह, इन्द्रिय और अन्तःकरण के द्वारा अभ्यास करना। शील धातु उपधारण अर्थ में चुरादिगण का धातु है।

कृष्णानुशीलन में कृष्ण शब्द का प्रयोग इसलिए हुआ है कि जिस ग्रन्थ में जिन भगवान् का प्रतिपादन होगा वहाँ उनका नाम देना कर्त्तव्य है। इससे नारायण प्रभृति के नाम को भी उपलक्षण द्वारा जानना होगा।

जिसका अनुशीलन होगा अर्थ से ही उसकी प्राप्ति होगी, इस अभिप्राय से भक्ति शब्द का प्रयोग किया है, न कि कृष्णभक्ति का प्रयोग।

यहाँ पर भक्तिमात्र सिद्धि के लिए विशेषण दिया गया है— आनुकूल्येन; आनुकूल्य है— कृष्ण की रुचिकर प्रवृत्ति। यहाँ पर आनुकूल्येन तृतीया विभक्ति विशेषण में हुआ है, न कि उपलक्षण में। अर्थात् सदा सर्वदा आनुकूल्य रहना चाहिये। कदाचित् नहीं। यथा— शस्त्रधारियों को ले आओ, कहने से जिस प्रकार शस्त्र के साथ ही शस्त्रधारियों को लाया जाता है, उसी प्रकार आनुकूल्य के साथ ही कृष्णानुशीलन करने से भक्ति होगी।

जो भक्ति के स्वरूप में रहेगा उस आनुकूल्य विशेषण को दिखाकर अब भक्ति के उत्तमात्व की सिद्धि के लिए, जो स्वरूप में नहीं रहेगा, बाहर रहेगा, इस प्रकार तटस्थ लक्षण के द्वारा दो विशेषण देते हैं— ज्ञान, कर्म आदि के द्वारा अनावृत होनी चाहिये। यहाँ पर ज्ञान शब्द से आध्यात्मिक ज्ञान को जानना चाहिये। कर्म शब्द से स्मृत्याद्युक्त नित्य-नैमित्तिक दान-व्रतादि कर्म को जानना चाहिए। एवं आदि पद

से आलस्य को ग्रहण करना होगा।

अन्याभिलाषिताशून्यं इत्यादि श्लोक में उत्तमा भक्ति का जो लक्षण वर्णित हुआ है उसकी व्याप्ति भक्ति के प्रथम सोपान साधनभक्ति से लेकर चरम अवस्था महाभाव पर्यन्त तक है॥ ११ ॥

## भक्तिसार-प्रदर्शिनी

अथ तस्या लक्षणं वदन्नेव ग्रन्थमारभते,— अन्येति। यथा क्रियाशब्देन धात्वर्थमात्रमुच्यते, तथात्रानुशीलनशब्देनापि धात्वर्थमात्रमुच्यते। धात्वर्थश्च द्विविधः; प्रवृत्तिनिवृत्त्यात्मकः। तत्र प्रवृत्त्यात्मकधात्वर्थस्तु कायवाङ्मानसीयतत्तच्चेष्टारूपः। निवृत्त्यात्मकधात्वर्थश्च प्रवृत्तिभिन्नः, प्रीतिविषादात्मको मानसः तत्तद्भावरूपश्च, स च वक्ष्यमाणरतिप्रेमादिस्थायिभावरूपश्च, सेवानामापराधानामुद्भवाभावकारितेत्यादिवचनव्यञ्जितसेवानामापराधाद्यभावरूपश्च। तदेवं सति कृष्णसम्बन्धि कृष्णार्थं वाऽनुशीलनमिति तत्सम्बन्धमात्रस्य तदर्थस्य वा विवक्षितत्वाद् गुरुपादाश्रयादौ भावरूपस्यापि क्रोड़ीकृतत्वात् रत्यादिस्थायिनि व्यभिचारिभावेषु च नाव्याप्तिः।

एतच्च कृष्णतद्भक्त कृपयैव लभ्यम्, श्रीभगवतः स्वरूपशक्तिवृत्तिरूपं कायादिवृत्तिरूपेणाविर्भूतमेव ज्ञेयम्। अग्रे स्पष्टीकरिष्यते (१-३-१)।

कृष्णशब्दश्चात्र स्वयं भगवतः श्रीकृष्णस्य तद्रूपाणां चान्येषामवताराणां ग्राहकः। तारतम्यमग्रे विवेचनीयम् (२-१-२२०-२२४)।

तत्र भक्तिस्वरूपतासिद्ध्यर्थं विशेषणमाह,— आनुकूल्येनेति, प्रातिकूल्ये भक्तित्वाप्रसिद्धेः। आनुकूल्यञ्चोद्देश्याय श्रीकृष्णाय रोचमाना प्रवृत्तिरित्युक्ते लक्षणेऽतिव्याप्तिरव्याप्तिश्च। तद् यथा— असुरकर्त्तृकप्रहाररूपानुशीलनं युद्धरस उत्साहरतिः श्रीकृष्णाय रोचते; यथोक्तं प्रथम स्कन्धे (भा. १३-२९) मनस्विनामिव सन् संप्रहारः इति। तथा श्रीकृष्णं विहाय दुग्धरक्षार्थं गताया यशोदायास्तादृशानुशीलनं कृष्णाय न रोचते, यथोक्तं श्रीदशमे (भा. ९-६) 'सञ्जातकोपस्फुरितारुणाधरः' इति। तथा च तत्र तत्रातिव्याप्त्यव्याप्तिवारणायानुकूल्यं नाम प्रातिकूल्यशून्यत्वमेव विवक्षणीयम्। एवं सत्यसुरेषु द्वेषरूपप्रातिकूल्यसत्त्वान्नातिव्याप्तिः। एवं यशोदायाः प्रातिकूल्याभावान्नाव्याप्तिरिति बोध्यम्। एतेन विशेषणस्यानुकूल्यस्यैव भक्तित्वमस्तु, भक्तिसामान्यस्यैव कृष्णाय रोचमानत्वाद् विशेष्यस्यानुशीलनपदस्य वैयर्थ्यमित्यपि शङ्का निरस्ता,— तादृश प्रातिकूल्याभावमात्रस्य घटेऽपि सत्त्वात्।

उत्तमात्वसिद्ध्यर्थं विशेषणद्वयमाह,— अन्याभिलाषिताशून्यमित्यादि। कथम्भूतमनुशीलनम्? अन्यस्मिन् भक्त्यतिरिक्तत्त्वे फलत्वेनाभिलाषशून्यम्— 'भक्त्या सञ्जातया भक्त्या' (भा. ११-३-३१) इत्येकादशोक्तेर्भक्त्युद्देश्यकभक्तिकरणमुचितमेवेत्यतोऽन्यस्मिन् खलु भक्त्यतिरिक्त इति। यथात्रान्याभिलाषशून्यत्वं विहायान्याभिलाषस्वभावार्थकताच्छील्यप्रत्ययेन कस्यचिद् भक्तस्य कदाचिदकस्मात् मरणसङ्कटे प्राप्ते 'हे भगवन् भक्तं मामेतद् विपत्तेः सकाशाद् रक्षेति' कदाचित्काभिलाषसत्त्वेऽपि न क्षतिः, यतस्तस्य वैवश्यहेतुकस्वभावविपर्ययेणैव तादृगभिलाषो, न तु स्वाभाविक इति बोध्यम्। पुनः कीदृशम्? ज्ञानकर्माद्यनावृतम्— ज्ञानमत्र निर्भेदब्रह्मानुसन्धानम्; न तु

भजनीयतत्वानुसन्धानमपि, तस्यावश्यापेक्षणीयत्वात्। कर्म्म स्मार्तनित्यनैमित्तिकादि, न तु भजनीयपरिचर्य्यादि, तस्य तदनुशीलनरूपत्वात्। आदिशब्देन यज्ञ-वैराग्य-योग-सांख्याभ्यासादयस्तैरनावृतम्; न तु पूर्ववच्छून्यमित्यर्थः। तेन च भक्त्यावरकाणामेव ज्ञानकर्मादीनां निषेधोऽभिप्रेतः। भक्त्यावरकत्वं नाम विधिशासनान्नित्यकर्माकरणे प्रत्यवायादिभयाच्छ्रद्धया क्रियमाणत्वं, तथा भक्त्यादिरूपेष्टसाधनत्वाच्छ्रद्धया क्रियमाणत्वञ्च। तेन लोकसङ्ग्रहार्थमश्रद्धयापि पित्रादिश्राद्धं कुर्वतां महानुभावानां शुद्धभक्तौ नाव्याप्तिः। अत्र श्रीकृष्णानुशीलनं कृष्णभक्तिरिति वक्तव्ये भगवच्छास्त्रेषु केवलस्य भक्तिशब्दस्य तत्रैव विश्रान्तिरित्यभिप्रायात्तथोक्तम्॥ ११॥

## अनुवाद

शुद्धभक्ति का लक्षण करते हुए ग्रन्थ आरम्भ कर रहे हैं।

अन्याभिलाषिता से शून्य, ज्ञान कर्म आदि के द्वारा अनावृत, आनुकूल्य से श्रीकृष्णानुशीलन को उत्तमा भक्ति कहते हैं।

क्रिया शब्द से जिस प्रकार धातु के अर्थ मात्र का बोध होता है, उस प्रकार अनुशीलन शब्द से भी धातुओं के अर्थ मात्र का बोध होता है।

धातु के अर्थ दो प्रकार होते हैं— प्रवृत्ति-निवृत्त्यात्मक। प्रवृत्त्यात्मक धातु के अर्थ काय-वाङ्-मानसीय चेष्टारूप हैं। निवृत्त्यात्मक धातु के अर्थ प्रवृत्ति से भिन्न, प्रीति-विषादात्मक मानसिक उन उन भावरूप हैं, ये आगे कथित रति, प्रेमादि स्थायिभावरूप भी हैं। 'सेवानामापराधानामुद्भवाभावकारितेत्यादि' अर्थात् 'सेवापराध, नामापराध के उद्भव का अभाव' इस प्रकार के वचन से तीसरे 'अभावरूप' धातु के अर्थ की भी सूचना मिलती है।

ऐसा होने पर कृष्ण सम्बन्धि, या कृष्ण के लिए अनुशीलन अथवा कृष्ण से सम्बन्ध मात्र या उनके लिये, ऐसा कहने से गुरुपादाश्रयादि में भावरूप अनुशीलन का भी ग्रहण होने से रति प्रभृति स्थायि भाव एवं व्यभिचारिभाव में लक्षण की अव्याप्ति नहीं होती है।

उक्त लक्षणाक्रान्त उत्तमा भक्ति कृष्ण एवं कृष्ण के भक्त की कृपा से ही मिलती है। यह श्री भगवान् की स्वरूप शक्ति की वृत्तिरूप है, तथा शरीर, इन्द्रिय एवं मन की वृत्तियों में आविर्भूत होती है। इस प्रकार जानना होगा। आगे उसका स्पष्टीकरण होगा।

कृष्ण शब्द से यहाँ पर स्वयं भगवान् श्रीकृष्ण, उनके रूपों एवं अन्य अवतार समूह को भी जानना होगा। उनके रूपों के बीच में जो तारतम्य है, उसको आगे कहेंगे।

यहाँ पर भक्ति के स्वरूप की स्थापना के लिए विशेषण 'आनुकूल्य से' दिया गया है, प्रतिकूल आचरण होने पर भक्ति नहीं होती है। आनुकूल्य शब्द का अर्थ— 'उद्देश्य श्रीकृष्ण को जो अच्छा लगे उस प्रकार आचरण करना' कहने से भक्ति लक्षण में अतिव्याप्ति और अव्याप्ति दोष होगा। ये इस प्रकार से हैं— असुरों के द्वारा प्रहार रूप अनुशीलन युद्ध रस है, उत्साह रति है। श्रीकृष्ण को अच्छा लगता है। श्रीमद्भागवत के १-१३-२९ में उक्त है—

है। आसक्ति के बाद ही रति उत्पन्न होती है, यह सुनने में आता है। आसक्ति से युक्त साधन करने पर भी हरि सत्त्वर नहीं देते हैं, विलम्ब से देते हैं, इस प्रकार जानना होगा। 'द्विधा सुदुर्ल्लभा है' इस कथन से यह जानना होगा कि— भक्ति दो प्रकार से सुदुर्ल्लभ है॥ ३५॥

**तत्राद्या, यथा तन्त्रे—**

**ज्ञानतः सुलभा मुक्तिर्भुक्तिर्यज्ञादिपुण्यतः।**
**सेयं साधनसाहस्रैर्हरिभक्तिः सुदुर्ल्लभा॥** (३६)

### अनुवाद

उसमें से प्रथम प्रकार की सुदुर्लभता तन्त्र में इस प्रकार वर्णित है—

ज्ञान से मुक्ति सुलभ है, यज्ञादि पुण्य से भुक्ति अर्थात् भोग सुलभ है, किन्तु सहस्रों साधनों से भी हरिभक्ति सुदुर्लभ है॥ ३६॥

### दुर्गमसङ्गमनी

ज्ञानत इति। तन्त्रमतं तावद्विचार्य्यते। अत्र ज्ञानयज्ञादिपुण्ये सासङ्गे एव वाच्ये, तयोस्तादृशत्वं विना मुक्तिभुक्त्योः सिद्धिरपि न स्यात्। अस्तु तावत्सुलभत्ववार्त्ता। अतः साधनसहस्राणामपि सासङ्गत्वमेव लभ्यते। वाक्यार्थक्रमभङ्गस्यावश्यपरिहार्य्यत्वात् सहस्रबाहुल्यासिद्धेश्च। तत्र यदि ज्ञानयज्ञादिपुण्ययोः सासङ्गत्वं तदेकनिष्ठत्वमात्रं वाच्यं, तदा तादृशाभ्यामपि ताभ्यां तयोः सुलभत्वं नोपपद्यते। (गी. १२-५) "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामित्यादेः," "क्षुद्राशा भूरिकर्म्माणो बालिशा वृद्धमानिनः", (भा.१०-२३-९) इत्यादेश्च। तस्मात्तयोः सासङ्गत्वं नैपुण्येन विहितत्वमित्येव वाच्यं, नैपुण्यञ्च भक्तियोगसंयोक्तृत्वमिति। "पुरेह भूमन् बहवोऽपि योगिनः" (भा. १०-१४-५) इत्यादेः, "स्वर्गापवर्गयोः पुंसाम्" इत्यादेश्च (भा. १०-८१-१९ ), अथ हरिभक्तिशब्देन साध्यरूपो रतिपर्य्यायस्तद्भाव एवोच्यते, (भा. ११-३-३१) भक्त्या सञ्जातया भक्त्येतिवत्। ततश्च साधनशब्देन हरिसम्बन्धिसाधनमेवोच्यते, तत्सम्बन्धित्वं बिना तद्भावजन्मायोगात् तथा च साधनशब्देन साक्षात्तद्भजने वाच्ये तत्र पूर्वक्रमतः सासङ्गत्वे लब्धे सहस्रबहुत्वनिर्द्देशेनापर्य्यवसानात् सुशब्दाच्च भीतस्य कस्यापि तत्र (भावभक्तौ) प्रवृत्तिर्न स्यात्। तेन तत्र सुलभत्वं तु, (भा. २-८-३) ''शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम्। नातिदीर्घेण कालेन भगवान् विशते हृदि॥'' (भा. १-५-२६) ''तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाशृणवं मनोहराः। ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्याङ्ग! ममाभवद्रुचिः॥'' इत्यादौ प्रसिद्धं, तस्मात्साधनशब्देन "न साधयति मां योगो" (भा. ११-१४-२०) इत्यादिवत्तदर्थविनियुक्तकर्म्मादिकमेवोच्यते। अतएव साधनशब्द एव विन्यस्तो, न तु भजनशब्दः। तस्य सासङ्गत्वं नाम च तदर्थविनियोगात् पूर्ववन्नैपुण्येन विहितत्वमेव। तत्साहस्रैरपि सुदुर्ल्लभेत्युक्तिस्तु साक्षात् तद्भजनमेव कर्त्तव्यत्वेन प्रवर्त्तयति। तथाऽपि कारिकायामनासङ्गैरिति यदुक्तं, तत्र चासङ्गेन साधननैपुण्यमेव बोध्यते, तन्नैपुण्यञ्च साक्षात्तद्भजने प्रवृत्तिः। ततश्च तस्य तादृशसामर्थ्येऽप्यन्यत्र

स्वर्गादौ प्रवृत्त्या न विद्यते आसङ्गो नैपुण्यं येषु तादृशैर्नानासाधनैरित्यर्थः। तादृशनानासाधनत्वं तु नेष्टं, ''तस्मादेकेन मनसा भगवान् सात्त्वतां पतिः। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम्॥'' इत्यादौ। (भा. १-२-१४) तस्मादितरमिश्रिताऽपि न युक्तेति साध्वेव लक्षितं ज्ञानकर्म्माद्यनावृतमिति॥ ३६॥

## अनुवाद

निर्भेद ब्रह्मानुसन्धान रूप ज्ञान से मुक्ति सुलभ है, यज्ञादि पुण्य से भुक्ति अर्थात् भोग सुलभ है, किन्तु सहस्रों साधनों से भी हरिभक्ति सुदुर्लभ है। इस प्रकार तन्त्र का मत है, उसका विचार यहाँ पर करते हैं–

यहाँ पर ज्ञान, यज्ञादि पुण्य को आसक्ति के साथ ही करने के लिए कहा गया है, क्योंकि ज्ञान, यज्ञादि पुण्य को आसक्ति के साथ नहीं करने से मुक्ति और भुक्ति की सिद्धि नहीं होगी। सुलभता से मिलने की तो बात ही दूर है।

अतः सहस्र-सहस्र साधन से भी सासङ्गत्व ही लाभ होता है, ऐसा अर्थ प्राप्त होता है। वाक्यार्थ क्रमभङ्ग का परिहार करने हेतु ऐसा समझना आवश्यक है। सहस्र अर्थात् साधन बाहुल्य से मुक्ति और भुक्ति की सिद्धि नहीं होती है, इसलिए भी साधनसाहस्रैः से सासङ्गत्व ही लभ्य है।

यदि सासङ्ग शब्द का अर्थ, एकनिष्ठ होकर कार्य करना है, इस प्रकार करेंगे, तो भी बिना आसक्ति से ज्ञान एवं कर्म के अनुष्ठान से मुक्ति और भोग सुलभ नहीं होंगे। गीता के १२-५ में कहा गया है–

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ताहि गतिर्दुःखं देहवद्भिरवाप्यते॥

उन सच्चिदानन्दघन निराकार ब्रह्म में आसक्त चित्त वाले व्यक्तियों के साधन में अधिकतर परिश्रम ही है, क्योंकि देहाभिमानियों के द्वारा अव्यक्त विषयक गति दुःखपूर्वक प्राप्त की जाती है। श्रीमद्भागवत के १०-२३-९ में उक्त है–

इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः।
क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः॥

इस प्रकार भगवान् के अन्न माँगने की बात सुनकर भी उन ब्राह्मणों ने उस पर कोई ध्यान नहीं दिया। वे चाहते थे, स्वर्गादि तुच्छ फल, और उनके लिए बड़े-बड़े कर्मों में उलझे हुए थे। सच पूछो तो वे ब्राह्मण ज्ञान की दृष्टि से बालक ही थे, परन्तु अपने को बड़ा ज्ञानवृद्ध मानते थे।

इसलिए उन दोनों के सासङ्गत्व शब्द का अर्थ है– निपुणता के साथ आचरण करना। निपुणता का अर्थ है– भक्ति योग के साथ ही करना है। (भा. १०-१४-५) में लिखित है–

पुरेह भूमन् बहवोऽपि योगिनस्तदर्पितेहा निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्॥

हे अच्युत! हे अनन्त! इस लोक में पहले भी बहुत से योगी हो गये हैं। जब उन्हें योगादि के द्वारा आपकी प्राप्ति न हुई, तब उन्होंने अपने लौकिक और वैदिक समस्त कर्म आपके चरणों में समर्पित कर दिये। उन समर्पित कर्मों से, तथा आपकी लीला-कथा से उन्हें आपकी भक्ति प्राप्त हुई। उस भक्ति से ही

आपके स्वरूप का ज्ञान प्राप्त करके उन्होंने बड़ी सुगमता से आपके परम पद की प्राप्ति कर ली। श्रीभागवत के (१०-८१-१९) में लिखित है—

स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम्।
सर्वासामपि सिद्धीनां मूलं तच्चारणार्चनम्॥

स्वर्ग, मोक्ष, पृथ्वी, रसातल की सम्पत्ति तथा समस्त योग सिद्धियों की प्राप्ति का मूल उनके चरणों की पूजा ही है।

यहाँ पर हरि भक्ति शब्द से साध्य रूप रति जिसका अपर नाम है— भाव, को जानना होगा। भागवत के ११-३-३१ में उक्त है—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्॥

श्रीकृष्ण राशि-राशि पापों का नाश एक क्षण में कर देते हैं। सब उन्हीं का स्मरण करें, और एक दूसरे को स्मरण करावें। इस प्रकार साधन भक्ति का अनुष्ठान करते करते प्रेम भक्ति का उदय होने से वे प्रेमोद्रेक से पुलकित शरीर धारण करते हैं।

यहाँ साधन शब्द के द्वारा हरि सम्बन्धी साधन को ही कहा गया है, क्योंकि उसके सम्बन्ध के बिना भाव उत्पन्न हो ही नहीं सकता।

इस प्रकार साधन शब्द से साक्षात् भगवान् का भजन करने; और श्रद्धा इत्यादि क्रम से इसका अनुष्ठान करने से सासङ्गत्व लाभ होगा। इससे सहस्र बहुत्व निर्देश के द्वारा सीमा न होने, और सु शब्द प्रयोग होने के कारण भय से भाव भक्ति में किसी की प्रवृत्ति ही नहीं होगी; ऐसा डर नहीं होगा। भक्ति की सुलभता प्रसिद्ध है— (भा. २-८-३) में उक्त है—

शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम्।
कालेन नातिदीर्घेन भगवान विशते हृदि ॥

जो लोक उनकी लीलाओं का श्रद्धा से नित्य श्रवण और कथन करते हैं, उनके हृदय में थोड़े ही समय में भगवान् प्रकट हो जाते हैं।

भा. १-५-२६ में कथित है—

तत्रान्वहं कृष्ण कथाः प्रगायतामनुग्रहेणाशृणवं मनोहराः।
ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रुचिः॥

'उस सत्सङ्ग में उन लीलागान परायण महात्माओं के अनुग्रह से मैं प्रतिदिन श्रीकृष्ण की मनोहर कथाएँ सुना करता था। श्रद्धापूर्वक एक एक पद श्रवण करते करते प्रिय कीर्त्ति भगवान् में मेरी रुचि हो गयी।' इत्यादि श्लोकों में भक्ति की सुलभता प्रसिद्ध है। (भा. ११-१४-२०) में उक्त है—

न साधयति मां योगो न साख्यं धर्म उद्धव।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥

उद्धव! योग, साधन, ज्ञान, विज्ञान, धर्मानुष्ठान, जप, पाठ, तप और त्याग मुझे प्राप्त कराने में

उतने समर्थ नहीं हैं, जितनी दिनों दिन बढ़ने वाली अनन्य प्रेममयी मेरी भक्ति।

इन सबकी भाँति उन श्रीकृष्ण के लिए कर्म समूह का भी ग्रहण होता है। अतएव यहाँ पर साधन शब्द का प्रयोग किया गया है, किन्तु भजन शब्द का प्रयोग नहीं हुआ है। साधन और भजन में अन्तर है। सासङ्ग शब्द से श्रीकृष्ण सन्तोष के लिए कर्म पूर्ववत् निपुणता से अर्थात् भक्ति से ही करना चाहिये।

सहस्रों साधनों से भी भक्ति सुलभ नहीं है, इस कथन का तात्पर्य है– साक्षात् रूप से उनका भजन ही करना कर्त्तव्य है। तथापि कारिका में अनासङ्ग शब्द प्रयोग हुआ है, वहाँ आसङ्ग शब्द साधन निपुणता को ही समझाता है। निपुणता है– साक्षात् श्रीकृष्ण के भजन में प्रवृत्ति। अतएव उस प्रकार सामर्थ्य होने पर भी अन्यत्र स्वर्ग आदि प्राप्ति में प्रवृत्ति होने पर आसङ्ग नहीं होगा। अनेक प्रकार के साधनों में लगने से नैपुण्य भी नहीं होगा। इसलिए अनेक प्रकार के साधन इष्ट नहीं हैं। इस सम्बन्ध में श्रीमद्भागवत के १-२-१४ में उक्त है–

तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा॥

इसलिए एकाग्र मन से भक्तवत्सल भगवान् का ही नित्य-निरन्तर श्रवण, कीर्त्तन, ध्यान और आराधन करना चाहिये। इससे भय मिट जायेगा।

इसलिए अपर कुछ अनुष्ठान मिलाकर भी भक्ति नहीं करनी चाहिये। इन सभी के द्वारा उत्तमा भक्ति के लक्षण में दिये हुए– ज्ञानकर्माद्यनावृतम् पद की उत्तम व्याख्या हुई है॥ ३६॥

**द्वितीया यथा पञ्चमस्कन्धे (५-६-१८)–**

**राजन्! पतिर्गुरुरलं भवतां यदूनां,**
**दैवं प्रियः कुलपतिः क्व च किङ्करो वः।**
**अस्त्वेवमङ्ग! भजतां भगवान्मुकुन्दो,**
**मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्॥ इति। (३७)**

### अनुवाद

राजन्! भगवान् श्रीकृष्ण स्वयं पाण्डव लोगों के और यदुवंशियों के रक्षक, गुरु, इष्टदेव, सुहृद् और कुलपति थे, यहाँ तक कि वे कभी-कभी आज्ञाकारी सेवक भी बन जाते थे। इसी प्रकार भगवान् दूसरे भक्तों के भी अनेकों कार्य कर सकते हैं, और उन्हें मुक्ति भी दे देते हैं; परन्तु मुक्ति से बढ़कर जो भक्तियोग है, उसे सहज में नहीं देते हैं॥ ३७॥

### दुर्गमसङ्गमनी

कर्हिचिन्न ददातीत्युक्ते कर्हिचिद्ददातीत्यायाति। "असाकल्ये तु चिच्चनौ।" अतएव कर्हिचिदपीति नोक्तम्। तस्मादासङ्गेनापि कृते साधनभूते साक्षाद्भक्तियोगे सति यावत्फलभूते भक्तियोगे गाढासक्तिर्न जायते, तावन्न ददातीत्यर्थः। तथैव च लक्षितम्– अन्याभिलाषिताशून्यमिति॥ ३७॥

## अनुवाद

'कभी नहीं देते हैं'— इस प्रकार कहने पर, 'कभी देते हैं' इस प्रकार समझना होगा। चित् और चन प्रत्यय असाकल्य अर्थ में होता है, अतएव 'कभी' कहा, किन्तु 'कभी भी' नहीं कहा गया है। इसलिए आसंग अथवा आसक्ति के साथ साक्षात् भक्ति योग का साधन करने पर भी फलभूत भक्तियोग में गाढ़ आसक्ति जब तक नहीं होती है, तब तक भाव भक्ति नहीं देते हैं, इस प्रकार जानना होगा। इसलिए उत्तमा भक्ति के लक्षण में 'अन्याभिलाषिताशून्यम्' पद दिया गया है॥ ३७॥

## अर्थरत्नाल्प-दीपिका

राजन्निति,— अस्त्वेवं युस्माकं यादवानाञ्च स्नेहसम्बन्धाभ्यां वशवर्त्ती दूरे तिष्ठत्वित्यर्थः, भक्तियोगं रतिरूपं कर्हिचिन्न ददातीत्युक्तेः कर्हिचिद्ददातीत्यायाति,— 'असाकल्ये तु चिच्चनौ— अतएव कर्हिचिदपीति नोक्तं; तस्मात् स्वस्मिन्नासक्त्यां सत्यामेव देयत्वम्॥ ३७॥

## अनुवाद

श्रीकृष्ण पाण्डव एवं यदुओं के पति-पालक, गुरु-उपदेष्टा, दैव-उपास्य, प्रिय-प्रीतिकारी और कुलपति-नियन्ता हैं। आप यदुकुल में अवतीर्ण होने पर भी यदुकुल एवं पाण्डव कुल दोनों के प्रति समान व्यवहार करते हैं। कभी अधिक प्रेम होने के कारण पाण्डवों के दूत का कार्य भी करते हैं। कभी आदेश पालन करके भी चलते रहते हैं। इस प्रकार होने पर भी मुकुन्द नित्य भजनकारी गण को भक्तियोग (रति भावभक्ति) कभी नहीं देते हैं। मुक्ति ही देते हैं।

रतिरूप भक्तियोग 'कभी नहीं देते हैं' कहने से 'कभी देते हैं', ऐसा जानना होगा। असाकल्य अर्थ में चित् और चन प्रत्यय का प्रयोग होता है, अतएव 'कभी भी' नहीं कहा गया है। इसका अभिप्राय यह है कि श्रीकृष्ण निज विषयक आसक्ति युक्त भक्त को भक्ति (भाव भक्ति) ही देते हैं॥ ३७॥

## भक्तिसार-प्रदर्शिनी

हे राजन्! भवतां पाण्डवानां यदूनाञ्च पतिः पालकः, गुरुरुपदेष्टा, दैवमुपास्यः, प्रियः प्रीतिकृत्, कुलपतिर्नियन्तेति। यदुष्ववतरतोऽपि कृष्णस्य तेषु भवत्सु च तुल्यएव व्यवहारो दृष्टः। किञ्च, क्व च कदाचिद् वः पाण्डवानां दूत्यादिषु किङ्करो, न च तथा यदूनामिति यदुभ्योऽपि प्रेमवत्त्वे भवतामाधिक्यमेवेति भावः। भजद्भ्यो ह्यभजद्भ्योऽपि परमप्रेमाधिक्यदानस्य वार्त्ता कियती वक्तव्या? सा सर्वोपरि विराजताम्। अन्येभ्यो भजद्भ्योऽपि न भक्तियोगं भावभक्तिमपि प्रायो न ददाति, किञ्च ततोऽप्यतिनिकृष्टां मुक्तिमेवेत्याह अस्त्वेवेति; भजतां भजद्भ्यः; अत्र कर्हिचिदपीत्यनुक्ते मुक्तिमनिच्छद्भ्यः शुद्धभक्तेभ्यस्तु भक्तिमेव ददातीत्यर्थो लभ्यते॥ ३७॥

## अनुवाद

हे राजन्! पाण्डवों एवं यदुओं के पति-पालक हैं, गुरु-उपदेष्टा हैं, दैव-उपास्य हैं, प्रिय-प्रीतिकर्त्ता हैं, और कुलपति-नियन्ता भी हैं। यदुकुल में आविर्भूत होने पर भी कृष्ण का व्यवहार पाण्डव एवं यदुओं

के प्रति समान है। कदाचित् पाण्डवों के दूत कार्य करके किङ्कर होते हैं, इसलिए यदुओं से आप सबके प्रति अधिक प्रेम दिखाई देता है। इसलिए भजन करे अथवा न करे, सबके प्रति प्रेम दान करते रहते हैं, यह बात सर्वोपरि है।

कुछ लोक भजन करते हैं, तो भी उन सबको भक्ति योग (भाव भक्ति) प्रायकर नहीं देते हैं, किन्तु अति निकृष्ट मुक्ति ही उन सबको देते हैं। यहाँ पर 'कर्हिचिदपि' न कहने से मुक्ति न चाहकर भजन करने वाले शुद्ध भक्त को भक्ति ही देते हैं, इस प्रकार अर्थबोध हुआ॥ ३७॥

**सान्द्रानन्दविशेषात्मा—**

**ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः।**
**नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि॥ (३८)**

### अनुवाद

परार्द्धकाल तक समाधि से सिद्ध ब्रह्मसुख भक्तिसुख सागर के एक परमाणु के भी समान नहीं हो सकता है॥ ३८॥

### दुर्गमसङ्गमनी

परार्द्धेति— परार्द्धकालसमाधिना समुदितं तत्सुखमपीत्यर्थः॥ ३८॥

### अनुवाद

परार्द्धकाल पर्यन्त समाधि के द्वारा जो ब्रह्मसुख लाभ होता है, वह सुख भक्तिसुख सागर के परमाणु के समान भी नहीं हो सकता॥ ३८॥

### भक्तिसार-प्रदर्शिनी

परार्द्धेति परार्द्धं कालं व्याप्य क्रियमाणेन समाधिना सिद्धं ब्रह्मसुखमपीत्यर्थः। भक्तिरूपसुखसमुद्रस्य यः परमाणुस्तस्यापि तुलनां नैति न प्राप्नोति॥ ३८॥

### अनुवाद

परार्द्धकाल पर्यन्त किया हुआ समाधि सिद्ध ब्रह्मसुख। भक्ति रूप सुख समुद्र का जो परमाणु है, उसके साथ भी उक्त ब्रह्मसुख की तुलना नहीं हो सकती है॥ ३८॥

**यथा हरिभक्तिसुधोदये—**

**त्वत्साक्षात्करणाह्लादविशुद्धाब्धिस्थितस्य मे।**
**सुखानि गोष्पदायन्ते ब्राह्माण्यपि जगद्गुरो!॥ (३९)**

### अनुवाद

हे जगद्गुरो! तुम्हारे साक्षात्कार हेतु विशुद्ध आनन्द समुद्र में मग्न मेरे लिए ब्रह्म स्वरूप प्राप्ति सुख भी गोष्पद के समान लगता है॥ ३९॥

## दुर्गमसङ्गमनी

ब्राह्माणीत्यत्र पारमेष्ठ्यानीति तु न व्याख्येयं, परब्रह्मानन्देनैव तस्य तारतम्यं श्रीभागवतादिषु– (भा. ३-१५-४३) प्रसिद्धमिति, 'तस्यारविन्दनयनस्य पदारविन्दे' त्यादिभ्यः॥ ३९ ॥

## अनुवाद

ब्राह्मणी– ब्रह्म सुख के स्थान पर पारमेष्ठ्य सुख व्याख्या करना ठीक नहीं है, परब्रह्मानन्द के साथ उसका तारतम्य श्रीमद्भागवत आदि ग्रन्थ में प्रसिद्ध है। श्रीमद्भागवत के (३-१५-४३) में उक्त है–

तस्यारविन्दनयनस्य पदारविन्दकिञ्जलकमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥

सनकादि मुनिगण निरन्तर ब्रह्मानन्द में निमग्न रहा करते थे, किन्तु जिस समय भगवान् कमलनयन के चरणारविन्द मकरन्द से मिली हुई तुलसी मञ्जरी के गन्ध से सुवासित वायु ने नासिका रन्ध्रों के द्वारा उनके अन्तःकरण में प्रवेश किया, उस समय वे अपने शरीर को सम्भाल न सके, और उस दिव्य गन्ध ने उनके मन में भी भली भाँति क्षोभ पैदा कर दिया॥ ३९ ॥

## भक्तिसार-प्रदर्शिनी

त्वत्साक्षादिति तव साक्षात्कारानन्दसमुद्रे स्थितस्य मम ब्राह्माणि ब्रह्मस्वरूपाण्यपि सुखानि गोष्पदायन्ते गोष्पदमिवाचरन्ति। ब्राह्माणीत्यत्र पारमेष्ठ्यानीति न व्याख्येयम्; परब्रह्मानन्देनैव तस्य तारतम्यं श्रीभागवतादिषु (भा. ३-१५-४३) प्रसिद्धम्– 'तस्यारविन्दनयनस्य पदारविन्द' इत्यादिभ्यः॥३९ ॥

## अनुवाद

तुम्हारे साक्षात्कारानन्द समुद्र में स्थित मेरा ब्रह्म स्वरूप सुख भी गोष्पद की तरह लगता है। ब्राह्मणी अर्थात् ब्रह्मसुख, उसके स्थान पर पारमेष्ठ्य अर्थात् कि 'ब्रह्मा के लोक का सुख' ऐसी व्याख्या करना ठीक नहीं है, क्योंकि परब्रह्मानन्द के साथ भक्तिसुख का तारतम्य भागवतादि ग्रन्थ में प्रसिद्ध है– (श्री भागवत ३-१५-४३) में उक्त है–

तस्यारविन्दनयनस्य पदारविन्दकिञ्जलकमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥

सनकादि मुनिगण निरन्तर ब्रह्मानन्द में निमग्न रहा करते थे, किन्तु जिस समय भगवान् कमलनयन के चरणारविन्द मकरन्द से मिली हुई तुलसी मञ्जरी के गन्ध से सुवासित वायु ने नासिका रन्ध्रों के द्वारा उनके अन्तःकरण में प्रवेश किया, उस समय वे अपने शरीर को सँभाल न सके, और उस दिव्य गन्ध ने उनके मन में भली-भाँति क्षोभ पैदा कर दिया॥ ३९ ॥

तथा भावार्थदीपिकायाञ्च (भा. १०-८८-११)—

त्वत्कथाऽमृतपाथोधौ विहरन्तो महामुदः।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्॥ (४०)

### अनुवाद

तुम्हारे कथामृतरूप समुद्र में विहारशील, अतएव परमानन्दमय कोई-कोई सुकृति भक्त धर्म, अर्थ, काम व मोक्षरूप चतुर्वर्ग को तृण के समान मानते हैं॥ ४०॥

### दुर्गमसङ्गमनी

सत्स्वपि बहुषु उदाहरिष्यमाणेषु श्रीभागवतादिवाक्येषु भावार्थदीपिकोदाहरणन्तु तत्कर्त्तुस्तत्तात्पर्य्यज्ञत्वेन सर्वतत्तद्वाक्यार्थसङ्ग्रहोऽयमित्यभिप्रायात्।॥ ४०॥

### अनुवाद

श्रीमद्भागवत आदि के अनेक वाक्य उदाहरण के लिए उपलब्ध होने पर भी श्रीधर स्वामिपाद की भावार्थ दीपिका का उदाहरण इसलिए दिया गया है कि इसमें टीकाकार स्वामिपाद ग्रन्थ के तात्पर्य को जानते हैं, इसलिए आपने उक्त वाक्य के द्वारा उन वाक्यों के अर्थों का संग्रह किया है। समस्त प्राकरणिक वाक्यों का संग्रह इस वाक्य में होने के कारण इस वाक्य को उदाहरण रूप में लिया गया है॥ ४०॥

### भक्तिसार-प्रदर्शिनी

भावार्थदीपिकायां श्रीस्वामिचरणैः कृतायां श्रुत्यध्यायटीकायाम्। पाथोधौ समुद्रे; महामुदः परमानन्दयुक्ताः॥ ४०॥

### अनुवाद

श्रीधर स्वामिपाद ने श्रुत्यध्याय टीका में लिखा है (भा. १०-८७-२१)—

दुखगमात्मतत्त्वनिगमाय तवात्ततनोश्चरित-महामृताब्धि-परिवर्त्त-परिश्रमणाः।
न परिलषन्ति केचिदपवर्गमपीश्वर ते चरण-सरोज-हंसकुल-सङ्ग-विसृष्टग्रहाः॥

भगवन्! परमात्म तत्त्व का ज्ञान प्राप्त करना अत्यन्त कठिन है। उसी का ज्ञान कराने के लिए आप विविध प्रकार के अवतार ग्रहण करते हैं; और उनके द्वारा ऐसी लीला करते हैं जो अमृत के महासागर से भी मधुर और मादक होती है। जो लोक उसका सेवन करते हैं उनकी सारी थकावट दूर हो जाती है, वे परमानन्द में मग्न हो जाते हैं। कुछ प्रेमी भक्त तो ऐसे होते हैं, जो आपकी लीला कथाओं को छोड़कर मोक्ष की भी अभिलाषा नहीं करते, स्वर्ग आदि की तो बात ही क्या है। वे आपके चरण कमलों के प्रेमी परमहंसों के सत्सङ्ग में, जहाँ आपकी कथा होती है, इतना सुख मानते हैं कि उसके लिए इस जीवन में प्राप्त अपनी घर गृहस्थी का भी परित्याग कर देते हैं।

त्वत्-कथामृत पाथोधौ विहरन्तो महामुदः।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्ग तृणोपमम्॥

कोई-कोई विरले शुद्धान्तःकरण महापुरुष आपके अमृतमय कथा समुद्र में विहार करते हुए परमानन्द में मग्न रहते हैं, और चारो पुरुषार्थों (अर्थ, धर्म, काम और मोक्ष) को तृण के समान तुच्छ बना देते हैं॥ ४०॥

**श्रीकृष्णाकर्षिणी—**

**कृत्वा हरिं प्रेमभाजं प्रियवर्गसमन्वितम् ।**
**भक्तिर्वशीकरोतीति श्रीकृष्णाकर्षिणी मता॥ (४१)**

## अनुवाद

प्रेम भक्ति द्वारा श्रीकृष्ण को आकर्षण करने का वर्णन करते हैं—

भक्ति श्रीहरि को प्रियवर्ग के सहित प्रेम का पात्र बनाकर आकर्षण करके वशीभूत करती है, इसलिए यह भक्ति श्रीकृष्णाकर्षिणी कही जाती है॥ ४१॥

## दुर्गमसङ्गमनी

प्रेमभाजमिति आकर्षणशब्दबलात्, प्रियवर्गसमन्वितमिति श्रीशब्दबलाद् व्याख्यातम्॥ ४१॥

## अनुवाद

आकर्षण शब्द से बोध होता है कि श्रीकृष्ण को प्रीति युक्त करके भक्ति अपने त्याग, समर्पण व सेवा के द्वारा उनको आकर्षण करती है। श्रीकृष्णाकर्षिणी है,— यहाँ पर श्री शब्द का प्रयोग होने के कारण प्रेमपूर्वक परिकरवर्ग के साथ श्रीकृष्ण को आकर्षण करती है, इसलिए यह प्रेम भक्ति श्रीकृष्णाकर्षिणी कही जाती है॥ ४१॥

## अर्थरत्नाल्प-दीपिका

कृत्वेति,—प्रियवर्गसमन्वितमिति राजायं गच्छतीतिवत् सपरिवारस्य प्राप्तिरिति व्याख्यातम्॥४१॥

## अनुवाद

'राजा जा रहे हैं', इससे जिस प्रकार सपरिवार राजा का गमन बोध होता है, उसी प्रकार यहाँ पर भी 'प्रियवर्ग के सहित' अर्थात् सपरिवार श्रीकृष्ण का आकर्षण करना बोध होता है॥ ४१॥

**यथैकादशे (११-१४-२०)—**

**न साधयति मां योगो न सांख्यं धर्म उद्धव! ।**
**न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥ (४२)**

## अनुवाद

उद्धव! योग-साधन, ज्ञान-विज्ञान, धर्मानुष्ठान, जप-पाठ और तप-त्याग मुझे प्राप्त कराने में उतने समर्थ नहीं हैं जितनी दिनों-दिन बढ़ने वाली अनन्य प्रेममयी मेरी भक्ति मुझको प्राप्त कराती है॥ ४२॥

## दुर्गमसङ्गमनी

न साधयतीत्यत्र यद्यपि योगादिसाधनप्रतिस्पर्धित्वेन साधनत्वमेवास्या आयाति, ततश्चाग्रत

इत्यादिवक्ष्यमाणानुसारेण (१-१-४४) साध्यभक्तिमहिमप्रस्तावेऽस्मिन्नुदाहरणं न सम्भवति, तथाऽपि साध्यमेव जनयित्वा वशीकरोत्यासाविति तथोक्तम्॥ ४२॥

### अनुवाद

यद्यपि योगादि साधन के प्रतिपक्ष रूप में भक्ति का साधनत्व ही कथित हुआ है, और इस ग्रन्थ के १-१-४४ में कथित है—

अग्रतो वक्ष्यमाणायास्त्रिधा भक्तेरनुक्रमात्।
द्विशः षड्भिः पदैरेतन्माहात्म्यं परिकीर्त्तितम्॥

आगे ग्रन्थ में क्रमवार वर्णित हाने वाली त्रिविध भक्ति (साधन, भाव व प्रेम) का माहात्म्य दो-दो करके कुल छः पदों के द्वारा कीर्त्तित हुआ।

इस पद्य के अनुसार साध्य भक्ति के माहात्म्य सूचक इस प्रस्ताव में यह उदाहरण देना सम्भव नहीं है, साधन प्रकरण में साध्य का सन्निवेश नहीं होना चाहिये। तथापि साधयति पद के निर्देश से बोध होता है कि साधन भक्ति साध्य भक्ति का उदय करवाकर ही श्रीकृष्ण का वशीकरण करती है, इसलिए इस प्रकरण में इसका उदाहरण दिया गया है॥ ४२॥

### अर्थरत्नाल्प-दीपिका

न साधयतीति, उर्ज्जिता प्रेमलक्षणा सती मां सप्रियवर्गम्। तत्र योगादयोऽपि परमोत्कर्षं प्राप्ता ज्ञेया:, ऊर्ज्जित भक्तिप्रतिस्पर्द्धित्वात्॥ ४२॥

### अनुवाद

उर्ज्जिता अर्थात् प्रेमलक्षणा भक्ति प्रियवर्ग के साथ श्रीकृष्ण को आकर्षण करती है। योगादि भी परमोत्कर्ष को प्राप्त होकर मेरे को प्राप्त नहीं करा सकते हैं। कारण— यह भक्ति उर्ज्जिता है, अर्थात् ज्ञान कर्मादि के द्वारा आवृत न होकर परम प्रबला है॥ ४२॥

### भक्तिसार-प्रदर्शिनी

न साधयतीति— यद्यपि योगादिसाधनप्रतिस्पर्धित्वेन साधनत्वमेवास्या आयाति, ततश्चाग्रत इत्यादि वक्ष्यमाणानुसारेण (१-१-४४) साध्यभक्तिमहिमप्रस्तावेऽस्मिन्नुदाहरणं न सम्भवति, तथाऽपि साध्यमेव भक्तिं जनयित्वा वशीकरोत्यासाविति तथोक्तम्। न साधयति न प्राप्तिसाधनं भवति, उर्जिता ज्ञानकर्माद्यनावृतत्वेन प्रबला तीव्रेत्यर्थः॥ ४२॥

### अनुवाद

यद्यपि योगादि साधन प्रतिस्पर्धिरूप से कथन होने से यहाँ भक्ति का साधनत्व ही कथन हुआ है, आगे कहेंगे—

अग्रतो वक्ष्यमाणायास्त्रिधा भक्तेरनुक्रमात्।
द्विशः षड्भिः पदैरेतन्माहात्म्यं परिकीर्त्तितम्॥

आगे ग्रन्थ में क्रमवार वर्णित होने वाली त्रिविध भक्ति (साधन, भाव व प्रेम) का माहात्म्य दो-दो करके कुल छः पदों के द्वारा कीर्त्तित हुआ।

इस पद्य के अनुसार साध्य भक्ति के माहात्म्य सूचक इस प्रस्ताव में यह उदाहरण देना सम्भव नहीं है, साधन प्रकरण में साध्य का सन्निवेश नहीं होना चाहिये। तथापि साधनभक्ति साध्यभक्ति को उत्पन्न करके श्रीकृष्ण को वश में करती है।

योग भगवत्प्राप्ति का साधन नहीं हो सकता है, क्योंकि योग से केवल चित्तवृत्ति का निरोध होता है।

उर्ज्जिता शब्द का अर्थ है— ज्ञानकर्म आदि से अनावृत होकर प्रबला अर्थात् तीव्र ॥ ४२ ॥

**सप्तमे च नारदोक्तौ (७-१०-४८)—**

**यूयं नृलोके बत भूरिभागा, लोकं पुनाना मुनयोऽभियन्ति।**
**येषां गृहानावसतीति साक्षाद्, गूढं परं ब्रह्म मनुष्यलिङ्गम्॥ इति। (४३)**

## अनुवाद

युधिष्ठिर! इस मनुष्य लोक में तुम लोकों के भाग्य अत्यन्त प्रशंसनीय हैं, क्योंकि तुम्हारे घर में साक्षात् परब्रह्म मनुष्य का रूप धारण करके गुप्त रूप से निवास करते हैं। इस सारे संसार को पवित्र कर देने वाले ऋषि मुनि बार-बार उनका दर्शन करने के लिए चारो ओर से तुम्हारे पास आया करते हैं॥ ४३ ॥

## दुर्गमसङ्गमनी

अतएव तत्रापरितुष्यन् प्रियवर्गसमन्वितत्वोदाहरणञ्च करिष्यन्नपरमाह— यूयमिति॥ ४३ ॥

## अनुवाद

प्रियवर्ग के साथ श्रीकृष्णवशीकरणकारिणी भक्ति के प्रथम उदाहरण से चित्त सन्तुष्ट न होने के कारण दूसरा उदाहरण प्रस्तुत करते हैं— यूयमिति॥ ४३ ॥

## अर्थरत्नाल्प-दीपिका

साक्षाद्वचनगतमप्येतद्दर्शयति,— यूयमिति। गूढं वेदादिरहस्यत्वात् असर्वबोधस्वभावम्॥ ४३ ॥

## अनुवाद

श्रीकृष्णवशीकरण का सुस्पष्ट उदाहरण प्रस्तुत करते हैं, श्रीमद्भागवत के पद्य के द्वारा। आप सब ही सबसे भाग्यशाली हैं। कारण— वेदादि ग्रन्थों में जिनका वर्णन अति गोपनीय रूप से किया गया है, अतएव उन तत्त्व का ज्ञान सबको होना कठिन है, इस प्रकार के गूढ़ तत्त्व भी तुम्हारे पास सदा निवास करते हैं॥ ४३ ॥

## भक्तिसार-प्रदर्शिनी

अहो प्रह्लादस्य भाग्यम्— येन भगवान् दृष्टः। वयन्तु मन्दभाग्या इति विषीदन्तं राजानं प्रति यूयं प्रह्लादात्, प्रह्लादगुरोर्मत्तोऽप्यऽन्येभ्योऽपि भक्तेभ्यो, यदुगुरुप्रभृतिभ्योऽपि, वशिष्ठ-मरीचि-कश्यपादि-

ऋषिभ्योऽपि, ब्रह्मरुद्राभ्यामपि, भूरिसौभाग्यवन्त इत्याह नारदः— यूयमिति। यूयं नृणां जीवानां लोकमध्ये भूरिभागाः,— येषां युष्माकं गृहान् लोकं स्वदर्शनादिना पवित्रीकुर्वन्त्योऽपि मुनयोऽभि सर्वतोभावेन स्वं कृतार्थीकर्त्तुं गच्छन्ति; यतो गूढ़ं सर्वतोऽपि रहस्यं यन्मनुष्यलिङ्गं नराकृति परं ब्रह्म, तत् सम्यक् प्रकारेण युष्माभिरनाहुतमप्यासक्तिपूर्वकं येषां गृहेषु साक्षाद् वसति। न हि प्रह्लादादीनां गृहेषु नराकृति परं ब्रह्म साक्षाद् वसति; न च तद्दर्शने कृतार्थीभवितुं मुनयो गच्छन्तीति भावः॥ ४३॥

## अनुवाद

अहो प्रह्लाद का भाग्य कैसा है! उन्होंने भगवान् को देखा है। हम सब भाग्यहीन हैं। इस प्रकार विषण्ण राजा युधिष्ठिर के प्रति श्री नारद कह रहे हैं—

आप सब प्रह्लाद से, प्रह्लाद के गुरु मुझसे, एवं अन्य सब भक्तों से भी, यदुगुरु प्रभृति से भी, वशिष्ठ, मरीचि, कश्यप आदि ऋषियों से भी, ब्रह्मा और रुद्र से भी बहुत सौभाग्यवान् हैं।

इस प्रकार श्री नारद कहते हैं— आप सब जीवों के मध्य में, लोकों के मध्य में सबसे ज्यादा भाग्यशाली हैं। आप लोगों के घर में सब लोकों को दर्शन देकर पवित्र करने वाले मुनिगण अपने को सब प्रकार से पवित्र करने के लिए आते रहते हैं। इसका कारण है— सर्व प्रकार से रहस्यमय नराकृति परब्रह्म, आप लोगों के द्वारा बिना बुलाये ही आसक्ति पूर्वक आपके घर में सदा साक्षात् रूप से निवास करते रहते हैं। प्रह्लाद आदि के घरों में नराकृति परमब्रह्म नहीं रहते हैं; न ही उनको देखने के लिए जगत् पवित्र करने वाले मुनिगण भी आते रहते हैं। यही कहने का तात्पर्य है॥ ४३॥

**अग्रतो वक्ष्यमाणायास्त्रिधा भक्तेरनुक्रमात्।**
**द्विशः षड्भिः पदैरेतन्माहात्म्यं परिकीर्तितम्॥ (४४)**

## अनुवाद

आगे ग्रन्थ में क्रमवार वर्णित होने वाली त्रिविध भक्ति (साधन, भाव व प्रेम) का माहात्म्य दो-दो करके कुल छः पदों के द्वारा कीर्त्तित हुआ॥ ४४॥

## दुर्गमसङ्गमनी

द्विशो द्वाभ्यां द्वाभ्यां षड्भिः पदैः क्लेशघ्नीत्यादिभिः परिकीर्त्तितमिति; असाधारणत्वेनेति परिशब्दार्थः। तेन साधनरूपाया द्वौ गुणौ, भावरूपायाश्चत्वारो गुणाः, प्रेमरूपायाः षडपि ज्ञेयाः। तत्र तत्तदन्तर्भावाद् वाय्वादिभूतचतुष्टयवत्॥ ४४॥

## अनुवाद

द्विशो अर्थात् दो-दो करके क्लेशघ्नीत्यादि छः पदों के द्वारा भक्ति (साधन, भाव व प्रेम) का माहात्म्य परिकीर्त्तित हुआ। परि शब्द का अर्थ है—असाधारण रूप से। साधनरूपा भक्ति में क्लेशघ्नी, शुभदा दो गुण हैं। भावरूपा भक्ति में क्लेशघ्नी, शुभदा, मोक्षलघुताकृत् और सुदुर्लभा चार गुण हैं। प्रेमरूपा भक्ति में समस्त छः गुण हैं।

पृथ्वी, जल, तेज और वायु इन चारों भूतों में जिस प्रकार क्रमशः गुणों की वृद्धि होती है, उसी प्रकार भक्ति के गुणों की वृद्धि क्रमशः साधन, भाव और प्रेम भक्ति में होती है॥ ४४॥

## अर्थरत्नाल्प-दीपिका

अग्रत इति, द्विशो द्वाभ्यां द्वाभ्यां कृत्वा षड्भिः पदैः क्लेशघ्नीत्यादिभिः असाधारणसाधारणत्वेनेति परिशब्दार्थः। तेन साधनरूपाया द्वौ, भावरूपायाश्चत्वारः, प्रेमरूपायाः षडपि ज्ञेयाः, वाय्वादिभूतचतुष्टयवत्तत्र तत्र तत्तदन्तर्भावात्॥ ४४॥

## अनुवाद

दो-दो करके क्लेशघ्नी-शुभदा, मोक्षलघुताकृत्-सुदुर्लभा, सान्द्रानन्दविशेषात्मा-श्रीकृष्णाकर्षिणी ये भक्ति के ये छः गुण वर्णित हुए हैं। परिकीर्त्तितम् शब्द के 'परि' शब्द से असाधारण गुण को जानना होगा। साधनभक्ति में क्लेशघ्नी तथा शुभदा दो, भावभक्ति में क्लेशघ्नी, शुभदा, मोक्षलघुताकृत् तथा सुदुर्लभा चार, प्रेमभक्ति में क्लेशघ्नी, शुभदा, मोक्षलघुताकृत, सुदुर्लभा, सान्द्रानन्दविशेषात्मा तथा श्रीकृष्णाकर्षिणी छः गुण होते हैं।

वायु, तेज, जल और पृथ्वी में जिस प्रकार गुणों की वृद्धि होती है, उसी प्रकार साधन, भाव और प्रेमरूपा भक्ति में भी क्रमशः गुणों की वृद्धि होती है। अर्थात् उन-उन गुणों का वहाँ-वहाँ अन्तर्भाव होता है॥ ४४॥

## भक्तिसार-प्रदर्शिनी

अग्रत इति; साधनभावप्रेमरूपायास्त्रिधाभक्तेर्द्विशः द्वाभ्यां द्वाभ्यां षड्भिः पदैः। तथा च— ''क्लेशघ्नी शुभदा'' इत्यनेन पदद्वयेन साधनभक्तेर्माहात्म्यं कथितम्; एवं ''मोक्षलघुताकृत् सुदुर्लभा'' इत्यनेन भावभक्तेः; एवं ''सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी'' इति प्रेमभक्तेरित्येवं षड्भिः पदैरित्यर्थः॥४४॥

## अनुवाद

साधन, भाव तथा प्रेमरूपा त्रिविध भक्ति के गुण दो-दो करके छै पदों से वर्णित हुए। क्लेशघ्नी शुभदा दो पद के द्वारा साधनभक्ति का माहात्म्य कहा गया है। मोक्षलघुताकृत्, सुदुर्लभा पदद्वय के द्वारा भावभक्ति का माहात्म्य कहा गया है। सान्द्रानन्द-विशेषात्मा, श्रीकृष्णाकर्षिणी पदद्वय के द्वारा प्रेमभक्ति का माहात्म्य कहा गया है। इस प्रकार छै पदों के द्वारा साधन, भाव एवं प्रेमभक्ति के माहात्म्य को कहा गया है॥ ४४॥

**किञ्च—**

**स्वल्पाऽपि रुचिरेव स्याद्भक्तितत्त्वावबोधिका।**
**युक्तिस्तु केवला नैव यदस्या अप्रतिष्ठता　॥　(४५)**

## अनुवाद

थोड़ी सी रुचि ही भक्ति तत्व का बोध कराने वाली होती है। केवला युक्ति से बोध नहीं होता है,

क्योंकि वह केवला युक्ति अप्रतिष्ठिता है ॥ ४५ ॥

### दुर्गमसङ्गमनी

अत्र बहिर्मुखान् प्रत्यन्यदप्युच्यते इत्याह– किञ्चेति। रुचिरत्र भक्तितत्त्वप्रतिपादकशब्देषु श्रीमद्भागवतादिषु प्राचीनसंस्कारेणोत्तमत्वज्ञानं, सैव भक्तितत्त्वमवबोधयति– यथाशब्दं श्रद्धापयतीति, केवला शुष्का नैवेति किन्तु तद्रुचिसहिता, इत्थमेव वक्ष्यते (१-२-१७) 'शास्त्रे युक्तौ च निपुण' इति ॥४५ ॥

### अनुवाद

यहाँ पर बहिर्मुख जनों के प्रति कहते हैं– किञ्च इत्यादि। भक्ति तत्त्व ज्ञान के लिए थोड़ी भी यदि रुचि होती है तो इस भक्ति तत्त्व का बोध होगा। केवल युक्ति के द्वारा भक्ति तत्त्व का बोध नहीं होगा, क्योंकि केवल युक्ति अस्थिर होती है।

यहाँ पर रुचि शब्द का अभिप्राय है– पूर्व जन्म के संस्कार से यदि श्रीमद्भागवत आदि भक्ति तत्त्व प्रतिपादक शास्त्रों में उत्तम ज्ञान होता है; तो वही ज्ञान, भक्ति तत्त्व जानने के लिए उपयुक्त है। क्योंकि वह ज्ञान श्रीमद्भागवत आदि ग्रन्थों के शब्दों में श्रद्धा उत्पन्न कराता है। केवल शुष्क तर्क के द्वारा श्रद्धा नहीं होती है; किन्तु रुचि सहित ज्ञान, युक्ति से ही भक्ति तत्त्व का बोध होता है। इसको आगे १-२-१७ में कहेंगे–

शास्त्रे युक्तौ च निपुणः सर्वथा दृढ़निश्चयः।
प्रौढ़ श्रद्धोऽधिकारी यः स भक्तावुत्तमो मतः॥

जो शास्त्र कथित अर्थ के प्रतिपादन करने में, एवं शास्त्रानुगत अनुकूल युक्ति के द्वारा सङ्गत अर्थ को स्थिर करने में प्रवीण है, उपास्य विचार में एवं पुरुषार्थ विचार में जो दृढ़ निश्चय है, एवं जागतिक समस्त सुख-समृद्धि को भगवद् भक्ति सुख साम्राज्य की तुलना में तुच्छ जानकर प्रौढ़ श्रद्धावान् है, वह भक्ति का उत्तम अधिकारी है॥ ४५ ॥

### अर्थरत्नाल्प-दीपिका

हे महाकृपालो ! त्रिविधभक्तेस्तत्तन्माहात्म्यं श्रुतमप्यत्यपूर्व्वत्वात् सम्यङ् नावबुध्यते, ततो युक्तिञ्च दर्शयेति बुभुत्सून् प्रति सत्यमत्यपूर्व्वमेवैतत्, किन्तु साधनाभिनिवेशाद् रुचौ स्वल्पायामपि जातायां मनोनैर्मल्यात् स्वयमेव भक्ति तत्वस्यावबोधो, न तु केवलया युक्त्येत्याह,– किञ्चेति। रुचिरेव स्वयमेव स्वल्परुचावपि सत्यां तदनुकूला युक्तिश्च स्वयं स्फुरेदित्यर्थः। युक्तिस्तु केवला रुचिरहिता नैव, अस्याः युक्तेः॥ ४५ ॥

### अनुवाद

हे महाकृपालो ! साधन, भाव और प्रेम तीन प्रकार के भक्ति का माहात्म्य सुनकर भी अति अपूर्व होने के कारण अच्छी तरह समझने में नहीं आता है, इसमें युक्ति बोलें। ऐसे लोगों के लिए कहते हैं कि हाँ यह सत्य है, यह अति अपूर्व पदार्थ है, परन्तु भक्ति साधन के अभिनिवेश से थोड़ी सी भी भक्ति में रुचि

होने पर मन निर्मल होता है, उससे स्वयं भक्ति तत्त्व का बोध होता है। केवल युक्ति से भक्ति तत्त्व का बोध नहीं होता है। थोड़ी रुचि होने पर भी भक्ति की अनुकूल युक्ति स्वयं स्फूर्त्ति को प्राप्त होती है। रुचि रहित युक्ति भक्ति तत्त्व को नहीं जान सकती, कारण वह युक्ति अप्रतिष्ठित है, अस्थिर है, चञ्चल है, दूसरे के द्वारा खण्डित हो जाती है॥ ४५॥

## भक्तिसार-प्रदर्शिनी

अथ बहिर्मुखान् प्रत्यन्यदप्युच्यते इत्याह– किञ्चेति। रुचिरत्र भक्तितत्त्वप्रतिपादकशब्देषु श्रीभागवतादिषु प्राचीनसंस्कारेणोत्तमत्वज्ञानम्। सैव भक्तितत्त्वमवबोधयति, केवला शुष्का नैवेति किन्तु तद्रुचिसहिता। इत्थमेव वक्ष्यते– (१-२-१७) 'शास्त्रे युक्तौ च निपुणः' इति॥ ४५॥

## अनुवाद

इस भक्ति के प्रकरण में भक्ति बर्हिमुख व्यक्तियों के प्रति कहते हैं। भक्ति तत्त्वावबोधिका स्वल्पा यदि रुचि हो तो भक्ति तत्त्व का ज्ञान होगा, केवल युक्ति से भक्ति तत्त्व का ज्ञान नहीं होगा, रुचि हीन युक्ति, तर्क स्थिर नहीं होते हैं, दूसरे से खण्डित हो जाते हैं।

यहाँ पर रुचि शब्द से जानना होगा– जन्मान्तरीय संस्कार के द्वारा भक्ति तत्त्व प्रतिपादक श्रीभागवत आदि ग्रन्थों में श्रेष्ठत्व ज्ञान होना। इस प्रकार का उत्तमात्त्व ज्ञान ही भक्ति तत्त्व का बोध कराता है।

केवल शुष्क युक्ति, तर्क भक्तितत्त्व का ज्ञान कराने में सक्षम नहीं है। रुचि सहित ज्ञान, युक्ति ही भक्ति तत्त्व का बोध कराते हैं। इसी बात को कहते हैं–

शास्त्रे युक्तौ च निपुणः सर्वथा दृढ़निश्चयः।
प्रौढ़ श्रद्धोऽधिकारी यः स भक्तावुत्तमो मतः॥

जो शास्त्र एवं युक्ति में सुनिपुण, सर्वथा दृढ़निश्चय और प्रौढ़ श्रद्धावान् होता है वह भक्ति का उत्तम अधिकारी होता है॥ ४५॥

**तथा प्राचीनैरप्युक्तम्–**

**यत्नेनापादितोऽप्यर्थः कुशलैरनुमातृभिः।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ (४६)**

**इति श्रीश्रीभक्तिरसामृतसिन्धौ पूर्वविभागे सामान्यभक्तिलहरी प्रथमा॥**

## अनुवाद

इस विषय में प्रचीन विद्वानों का भी कहना है–

अनुमान के विषय में निपुण व्यक्तिगण के द्वारा यत्नपूर्वक स्थापित विषय को निपुण तार्किक व्यक्तिगण निज-निज युक्ति के द्वारा अन्य रूप में स्थिर अर्थात् खण्डन कर देते हैं॥ ४६॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग स्थित
सामान्य भक्ति नामक प्रथमा लहरी समाप्त॥ १॥

### दुर्गमसङ्गमनी

अप्रतिष्ठतामेव दर्शयति– तथेति। प्राचीनैः "तर्काप्रतिष्ठानात्" (ब्र.सू. २-१-१२) इति न्यायानुसारिभिः वार्त्तिककारादिभिः। अभियुक्ततरास्तार्किकेषु प्रवीणतराः॥ ४६ ॥

इति दुर्गमसङ्गमनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके पूर्वविभागे सामान्यभक्तिलहरी प्रथमा॥ १ ॥

### अनुवाद

अप्रतिष्ठित कैसे होते हैं? उसको कहते हैं– ब्रह्मसूत्र के २-१-१२ "तर्काप्रतिष्ठानात्" नियम के अनुसार चलने वाले श्रीशङ्कर भाष्य के वार्त्तिककार सुरेश्वराचार्य आदि प्राचीनगण अनुमान के विषय में कहते हैं कि प्रवीणतर तार्किकगण निपुण व्यक्तिगण के द्वारा यत्नपूर्वक स्थापित विषय को निज-निज युक्ति के द्वारा अन्य रूप में प्रतिपादित अर्थात् खण्डन कर देते हैं।

अभियुक्ततर का अभिप्राय है– तार्किकों में प्रवीणतर॥ ४६ ॥

श्रीभक्तिरसामृतसिन्धु के दुर्गमसङ्गमनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित सामान्यभक्ति नामक प्रथमा लहरी समाप्त॥ १ ॥

### अर्थरत्नाल्प-दीपिका

अप्रतिष्ठतामेव दर्शयति,– प्राचीनैः तर्काप्रतिष्ठानात् इत्यादि (ब्र. सू., २-१-१२) न्यायानुसारिभिः सुरेश्वरवार्त्तिककारैः। अभियुक्ततरास्तार्किकेषु प्रवीणतराः॥ ४६ ॥

इत्यर्थरत्नाल्पदीपिकानाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके पूर्व्वविभागे सामान्यभक्तिलहरी प्रथमा॥ १ ॥

### अनुवाद

तर्क की अस्थिरता को दिखाते हैं– ब्रह्मसूत्र के २-१-१२ 'तर्काप्रतिष्ठानात्' नियम के अनुसार चलने वाले श्रीशङ्कर भाष्य के वार्त्तिककार सुरेश्वराचार्य आदि प्राचीनगण अनुमान के विषय में कहते हैं कि प्रवीणतर तार्किकगण निपुण व्यक्तिगण के द्वारा यत्नपूर्वक स्थापित विषय को निज-निज युक्ति के द्वारा अन्य रूप में प्रतिपादित अर्थात् खण्डन कर देते हैं।

अभियुक्ततर का अभिप्राय है– तार्किकों में प्रवीणतर॥ ४६ ॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के अर्थरत्नाल्पदीपिका नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित सामान्यभक्ति नामक प्रथमा लहरी समाप्त॥ १ ॥

### भक्तिसार-प्रदर्शिनी

अप्रतिष्ठतामेव दर्शयति– तथेति। प्राचीनैः (ब्र.सू. २-१-१२) 'तर्काप्रतिष्ठानात्' इति न्यायानुसारिभिः वार्त्तिककारैः। अभियुक्ततरास्तार्किकेषु प्रवीणतराः॥ ४६ ॥

इति भक्तिसारप्रदर्शिनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके पूर्वविभागे सामान्यभक्तिलहरी प्रथमा॥ १ ॥

## अनुवाद

तर्क की अस्थिरता को दिखाते हैं— ब्रह्मसूत्र के २-१-१२ 'तर्काप्रतिष्ठानात्' नियम के अनुसार चलने वाले श्रीशङ्कर भाष्य के वार्त्तिककार सुरेश्वराचार्य आदि प्राचीनगण अनुमान के विषय में कहते हैं कि प्रवीणतर तार्किकगण निपुण व्यक्तिगण के द्वारा यत्नपूर्वक स्थापित विषय को निज-निज युक्ति के द्वारा अन्य रूप में प्रतिपादित अर्थात् खण्डित कर देते हैं।

अभियुक्ततर का अभिप्राय है— तार्किकों में प्रवीणतर॥ ४६ ॥

श्रीभक्तिरसामृतसिन्धु के भक्तिसारप्रदर्शिनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित सामान्यभक्ति नामक प्रथमा लहरी समाप्त॥ १ ॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग में स्थित
सामान्यभक्ति नामक प्रथमा लहरी का
श्रीहरिदासशास्त्रि कृत
हिन्दी भाषानुवाद समाप्त॥ १ ॥

# द्वितीया लहरी— साधनभक्तिः

**सा भक्तिः साधनं भावः प्रेमा चेति त्रिधोदिता॥ (१)**

### अनुवाद

पूर्वोक्त सामान्यभक्ति साधन, भाव व प्रेम इन तीन नामों से कथित होती है॥ १ ॥

### दुर्गमसङ्गमनी

सा भक्तिरिति आपाततः प्रतीत्यर्थमेवेदं विवेचनं, विशेषतस्त्विदं ज्ञेयम्— भक्तिस्तावद् द्विविधा साधनरूपा, साध्यरूपा च। तत्र प्रथमाया लक्षणं भेदाश्च वक्ष्यन्ते; द्वितीया तु हार्द्दरूपा, सापि भक्तिशब्देनोच्यते। यथैकादशे (३/३१) "भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुमिति।" अस्याश्च भावप्रेमप्रणयस्नेहरागाख्याः पञ्च भेदाः। तथोज्ज्वलनीलमणावस्य परिशिष्टग्रन्थे मानानुरागमहाभावास्त्रयश्च सन्ति। तदेवमष्टौ, तथापि भावः प्रेमेति द्विभेदत्वेनोक्तिस्तूपलक्षणार्थमेव। "प्रेम्ण एव विलासत्वाद्वैरल्यात् साधकेष्वपि। अत्र स्नेहादयो भेदा विविच्य न हि शंसिताः॥" इत्यत्रैव प्रेमलहर्य्यन्ते (१/४/१९) वक्ष्यमाणत्वात्॥ १ ॥

### अनुवाद

आपाततः प्रतीति अर्थात् स्पष्ट ज्ञान के लिए कहा गया है कि भक्ति साधन, भाव और प्रेम भेद से त्रिविध होती है। किन्तु विशेष रूप से यही जानना चाहिए कि भक्ति साधन और साध्य भेद से द्विविध है। इनमें से प्रथम साधन भक्ति का लक्षण और भेद का वर्णन करेंगे। द्वितीया साध्यरूपा भक्ति हार्द्दरूपा है, उसको भी भक्ति शब्द से कहते हैं। जैसाकि श्रीमद्भागवत के ११/३/३१ में उक्त है—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्॥

श्रीकृष्ण अनेकानेक पापों को एक क्षण में नाश कर देते हैं। सब उन्हीं का स्मरण करें और एक दूसरे को स्मरण करावें। इस प्रकार साधन भक्ति का अनुष्ठान करते-करते प्रेम भक्ति का उदय हो जाता है और वे प्रेमोद्रेक से पुलकित शरीर धारण करते हैं।

इस साध्य भक्ति के भाव, प्रेम, प्रणय, स्नेह व राग नामक पाँच भेद हैं। तथा श्रीभक्तिरसामृत-सिन्धु ग्रन्थ के परिशिष्ट ग्रन्थ श्रीउज्ज्वलनीलमणि में मान, अनुराग व महाभाव तीन और भेद हैं। इस प्रकार दोनों मिलाकर साध्य भक्ति के आठ भेद होते हैं। तथापि 'भाव व प्रेम' दो भेद जो कहा गया है, वह उपलक्षण के लिए है। (अपने को सूचित करके जो दूसरे को सूचित करता है, वह उपलक्षण होता है।)

इस ग्रन्थ के प्रेम भक्ति लहरी के अन्त (१/४/१९) में कहेंगे—

प्रेम्ण एव विलासत्वाद्वैरल्यात् साधकेष्वपि।
अत्र स्नेहादयो भेदा विविच्य नहि शंसिता॥

स्नेह, प्रणय आदि प्रेम के ही अवस्था विशेष हैं। साधक के शरीर में प्रेम की अवस्थाओं का प्रचार विरल है, अतएव इस प्रकरण में उसके भेद समूह का निर्देश नहीं किया गया है॥ १॥

## अर्थरत्नाल्प-दीपिका

वैशिष्ट्यं कथयितुं यदुक्तं, तदेव वैशिष्ट्यं दर्शयति– सेति यावद्विभागम्। सा उक्तलक्षणा सामान्यभक्तिः॥ १॥

## अनुवाद

वैशिष्ट्य कहने के लिए जो कहा है, उसी वैशिष्ट्य को दिखाते हैं– समस्त प्रकरणों में। सा अर्थात् प्रथम लहरी में जिस सामान्य भक्ति का लक्षण उक्त है, यानि कि उत्तमा भक्ति॥ १॥

## भक्तिसार-प्रदर्शिनी

सा भक्तिरिति। अथात्र साधनसाध्यत्वरूप द्विविधभेद एवास्तु, भावस्यापि साध्यभक्त्यन्तर्भावोऽस्तु, किं भेदत्रयकरणेन? इति चेत् न, यतोऽग्रे वक्ष्यमाणस्य (रसामृत २/१/२७६) ''उत्पन्नरतयः सम्यङ् नैर्विघ्न्यमनुपागताः। कृष्णसाक्षात्कृतौ योग्याः साधकाः परिकीर्त्तिताः॥'' इति साधकभक्तलक्षणस्य मध्ये रत्यपरपर्यायस्य भावस्याविर्भावेऽपि 'सम्यङ् नैर्विघ्न्यमनुपागताः' इति विशेषणेन प्रबलतरस्य कस्यचिन्महदपराधस्य कश्चन भागोऽवशिष्टोऽस्तीति लभ्यते। एवं सति क्लेशजनकस्यापराधस्य लेशेऽपि साध्यभक्तेराविर्भावो न सम्भवति। अतएव तत्रैवोक्तस्य साध्यभक्तिविशिष्टसिद्धभक्तलक्षणस्य मध्ये (भ. र. सि. २/१/२८०)– 'अविज्ञाताखिलक्लेशाः सदाकृष्णाश्रितक्रियाः। सिद्धाः स्यु'रित्यनेन तथैव प्रतिपादितम्। तस्माद् भावस्य साध्यभक्तेरन्तर्भावो न सम्भवति। तथैव साधनभक्तेरन्तभार्वस्तु सुतरामेव नास्ति; यतोऽत्रैव प्रकरणे साधनभक्तिलक्षणे भावसाधनत्वरूपविशेषणेन भावस्य साधनभक्तित्वं परास्तम्' भावस्य भावसाधनत्वाभावात्। तस्मात् साधूक्तं भक्तेस्त्रिविधत्वम् इति विवेचनीयम्॥ १॥

## अनुवाद

शंका हो सकती है कि भक्ति का साधन और साध्य रूप द्विविध भेद है, भाव का भी अन्तर्भाव साध्य भक्ति में ही होना चाहिये। फिर भक्ति का तीन भेद करने का क्या कारण है? इसके लिये कहते हैं कि ऐसा नहीं कह सकते हैं, क्योंकि इसी ग्रन्थ के श्लोक २/१/२७६ में कहा गया है कि–

''उत्पन्नरतयः सम्यङ् नैर्विघ्न्यमनुपागताः।
कृष्णसाक्षात्कृतौ योग्याः साधकाः परिकीर्त्तिताः॥''

अर्थात् उत्पन्न रति अथच सम्यक् प्रकार से निर्विघ्न अप्राप्त एवं कृष्ण साक्षात्कार के योग्य भक्तगण ही साधक कहे जाते हैं।

इस प्रकार साधक भक्त के लक्षण में रति अपर नाम भाव का आविर्भाव होने पर भी सम्यङ्

नैर्विघ्न्यमनुपागताः (सम्यक् प्रकार से निर्विघ्न अप्राप्ति) विशेषण से बोध होता है कि प्रबलतर किसी प्रकार महदपराध का कुछ अंश रह गया है। सुतरां क्लेश जनक अपराध का लेशमात्र रहने पर भी साध्य भक्ति का उदय नहीं हो सकता है। अतएव साध्य भक्ति विशिष्ट सिद्धभक्त लक्षण में कहा गया है— (भक्तिरसामृतसिन्धु २/१/२८०)— 'अविज्ञाताखिलक्लेशाः सदाकृष्णाश्रितक्रियाः। सिद्धाः स्यु'रित्यनेन। जो अविज्ञात अखिल क्लेश और सर्वदा श्रीकृष्णाश्रित क्रिया पर हैं वे सिद्ध भक्त हैं। इसलिये भाव भक्ति का अन्तर्भाव साध्य भक्ति में सम्भव नहीं है। इसी प्रकार साधन भक्ति में भी अन्तर्भाव सम्भव नहीं है। यहाँ साधन भक्ति लक्षण में साधन भक्ति भाव भक्ति का साधन रूप विशेषण होने से भाव का साधन भक्ति में अन्तर्भाव होना परास्त होता है। भाव भक्ति स्वयं भाव भक्ति का साधन नहीं हो सकती है। इसलिये भक्ति त्रिविध है, यह कथन उत्तम है॥ १॥

**तत्र साधनभक्तिः—**

**कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा।**
**नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ॥ (२)**

### अनुवाद

साधनभक्ति का लक्षण करते हैं—

जो देहादि इन्द्रिय व्यापार के द्वारा सम्पन्न होती है तथा भावभक्ति को उत्पन्न करती है उसको साधनभक्ति कहते हैं। नित्यसिद्ध भक्तों के भाव का हृदय में प्राकट्य होने को साध्यता कहते हैं॥ २॥

### दुर्गमसङ्गमनी

कृतीति। सामान्यतो लक्षितोत्तमा भक्तिः। कृत्या इन्द्रियप्रेरणया साध्या चेत्, सा साधनाभिधा भवति कृत्यास्तदन्तर्भावश्च पूर्वक्रियाया यज्ञान्तर्भाववत्। तत्र भावाद्यनुभावरूपाया व्यवच्छेदार्थमाह- साध्येति, साध्यो भावः भावप्रेमादिरूपो यया सा, न तु भावसिद्धा। सा हि तदङ्गत्वात् साध्यरूपैवेति। साध्यभावेत्यनेन सा साध्यपुमर्थान्तरा च परिहृता, उत्तमाया एवोपक्रान्तत्वात्। भावस्य साध्यत्वे कृत्रिमत्वात् परमपुरुषार्थत्वाभावः स्यादित्याशङ्क्याह— नित्येति। भगवच्छक्तिविशेषवृत्तिविशेषणत्वेनाग्रे (१/३/१)— साधयिष्यमाणत्वादिति भावः॥ २॥

### अनुवाद

सामान्य रूप से लक्षित उत्तमा भक्ति का कृत्या अर्थात् इन्द्रिय प्रेरणा के द्वारा अनुष्ठित होने पर उसको साधन भक्ति कहते हैं। इन इन्द्रिय व्यापार का अन्तर्भाव उत्तमा भक्ति में उसी प्रकार होगा जिस प्रकार यज्ञ के पूर्व की क्रियाओं का अन्तर्भाव यज्ञ में होता है। भाव आदि के अनुभाव रूप जो इन्द्रिय व्यापार होते हैं उनसे पृथक करने के लिये कहते हैं कि यह साध्यभावा है। साध्यभावा का अर्थ है कि इससे भाव-प्रेमादि रूप भाव भक्ति साधित होते हैं। किन्तु भावसिद्धा को साध्यभावा नहीं कहते हैं, क्योंकि वह उसका अङ्ग होने के कारण साध्यरूपा ही है।

साध्यभावा इस शब्द के प्रयोग के द्वारा अन्यान्य (धर्म, अर्थ, काम, मोक्ष) पुरुषार्थों का परिहार किया गया है क्योंकि यहाँ पर उत्तमा भक्ति का विषय वर्णित हो रहा है।

भाव के साध्य होने पर उसका कृत्रिम होने के कारण परम पुरुषार्थ होना सम्भव नहीं है, इस शङ्का के समाधान के लिए कहते हैं– 'नित्य सिद्धस्य भावस्य प्राकट्यं हृदि साध्यता' नित्य सिद्ध भक्तगण में जो भाव नित्य रूप से रहता है उसका साधक भक्त के अन्तःकरण में आविर्भूत होना ही साध्यता है। यह भक्ति आविर्भूत होती है, की नहीं जाती है। यह भक्ति भगवत् शक्ति विशेष की वृत्ति विशेष है। इसका वर्णन आगे १/३/१ में होगा॥ २॥

## अर्थरत्नाल्प-दीपिका

कृत्या देहादिव्यापारेण साध्या, कृतेस्तदङ्गत्वात्तदन्तर्भावः, अव्यङ्ग्यो देहादिव्यापारः साधनाभिधा भवेदित्यर्थः। अस्याः फलं दर्शयन्नवधिमाह,– साध्यो निष्पाद्यो भावो रतिर्ययावृत्तिरूपया कुत्रापि सकृद्रूपया च सा साध्यभावा, भावात् पूर्व्वा साधनभक्तिर्भावस्तस्याः फलमित्यर्थः। जातभावे या सा भावस्य कार्य्यत्वात् साध्यैव, भावस्य साध्यत्वे कृत्रिमत्वादपरमपुरूषार्थतामाशङ्क्याह,– नित्येति; नित्यसिद्धभक्तेषु शुद्धसत्वविशेषरूपतया सदा वर्तमानस्यात्र स्वयं स्फुरणान्न कृत्रिमत्वशङ्का, (भ.र.सि. १/२/२३४) ''अतः श्रीकृष्णनामादि न भवेद् ग्राह्यमिन्द्रियैः'' इति वक्ष्यमाणत्वात्, साधनभक्तिरेव न कृत्रिमा, किमुत भाव॥ २॥

## अनुवाद

कृत्या अर्थात् देहादि चेष्टा के द्वारा जो साध्य है, उसको साधन भक्ति कहते हैं। कृति-प्रयत्न भी भक्ति का अङ्ग होने के कारण उसका साधन भक्ति में अन्तर्भाव होता है। अभिप्राय यह है कि अव्यङ्ग्य देहादि व्यापार साधन भक्ति हैं।

इस साधन भक्ति के फल को दिखाने के लिए उसकी सीमा को कहते हैं। जो साध्य भक्ति का निष्पादन करती है, उसको साध्यभावा कहते हैं। कभी कभी साधन भक्ति अनेक बार आवृत्ति के द्वारा भाव भक्ति को निष्पादन करती है, कभी एक बार आवृत्ति के द्वारा ही भाव, रति उत्पन्न करती है। इसलिए साधन भक्ति का नाम साध्यभावा है। भाव आविर्भाव होने के पहले भक्ति का नाम साधन भक्ति होता है, साधन भक्ति का फल है– भाव भक्ति। भाव उत्पन्न होने के बाद भाव का कार्य होने के कारण वह भी साध्य नाम से ही परिचित होती है।

भाव का निष्पादन-साध्य होने से कृत्रिम होकर विनाशी होगा, उससे परम पुरुषार्थता भाव भक्ति की नहीं रहेगी। इस प्रकार की आशङ्का के समाधान के लिए कहते हैं– भक्ति नित्य है, भगवान् की स्वरूप शक्ति है, शुद्ध सत्त्व विशेष है, वह नित्य सिद्ध भक्तगणों में शुद्धसत्त्वविशेष रूप से सदा वर्त्तमान रहती है, एवं वह भक्त के हृदय में स्वयं स्फुरित होती है। इसलिए उस भक्ति के कृत्रिम हाने की आशङ्का नहीं है। आगे भक्तिरसामृतसिन्धु के १/२/२३४ में कहा गया है–

"अतः श्रीकृष्णनामादि न भवेद् ग्राह्यमिन्द्रियैः।<br>
सेवोन्मुखे हि जिह्वादौ स्वयमेव स्फुरत्यदः॥"

"अतः श्रीकृष्ण के नाम प्रभृति इन्द्रियों के द्वारा ग्राह्य नहीं हैं। जिह्वादि इन्द्रिय समूह के श्रीकृष्ण

के नामादि की सेवा में उन्मुख होने पर नामादि स्वयं स्फुरित होते हैं।"

इस प्रकार साधन भक्ति ही जब कृत्रिम नहीं है तो भाव की फिर बात ही क्या है॥ २॥

## भक्तिसार-प्रदर्शिनी

कृतीति, सा सामान्यतो लक्षितोत्तमा भक्तिरिन्द्रियव्यापारेण साध्या चेत् साधनाभिधा भवति। अत्रेन्द्रिय-व्यापारस्य भक्त्यन्तर्भावः, यागस्य पूर्वक्रियाया यथा यागान्तर्भावस्तथैव ज्ञेयः। तेन भक्तिभिन्नस्य न भक्तिजनकत्वमिति सिद्धान्तोऽपि सङ्गच्छते। अत्र भावभक्तेरनुभावरूपस्य श्रवणकीर्त्तनादेः साधनत्व-व्यवहाराभावात्तद्वारणायाह— साध्येति। साध्यो भावो यया सा भावजनिकेत्यर्थः; तेन धर्मार्थादिपुरुषार्थान्तरसाधकभक्तिश्च पराकृता, उत्तमाया एव उपक्रान्तत्वात् भावादीनां साध्यत्वे कृत्रिमत्वात् परमपुरुषार्थत्वाभावः स्यादित्याशङ्क्याह— नित्येति। भावस्येत्युपलक्षणं श्रवणकीर्त्तनादयोऽपि ग्राह्याः। तेषामपि कर्णजिह्वादौ प्राकट्यमात्रम्, यथा श्रीकृष्णो वसुदेवगृहेऽवततार। भक्तीनां भगवच्छक्तिवृत्तिविशेषत्वेनाग्रे साधयिष्यमाणत्वादिति भावः॥ २॥

## अनुवाद

सामान्य रूप से लक्षित उत्तमा भक्ति जब इन्द्रिय व्यापार के द्वारा साध्या होती है तब उसको साधन भक्ति कहते हैं।

यहाँ इन्द्रिय व्यापार अर्थात् इन्द्रियों की चेष्टा भी भक्ति में अन्तर्भुक्त है, जैसे याग करने के लिए याग के लिए उसके पूर्व अनेक कार्यों को करना पड़ता है, वे सब भी याग के अन्तर्गत ही हैं। इससे भक्ति भिन्न वस्तु भक्ति की जनक नहीं हो सकती है, यह सिद्धान्त भी सुरक्षित हुआ।

भाव भक्ति का अनुभाव रूप जो श्रवण कीर्त्तन प्रभृति हैं उसमें साधनत्व व्यवहार नहीं है, उसको निषेध करने के लिए कहते हैं— साध्य इत्यादि। जिससे भाव उत्पन्न होता है, उसको साध्यभावा कहते हैं।

इससे धर्म, अर्थ, काम व मोक्ष रूप चतुर्वर्ग पुरुषार्थ साधिका भक्ति का निवारण हुआ। कारण यह भक्ति उत्तमा भक्ति के लक्षण युक्ता भक्ति है।

भाव के साध्य होने से उसके कृत्रिम होने के कारण वह परम पुरुषार्थ नहीं हो सकता है। इस शंका का निवारण करने के लिए कहते हैं— नित्य सिद्ध भक्तों के भाव का साधकों के हृदय में प्रादुर्भाव ही भाव की साध्यता है।

भाव के उपलक्षण के रूप में श्रवण कीर्त्तन आदि को भी जानना होगा। इनका कर्ण जिह्वादि में प्राकट्य मात्र होता है। जैसे— वसुदेव के घर में श्रीकृष्ण अवतरित हुए थे।

भक्ति भगवान् की स्वरूप शक्ति की वृत्ति विशेष होने के कारण नित्य सिद्ध है। आगे ग्रन्थ में इसका विस्तार से वर्णन होगा॥ २॥

**सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदिता॥　　(३)**

## अनुवाद

इस साधन भक्ति को देवर्षि नारद ने सप्तम स्कन्ध (भा. ७/१/२५) में विशेष परिपाटी से कहा है॥ ३॥

## दुर्गमसङ्गमनी

सेति। नन्वत्र– (भा. ७/१/२५) ''तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्ष्यते पृथगिति'' भयद्वेषावपि विहितौ, तर्हि तावपि भक्ती स्यातां तर्ह्यानुकूल्येनेति विशेषणविरोधः स्यात्तत्राह– भङ्ग्येति। यः खलु भयद्वेषयोरपि मङ्गलं विदधीत, तस्मिन्नपि को वा परमपामरो भक्तिं न कुर्वीत, प्रत्युत तौ विदधीतेति परिपाट्येत्यर्थः। युञ्ज्यादिति तु सम्भावनायामेव लिङ् विधानात्, न तु विधौ। भयद्वेषयोर्विधातुमशक्यत्वात्। यद्यपि श्रीकृष्णपरमेवेदं वाक्यं, तथापि तदंशादौ च तारतम्येन ज्ञेयम्॥ ३॥

### अनुवाद

तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्ष्यते पृथक्॥

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों में कोई भेद नहीं है।

यहाँ श्री नारद वाक्य से भय, द्वेष के भी विहित होने से इन दोनों के भी भक्ति हो जाने से उत्तमा भक्ति लक्षण में आनुकूल्यमय शब्द के साथ विरोध होता है। इस आशंका के निरास करने के लिए कहते हैं– भङ्गी क्रम से अर्थात् विशेष रीति से। जो भय, द्वेषादि करने वाले को भी मङ्गल प्रदान करते हैं, उन परमेश्वर में कौन परम पामर व्यक्ति भक्ति नहीं करेगा?

भय, द्वेष करने का अभिप्राय न होने पर भी भय, द्वेष करे। क्योंकि भय, द्वेष से भी भगवत् प्राप्ति की सम्भावना है। यानि कि इस परिपाटी से उत्तमा भक्ति का वर्णन श्री नारदजी ने किया है।

यहाँ पर 'युञ्ज्यात्' में सम्भावना अर्थ में लिङ् लकार का विधान है, विधि अर्थ में नहीं। भय, द्वेष का विधान नहीं कर सकते हैं। यद्यपि यह वाक्य श्रीकृष्ण पर है तथापि उनके अंशों में भी तारतम्य से जानना होगा॥ ३॥

## भक्तिसार-प्रदर्शिनी

सेति; नन्वत्र– (भा. ७/१/२५) ''तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्ष्यते पृथक्॥'' इति पद्ये भयद्वेषावपि विहितौ, तर्हि तावपि भक्ती स्याताम्? तयोर्भक्तित्वस्वीकारे तु 'आनुकूल्येनेति' विशेषणविरोधः स्यात्; तत्कर्त्तर्य्यसुरेऽपि भक्तव्यवहारापत्तेश्चेत्याह– भङ्ग्येति। यः खलु भयद्वेषकर्त्तॄनामपि मङ्गलं करोति; तस्मिन्नीश्वरे को वा परमपामरो भक्तिं न कुर्वीत? प्रत्युत भयद्वेषौ विदधीतेति भङ्ग्या परिपाट्या देवर्षिणोक्तम्॥ ३॥

### अनुवाद

श्रीमद्भागवत (७/१/२५) में उक्त है–

"तस्मात् वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्ष्यते पृथक्"॥

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों में कोई भेद नहीं है।

इस पद्य के अनुसार भय, द्वेष भी विहित है; तो क्या भय, द्वेष भी भक्ति हैं? दोनों को भक्ति मान लेने पर उत्तमा भक्ति के लक्षण में "आनुकूल्येन" जो विशेषण दिया गया है, उससे विरोध होगा। भय, द्वेष करने वाले असुरों में भी भक्त शब्द का प्रयोग होने लगेगा। इसके समाधान के लिये कहते हैं— "भङ्ग्या" अर्थात् भय, द्वेष करने वाले का भी यदि ईश्वर मङ्गल करते हैं; तब कौन परम पामर व्यक्ति है जो उन ईश्वर में भक्ति नहीं करेगा? भय और द्वेष का अभिप्राय न होने पर भी भय और द्वेष करे क्योंकि इससे भी भगवत् प्राप्ति की सम्भावना है; इस प्रकार कहने की परिपाटि से देवर्षि ने कहा है॥ ३॥

**यथा सप्तमे (७/१/३१)—**

**''तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्॥'' इति। (४)**

### अनुवाद

जैसाकि श्रीमद्भागवत (७/१/३१) में उक्त है—

इसलिए जिस किसी उपाय से मन को कृष्ण में तन्मय कर देना चाहिये॥ ४॥

### दुर्गमसङ्गमनी

तस्मादिति। उपायेन कामादिना निर्वैरशब्दप्रतिपादयितव्येन विधिना च द्वारा, मनोनिवेशोपलक्षणत्वेन तत्तदिन्द्रियचेष्टा च भक्तिरित्यर्थः। तथापि केनापि योग्येन भयद्वेषातिरिक्तेन स्वमनोऽनुकूलेनैकतरेणैवेत्यर्थः॥ ४॥

### अनुवाद

उपायेन अर्थात् कामादि के द्वारा एवं निर्वैर शब्द प्रतिपाद्य विधि के द्वारा श्रीकृष्ण में मन निवेश करना चाहिए। मन निवेश यहाँ पर उपलक्षण है, इससे समस्त इन्द्रिय की चेष्टायें भी भक्ति हैं।

तथापि भय, द्वेषादि भिन्न स्वमनोनुकूल किसी योग्य एक प्रकार के उपाय के द्वारा श्रीकृष्ण में मन को तन्मय कर देना चाहिये॥ ४॥

### अर्थरत्नाल्प-दीपिका

तस्मादित्यस्य पूर्व्वार्द्धः (भा. ७/१/३१) ''कतमोऽपि न वेणः स्यात् पञ्चानां पुरुषं प्रति'' इति; अस्यार्थः— पूर्व्वशत्रुरूपं मां घातकोऽवतीर्ण इति द्वेषमूलत्वात् कंसभयस्य द्वेषान्तर्भावात् पञ्चानामित्युक्तम्; कतमोऽपि न वेण इत्यस्य भयद्वेषयोर्निषिद्धत्वात् कंसादीनां पापजातमभिनिवेशात्तन्नष्टम्; ते च तदात्मतां प्राप्ताः। अभिनिवेशाभावादस्य तु पापमित्यभिप्रायः। यस्मान्निषिद्धकर्त्ता वेणवन्नरकं गच्छेत् तस्माद्धेतोः केनाप्युपायेन कामस्नेहादिचतुष्टयानुवर्त्तिना मनोभिरुचिनैकतमेन देहेन्द्रियान्तःकरणव्यापारात्मकेन साधनेन मनः कृष्णे निवेशयेदासक्तं कुर्य्यादिति चातुर्य्येण प्रेरणम्। श्रवण-कीर्त्तन-स्मरणादिका भावोत्पत्तेः प्राक् श्रीकृष्णासक्तिपर्य्यन्ता क्रिया

साधनभक्तिरित्यर्थः। (भा. ७/१/२५) ''तस्माद् वैरानुबन्धेन'' इत्यादि पद्ये भयद्वेषावपि मनोभिनिवेशात्मकावेव गृहीतौ, कथञ्चिन्नेक्षते पृथगित्युक्तत्वात्॥ ४॥

## अनुवाद

तस्मात् केनाप्युपायेन मनः कृष्णे निवशयेत्॥ इसका पूर्वार्द्ध है—

कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति।

जो पाँच प्रकार के व्यक्ति भगवान् का चिन्तन करने वाले हैं, उनमें से राजा वेन की तो किसी में भी गणना नहीं होती है, कारण उसने किसी भी प्रकार से भगवान् में मन नहीं लगाया था।

इसका अर्थ इस प्रकार है— पूर्व शत्रु रूप मुझको मारने के लिए भगवान् अवतीर्ण हुए हैं, इस प्रकार विद्वेष मूलक होने के कारण कंस के भय का द्वेष में अन्तर्भाव हो गया, इसलिये पाँचों का, इस प्रकार कहा गया है। किन्तु वेन उन पाँच के मध्य में शामिल नहीं है। कंसादि का पाप जात अभिनिवेश से पाप नष्ट हो गया था, अतः वे तादात्म्य को प्राप्त हुए। किन्तु अभिनिवेश का अभाव होने से वेण का केवल पाप था। यही कहने का अभिप्राय है।

इससे निषिद्धाचरणकारी वेण की भाँति नरक होगा; अतः मन की अभिरुचि के अनुसार काम, स्नेहादि चारों के मध्य में जिस किसी भी उपाय से देहेन्द्रिय एवं अन्तःकरण व्यापार मूलक साधन के द्वारा मन को कृष्ण में निवेश अर्थात् आसक्त करना चाहिये; यही नारद की चातुरी पूर्वक प्रेरणा है।

श्रवण, कीर्त्तन, स्मरणादि क्रियायें भावोत्पत्ति के पूर्व आसक्ति पर्यन्त साधन भक्ति हैं। "तस्माद् वैरानुबन्धेन" (भा. ७/१/२५) इत्यादि पद्य में भय-द्वेष भी केवल मनोनिवेशात्मक ही गृहीत हैं न कि मात्र भय व द्वेष; क्योंकि भा. ७/१/२५ में ही कहा गया है कि भगवान् विभिन्न साधनों से प्राप्त मनोनिवेश में कुछ भी अन्तर नहीं देखते हैं॥ ४॥

## भक्तिसार-प्रदर्शिनी

पश्चात् श्लोके देवर्षिरभिप्रायं स्पष्टीकरोति— तस्मादिति। तेषां मध्ये केनाप्युत्कृष्टेन निर्वैरशब्दप्रतिपादितेन कामाद्युपायेनेत्यर्थः॥ ४॥

## अनुवाद

पीछे के श्लोक से देवर्षि के अभिप्राय को सुस्पष्ट करते हैं— पूर्वोक्त पाँच उपायों के बीच में जिस किसी उत्कृष्ट निर्वैर शब्द प्रतिपादित कामादि उपाय से श्रीकृष्ण में मन का निवेश करना चाहिये॥४॥

**वैधी रागानुगा चेति सा द्विधा साधनाभिधा॥ (५)**

## अनुवाद

वह साधन भक्ति वैधी एवं रागानुगा भेद से दो प्रकार की है॥ ५॥

**तत्र वैधी—**

**यत्र रागानवाप्तत्वात् प्रवृत्तिरुपजायते।**
**शासनेनैव शास्त्रस्य सा वैधीभक्तिरुच्यते॥ (६)**

## अनुवाद

वैधी भक्ति का लक्षण कहते हैं—

राग की अप्राप्ति होने के कारण शास्त्र के शासन से ही जिस भक्ति में प्रवृत्ति उत्पन्न होती है उसको वैधी भक्ति कहते हैं॥ ६ ॥

## दुर्गमसङ्गमनी

यत्र भक्तौ, प्रवृत्तिः पुंसो रागानवाप्तत्वात् रागेणानवाप्तेति हेतोः शास्त्रस्य शासनेनैव उपजायते, सा भक्तिर्वैधी उच्यते। रागोऽत्रानुरागस्तद्रुचिश्च। अग्रे (१/२/२७०—७२) रागात्मिकारागानुगयोर्भेदस्य वक्ष्यमाणत्वात्। शासनेनैवेत्येवकारात् रागप्राप्तत्वमपि चेत्तर्ह्यंशेनैव वैधीत्वं ज्ञेयम्॥ ६ ॥

## अनुवाद

जहाँ पर भक्ति में व्यक्ति की प्रवृत्ति राग की प्रप्ति नहीं होने से शास्त्र के शासन से ही होती है, उसको वैधी भक्ति कहते हैं। 'राग' यहाँ पर अनुराग अर्थात् भक्ति में रुचि है। इसको अग्रिम ग्रन्थ (१/२/२७०-७२) में रागात्मिका और रागानुगा के भेद वर्णन के द्वारा जाना जाएगा।

शास्त्र शासन से ही प्रवृत्ति होती है; यहाँ पर ही (एवकार) से यदि राग प्राप्त भी है, तो भी उसको एक अंश में वैधी जानना होगा॥ ६ ॥

## अर्थरत्नाल्प-दीपिका

यत्र भक्तौ प्रवृत्तिः रागानवाप्तत्वात् रागेण लोभेनानवाप्तिहेतोः शास्त्रस्य शासनेनैव, न तु स्वकल्पनादिना ॥ ६ ॥

## अनुवाद

जहाँ पर भक्ति में प्रवृत्ति लोभ प्राप्त न होने के कारण शास्त्र के शासन से ही हुयी है न कि अपनी कल्पना आदि से; वह भक्ति वैधी भक्ति कही जाती है॥ ६ ॥

## भक्तिसार-प्रदर्शिनी

वैधीति— रागोऽत्र रागस्तद्रुचिश्च, अग्रे रागात्मिका-रागानुगयोर्वक्ष्यमाणत्वात्। अथात्र साधनादौ प्रवृत्तिसामान्ये कुत्रचिल्लोभस्य कारणत्वम्, कुत्रचिच्छास्त्रशासनस्य। तत्र च यस्यां भक्तौ लोभस्य कारणत्वं नास्ति, किन्तु शास्त्रशासनस्यैव सा वैधीत्याह— यत्रेति। रागोऽत्र श्रीमूर्त्तेर्दर्शनाद्दशमस्कन्धीयतत्तल्लीलाश्रवणाच्च भजनलोभस्तदनाप्तत्वादनधीनत्वाद्धेतोः शास्त्रस्य शासनेनैव या प्रवृत्तिरुपजायते, सा भक्तिर्वैध्युच्यते॥ ६ ॥

## अनुवाद

यहाँ पर राग शब्द से राग एवं भक्ति में रुचि को जानना होगा क्योंकि अग्रिम ग्रन्थ में रागात्मिका एवं रागानुगा के भेद वर्णन में ऐसा है।

यहाँ पर भक्ति साधन में सामान्य प्रवृत्ति के समय कहीं पर लोभ का कारणत्व है, कहीं पर शास्त्र

शासन का कारणत्व है। जिस भक्ति में लोभ का कारणत्व नहीं है, किन्तु शास्त्र के शासन का ही प्रवृत्ति में कारणत्व है, उसको वैधी भक्ति कहते हैं।

यहाँ पर राग शब्द का अर्थ श्रीमूर्त्ति का दर्शन, श्रीमद्‌भागवतीय दशम स्कन्ध की लीलाओं के श्रवण से भजन करने के लिए लोभ को जानना है। अतएव इसको छोड़कर लोभ के अधीन प्रवृत्ति न होकर शास्त्र शासन से ही जिसमें प्रवृत्ति होती है उस भक्ति को वैधी कहते हैं॥ ६॥

**यथा द्वितीये (२/१/५)—**

**तस्माद्भारत! सर्व्वात्मा भगवानीश्वरो हरिः।**
**श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयम्॥ (७)**

## अनुवाद

जैसाकि द्वितीय स्कन्ध (२/१/५) में कहा गया है—

इसलिए हे परीक्षित्! सांसारिक भय नाश करने के लिए सर्वात्मा भगवान् ईश्वर हरि ही श्रोतव्य, कीर्तितव्य एवं स्मर्त्तव्य हैं॥ ७॥

## अर्थरत्नाल्प-दीपिका

'तस्माद् भारत' इत्यत्र हरिशब्दाद् भक्ताश्च प्राप्ताः,–'अर्च्चयित्वा तु गोविन्दं तदीयान्नार्च्चयन्ति ये। न ते विष्णोः प्रसादस्य भाजनं दाम्भिका जनाः' इत्यादौ दोषश्रवणात्॥ (भ.र.सि. १/२/२९४) ''कृष्णं स्मरन् जनञ्चास्य'' इत्यादौ ते साक्षादेव गृहीष्यन्ते— तेषाम् तत्रैवात्युपादेयत्वात् (भ.र.सि. १/१/११) अतः कृष्णानुशीलनमित्यत्रापि सपरिकर एव कृष्णो ज्ञेयः॥ ७॥

## अनुवाद

'तस्माद् भारत सर्वात्मा भगवान् ईश्वरो हरिः' यहाँ पर हरि शब्द का प्रयोग होने से भक्तों को भी ग्रहण करना होगा। कहा गया है— गोविन्द की अर्चना करके उनके जनों की अर्चना जो नहीं करता है, वह विष्णु की प्रसन्नता प्राप्त करने के योग्य नहीं है, वह दाम्भिक है। इन वचनों से भक्तपूजा न करने से दोष कहा गया है। भक्तिरसामृतसिन्धु के १/२/२९४ में साक्षात् रूप में ही इसे इस प्रकार कहा गया है—

कृष्णं स्मरण जनञ्चास्य प्रेष्ठं निजसमीहितम्।
तत्तत् कथारतश्चासौ कुर्याद् वासं व्रजे सदा॥

अर्थात् "श्रीकृष्ण एवं उनके प्रिय जन का स्मरण करते हुये उनकी मधुर लीला कथा में रत होकर सदा व्रज में निवास करें।" ये सब अति उपादेय हैं। अतएव भक्तिरसामृतसिन्धु १/१/११ में उक्त कृष्णानुशीलन शब्द से भी सपरिकर श्रीकृष्ण को जानना होगा॥ ७॥

## भक्तिसार-प्रदर्शिनी

अभयं नास्ति संसारादिजन्यभयं यस्मात् भगवतस्तमिच्छता पुरुषेण भगवान् श्रोतव्यः। तेन संसारादिभयनिवृत्तिप्रतिपादकशास्त्रशासनादेव प्रवृत्तिः, न तु लोभादिति भावः॥ ७॥

### अनुवाद

संसारादि जन्य भय जिन भगवान् हरि के कारण मिट जाता है, इस इच्छा से उन भगवान् के विषय में सर्वथा श्रवण करते रहना चाहिये। भाव यह है कि जब इन संसारादि भय निवृत्ति प्रतिपादक शास्त्र शासन से ही प्रवृत्ति होती है, किन्तु लोभ से नहीं, तो वैधी भक्ति होती है॥ ७॥

**पाद्मे च—**

**स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित्।**
**सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥ (८)**

### अनुवाद

पद्म पुराण में भी कहा गया है—

प्रतिदिन विष्णु का स्मरण करना उचित है, उन्हें कभी भी नहीं भूलना चाहिये। समस्त विधि-निषेध इन्ही दोनों के किङ्कर हैं॥ ८॥

### दुर्गमसङ्गमनी

सर्व इति। अहरहः संध्यामुपासीत, ब्राह्मणो न हन्तव्य इत्यादिरूपाः। एतयोः स्मर्तव्यविस्मर्त्तव्यरूपयोर्विधिनिषेधयोरेव किङ्कराः अधीनाः, विपरीते तु विपरीतफला भवन्तीति भावः; चिच्छब्दस्त्वत्र जातुशब्दस्यार्थद्योतक एव, न तु वाचकः॥ ८॥

### अनुवाद

सर्व विधि-निषेध कहने से प्रतिदिन सन्ध्या वन्दन करना चाहिये, ब्राह्मण हत्या नहीं करना चाहिये इत्यादि रूप विधि-निषेध को जानना है। ये सभी विधि-निषेध श्री विष्णु स्मरण एवं श्री विष्णु विस्मरण रूप विधि-निषेधद्वय के किङ्कर अर्थात् अधीन हैं। भाव यह है कि स्मरण करने से उत्तम फल मिलता है, स्मरण न करने से विपरीत फल मिलता है। जातुचित्— यहाँ पर चित् शब्द जातु शब्द का द्योतक है, न कि वाचक॥ ८॥

### अर्थरत्नाल्प-दीपिका

एतयोः स्मरणविस्मरणविधयोः॥ ८॥

### अनुवाद

श्लोकोक्त एतयोः शब्द का अभिप्राय है— विष्णु का स्मरण और विस्मरण रूप विधि-निषेध॥ ८॥

### भक्तिसार-प्रदर्शिनी

सर्व इति— सर्वेषां विधीनां श्रीविष्णुस्मरण-किङ्करत्वात् श्रीविष्णुस्मरणे क्रियमाण एव सर्वेषां विधिबोधितानां करणनिर्वाहः। एवमनन्तगोब्राह्मणादिहत्यानां निषेधानां विष्णुविस्मरणस्य किङ्करत्वाद् विष्णुविस्मरणे जाते विस्मर्तुः पुरुषस्य सर्वनिषेधप्रतिपादितानन्तपापवत्त्वप्रसङ्ग इत्यर्थः। सततं प्रत्यहं, न तु प्रतिक्षणं तस्यासाध्यत्वेन विधेरनुष्ठानलक्षणाप्रामाण्यापत्तेः॥ ८॥

## अनुवाद

समस्त विधियों का श्रीविष्णु स्मरण विधि का किङ्कर होने से श्रीविष्णु का स्मरण करने से क्रियमाण समस्त विधियों का पालन होता है। इसी प्रकार अनन्त गो ब्राह्मणादि हत्यारूपी निषेध भी श्रीविष्णुविस्मरण के किङ्कर हैं। ऐसा होने के कारण विष्णु विस्मरण होने पर विस्मरणकारी पुरुष का सर्व निषेध प्रतिपादित अनन्त पाप होता है।

सतत स्मरण करने का अर्थ है— प्रतिदिन स्मरण करना है, किन्तु प्रत्येक क्षण में नहीं। कारण, प्रतिक्षण विष्णु का स्मरण करना असम्भव होने से विधि का अनुष्ठान नहीं हो सकेगा, और विधि का अप्रामाण्य होगा॥ ८॥

**इत्यसौ स्याद्विधिर्नित्यः सर्ववर्णाश्रमादिषु।**
**नित्यत्वेऽप्यस्य निर्णीतमेकादश्यादिवत्फलम्॥ (९)**

## अनुवाद

यह विधि समस्त वर्ण, समस्त आश्रम एवं मानव मात्र के लिए नित्य विधि है। यह विधि नित्य होने पर भी इसका एकादशी आदि के तरह फल को कहा गया है॥ ९॥

## दुर्गमसङ्गमनी

इत्यसाविति कारिका तु 'एवं क्रियायोगपथैः पुमानि' त्यनन्तरं (१/२/१२) पठनीया। इति-शब्देन पूर्वप्रकरणस्य हेतुतायां योग्येन कृतमुखाया एतस्याः कारिकाया उपसंहारवाक्यताप्राप्तेस्तत्प्रकरणान्त एव योग्यत्वात्॥ ९॥

## अनुवाद

इस कारिका का पाठ श्रीभागवत के ११/२७/४९ जो कि इस ग्रन्थ का १/२/१२ श्लोक है; के बाद उचित है। श्लोक इस प्रकार है—

"एवं क्रिया-योगपथैः पुमान् वैदिक-तान्त्रिकैः।
अर्च्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम्॥"

वैदिक तान्त्रिक क्रियाकाण्ड के अनुसार मेरा अर्चन करने पर इस जगत एवं परजगत के सब इच्छित फल मुझसे मानव प्राप्त कर सकता है।

कारिका में इति शब्द का योग होने के कारण उपसंहार वाक्य का बोध होता है, इसलिए प्रकरण के अन्त में पाठ करना उचित है॥ ९॥

## अर्थरत्नाल्प-दीपिका

इत्यसाविति, सर्ववर्णाश्रमादिषु— आदिशब्दात्तदुर्वरिताः सर्वजनाश्च गृहीताः। एकादश्यादिवदिति— एकादश्या भक्तित्वेऽपि दृष्टान्तः। इदं विश्वं नश्वरं घटकुण्डलादिवदित्येकदेशेऽपि तद्दर्शनात्॥ ९॥

## अनुवाद

समस्त वर्ण, आश्रमादि में यह भक्ति विहित है; यहाँ आदि शब्द से मानव मात्र को ग्रहण करना है। एकादशी भक्ति है; इससे हरि तोषण होता है। यह नित्यविदित है, किन्तु बहिर्मुख जनों के लिए इसमें भी फल का वर्णन है। एकादशी न करने से पाप होता है। एकादशी का भक्तित्व होने पर भी इसे दृष्टान्त के रूप में प्रयोग किया गया है। जैसे यह विश्व नश्वर है घट कुण्डलादि के तरह। यहाँ एकदेश में नश्वरता की समानता होने पर भी दृष्टान्त रूप में प्रयोग हुआ है॥ ९॥

## भक्तिसार-प्रदर्शिनी

इत्यसाविति— अकरणे पापश्रवणेन भजनस्य नित्यत्वनिश्चयेऽप्येकादश्यादिवत् फलमस्ति॥ ९॥

## अनुवाद

भक्ति न करने से पाप होता है; ऐसा सुनने में आने के कारण भजन का नित्यत्व निश्चय होने पर भी एकादशी आदि के समान इसके भी फल हैं॥ ९॥

**यथा एकादशे तु व्यक्तमेवोक्तम् (११/५/२,३)—**

**मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।**
**चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥　　(१०)**
**य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।**
**न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यधः॥　　(११)**

## अनुवाद

एकादश स्कन्ध (भा. ११/५/२, ३) में स्पष्टरूप से कहा गया है—

परम पुरुष ईश्वर के मुख, बाहु, ऊरु एवं चरण से विप्रादि वर्ण चतुष्टय ब्रह्मचर्यादि आश्रम चतुष्टय के सहित उत्पन्न हुये हैं, एवं सत्व रजः तमोगुण के भेद से भिन्न-भिन्न श्रेणी में विभक्त हुए हैं। वर्ण चतुष्टय के मध्य में जो सब व्यक्ति पुरुष रूपी साक्षात् ईश्वर का भजन नहीं करते हैं, किंवा जानकर भी अवज्ञा प्रदर्शन करते हैं, वे वर्णाश्रम धर्म से भ्रष्ट होकर अधोगामी होते हैं॥ १०-११॥

## भक्तिसार-प्रदर्शिनी

तथात्र भजनीयस्य भगवतोऽभजने दुर्गतिरेवेति वक्तुं प्रथमं भजनीयत्वे युक्तिमाह— मुखेति। गुणैः सत्वादिभिः करणैराश्रमैः सह विप्रादयश्चत्वारो जज्ञिरे। एषां मध्ये ये विप्रादयः साक्षादात्मनः प्रभव-उत्पत्तिर्यस्मादेवम्भूतमीश्वरं न भजन्ति अतएवावजानन्त्यभजनादेवावज्ञां कुर्वन्ति। यथा परमादरणीयस्य पुरुषस्यादराकरणमेवानादरस्तथा परमभजनीयस्य भगवतोऽभजनमेवावज्ञा इत्यर्थः। स्थानाद् वर्णाश्रमाद् भ्रष्टाः सन्तोऽधः पतन्ति॥ १०-११॥

## अनुवाद

भजनीय भगवान् का भजन न करने से दुर्गति होती है। इसको कहने के लिये प्रथम भगवान् कैसे

भजनीय हैं? इसके लिये युक्ति कहते हैं– सत्त्व रजः तमः गुणों से एवं ब्रह्मचर्य, गृहस्थ, वानप्रस्थ, सन्यास आश्रमों के साथ ब्राह्मण, क्षत्रिय, वैश्य, शूद्र की उत्पत्ति ईश्वर से हुई है। इनके मध्य में जो विप्रादि हैं यदि वे जिन परमेश्वर से उत्पन्न हुए हैं, उनका भजन नहीं करते हैं तो भजन न करना ही उनकी अवज्ञा है। जिस प्रकार परम आदरणीय पुरुष का आदर न करना ही अनादर होता है, उसी प्रकार परम भजनीय श्रीभगवान् का भजन न करना ही अवज्ञा है। इससे वे वर्णाश्रम से भ्रष्ट अर्थात् अधःपतित (नरकगामी) होते हैं॥ १०-११॥

**तत्फलं च तत्रैव (भा. ११/२७/४९)–**

**एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।**
**अर्च्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम्॥ (१२)**

### अनुवाद

भक्ति के फल का वर्णन वहीं (भा. ११/२७/४९) में इस प्रकार है–

जो मनुष्य इस प्रकार वैदिक व तान्त्रिक क्रिया योग के द्वारा मेरी पूजा करता है, वह इस लोक और परलोक में मुझसे अभीष्ट सिद्धि प्राप्त करता है॥ १२॥

### दुर्गमसङ्गमनी

तत्फलमुदाहरन्नर्च्चनमुपलक्ष्याह– एवमिति। तदुक्तम् (भा. २/३/१०)– "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं पर" मित्यादेः॥ १२॥

### अनुवाद

भक्ति के फल का उदाहरण प्रस्तुत करने के लिये अर्चन को उपलक्ष्य करके कहते हैं– एवं इत्यादि पद्य। इसी प्रकार श्रीमद्भागवत के २/३/१० में भी उक्त है–

अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्॥

अर्थात् "बुद्धिमान् पुरुष वह चाहे निष्काम हो, समस्त कामनाओं से युक्त हो अथवा मोक्ष चाहता हो, उसे तो तीव्र भक्तियोग के द्वारा केवल पुरुषोत्तम भगवान् की ही आराधना करनी चाहिये"॥ १२॥

### भक्तिसार-प्रदर्शिनी

तस्या भक्तेः फलमुदाहरन्नर्चनमुपलक्ष्याह– एवमिति। उभयतः ऐहिकीं पारलौकिकीञ्च सिद्धिम्॥ १२॥

### अनुवाद

भक्ति का फल कहने के लिये अर्चन को उपलक्ष्य करके कहते हैं– अर्चन करके पुरुषोत्तम भगवान् से इस जगत् एवं परजगत् की अभीष्ट सिद्धि प्राप्त कर सकता है। श्लोकोक्त उभयतः का अर्थ है– ऐहिक और पारलौकिक सिद्धियाँ॥ १२॥

पञ्चरात्रे च—

''सुरर्षे! विहिता शास्त्रे हरिमुद्दिश्य या क्रिया।
सैव भक्तिरिति प्रोक्ता तया भक्तिः परा भवेत्॥'' इति॥ (१३)

### अनुवाद

पञ्चरात्र में भी कहा गया है—

हे देवर्षि! श्रीहरि के उद्देश्य से शास्त्र में जो सब क्रियायें विहित हैं उसी को भक्ति कहते हैं; एवं इस भक्ति का अनुष्ठान करने से परा भक्ति होती है॥ १३॥

### दुर्गमसङ्गमनी

सामस्त्येन दर्शयन् परमफलमाह— पञ्चेति। ''सैव भक्तिः'' इत्यत्र वैधीति गम्यं, तत्प्रकरणपठितत्वात्॥ १३॥

### अनुवाद

वैधी भक्ति के द्वारा प्राप्त समस्त फल का प्रदर्शन करते हुए अब उसके परम फल को कहते हैं— पञ्चरात्र में उक्त है इत्यादि वचन द्वारा। श्रीहरि के उद्देश्य से जो क्रिया होती है, वह भक्ति है। यहाँ पर वैधी भक्ति सूचित हो रही है, कारण इसका पाठ वैधी प्रकरण में हुआ है॥ १३॥

### अर्थरत्नाल्प-दीपिका

सुरर्षे इति विहिता विधेयत्वेन कथिता शास्त्रविधेयदृष्टिरेव प्रवृत्तिहेतुरतो वैध्येव, न रागानुगा, तत्र लोभस्यैव प्रवृत्तिहेतुत्वात् ॥ १३॥

### अनुवाद

यहाँ पर विहिता शब्द का अर्थ है कि जिस क्रिया का विधान किया गया है; ऐसी भक्ति वैधी ही है क्योंकि यहाँ पर शास्त्र के विधान को दृष्टि में रखकर ही प्रवृत्ति हुयी है। यह भक्ति रागानुगा नहीं है क्योंकि रागानुगा में केवल लोभ ही प्रवृत्ति का हेतु है॥ १३॥

### भक्तिसार-प्रदर्शिनी

सामस्त्येन दर्शयन् परमफलमाह— पञ्चरात्र इति। सैव भक्तिरित्यत्र वैधीति गम्या, तत्प्रकरणपठितत्वात्। तया प्रेमलक्षणा भक्तिर्भवेदिति॥ १३॥

### अनुवाद

वैधी भक्ति के द्वारा प्राप्त समस्त फल का प्रदर्शन करते हुए अब उसके परम फल को कहते हैं— पञ्चरात्र में उक्त है इत्यादि वचन द्वारा। श्रीहरि के उद्देश्य से जो क्रिया होती है, वह भक्ति है। यहाँ पर वैधी भक्ति सूचित हो रही है, कारण इसका पाठ वैधी प्रकरण में हुआ है। उस प्रकार भक्ति का आचरण करते करते प्रेम लक्षणा भक्ति होगी॥ १३॥

**तत्र अधिकारी—**

**यः केनाप्यतिभाग्येन जातश्रद्धोऽस्य सेवने।**
**नातिसक्तो न वैराग्यभागस्यामधिकार्य्यसौ॥ (१४)**

## अनुवाद

वैधी भक्ति के अधिकारी का निर्णय करते हुए कहते हैं—

जो व्यक्ति किसी अतिशय सौभाग्य से श्रीकृष्ण की सेवा में श्रद्धालु होता है एवं न तो अति आसक्त है न तो वैराग्यवान्, वह वैधी भक्ति का अधिकारी है॥ १४॥

## दुर्गमसङ्गमनी

अतिभाग्येन महत्सङ्गादिजातसंस्कारविशेषेण॥ १४॥

## अनुवाद

अतिभाग्येन अर्थात् महत् सङ्गादि से उत्पन्न संस्कार विशेष के द्वारा श्रीकृष्ण की सेवा करने के लिए श्रद्धालु हुआ है॥ १४॥

## अर्थरत्नाल्प-दीपिका

य इति, अतिभाग्येनातिशयसुकृतेन केनापि भक्तौ विश्वासहेतुत्वाद्यनिर्वचनीयेन। अस्य श्रीकृष्णस्य सेवने भक्तौ जातश्रद्धस्तन्माहात्म्यं यथा श्रूयते तत्तथैव श्रद्धया युक्तः; नातिसक्तः भगवत्सम्मुखतामात्रार्थं देहदैहिकेष्वीषद् विमुखः॥ १४॥

## अनुवाद

अतिभाग्येन अर्थात् किसी अतिशय सुकृति के द्वारा। यह सुकृति भक्ति में विश्वास का हेतु होने के कारण अनिर्वचनीय है। श्रीकृष्ण की भक्ति में जातश्रद्ध कहने का अभिप्राय यह है कि उनकी भक्ति का जैसा माहात्म्य श्रवण करता है उसी प्रकार भक्ति में श्रद्धा से युक्त होता है। नातिसक्तः का अर्थ है— भगवत् सन्मुखता मात्र के लिये देह-दैहिक विषयों के प्रति थोड़ी विमुखता॥ १४॥

## भक्तिसार-प्रदर्शिनी

य इति, अतिभाग्येन महत्सङ्गादिजातसंस्कारविशेषेण, वैराग्यमत्र भजनप्रतिकूलफल्गुवैराग्यमित्यर्थः, तेन विषयवासनादौ वैराग्यार्थं यतिष्यत्येव॥ १४॥

## अनुवाद

अतिभाग्येन अर्थात् महत् सङ्गादि से उत्पन्न संस्कार विशेष के द्वारा श्रीकृष्ण की सेवा करने हेतु श्रद्धालु हुआ है। यहाँ वैराग्य का अर्थ है— भजनप्रतिकूलफल्गुवैराग्य। वह विषय वासनादि के प्रति वैराग्य के लिए यत्नशील होगा॥ १४॥

**यथैकादशे (११/२०/८)—**

**यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।**
**न निर्व्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥ इति। (१५)**

## अनुवाद

जैसाकि ग्यारहवें स्कन्ध (भा. ११/२०/८) में इस प्रकार कहा गया है—

जो व्यक्ति न तो अत्यन्त विरक्त है, और न ही अत्यन्त आसक्त है, तथा किसी महत् सङ्ग से सौभाग्यवश मेरी लीला कथा आदि में उसकी श्रद्धा हो गयी हो, उसके लिये भक्तियोग सिद्धिप्रद है॥ १५॥

## दुर्गमसङ्गमनी

यदृच्छयेति— तदेतच्च विवृतं स्वयं भगवता (भा. ११/२०/२७, २८)—

''जातश्रद्धो मत्कथासु निर्व्विण्णः सर्वकर्म्मसु।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढ़निश्चयः।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्निति॥'' अत्र तत इति तामवस्थामारभ्येत्यर्थः। भक्तिर्हि स्वतःप्रबलत्वादन्यनिरपेक्षा, न तु ज्ञानादिवत् सम्यग्वैराग्यादिसापेक्षा। कर्म्मनिर्वेदापेक्षा त्वनन्यतासिध्यर्थैवेति, तस्यामेवावस्थायां प्रवृत्तिर्युक्ता। किन्तु "आत्मारामाश्च मुनय" इत्यादेर्न तु तत्रैव तस्याः समाप्तिरिति भावः॥ १५॥

## अनुवाद

इसका विस्तार स्वयं भगवान् श्रीकृष्ण ने एकादश स्कन्द के ११/२०/२७-२८ में किया है— "जो व्यक्ति मेरी कथा में श्रद्धालु, समस्त कर्मों में निर्वेद प्राप्त, भोग-वासनाओं को दुःखात्मक जानकर भी उनको परित्याग करने में असमर्थ है; उस व्यक्ति को चाहिए कि वह इसी अवस्था से प्रीति के साथ श्रद्धालु एवं दृढ़ निश्चय होकर मेरा भजन करे। उन विषय भोगों का भोग करते हुए वह जानता है कि ये दुःखदायी हैं, तथा उनकी निन्दा भी करता है।"

यहाँ 'ततः' का अभिप्राय यह है कि इसी अवस्था से ही भक्ति का आरम्भ करे। भक्ति स्वतः प्रबला होने के कारण इसको दूसरे की अपेक्षा नहीं है। यह ज्ञानादि के तरह नहीं है, जो कि सम्यग् वैराग्य की अपेक्षा करते हैं। काम्य कर्म के प्रति जो निर्वेद की अपेक्षा है, वह भक्ति के प्रति अनन्यता सिद्धि के लिए है। इस प्रकार की प्रवृत्ति इस अवस्था में उचित है।

श्रीमद्भागवत १/७/१० में उक्त है—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥

"श्रीहरि इस प्रकार गुणसम्पन्न हैं कि आत्माराम मुनिगण एवं निवृत्त हृदयग्रन्थि मुनिगण भी उनकी अहैतुकी भक्ति करते रहते हैं।" इस आत्मारामादि श्लोक में वर्णित उच्च अवस्था के लोगों में कर्म निर्वेद की अपेक्षा नहीं है, क्योंकि उन लोगों में काम्य कर्म की इच्छा पहले ही समाप्त हो गयी है॥ १५॥

## भक्तिसार-प्रदर्शिनी

यदृच्छया प्रथमस्कन्धव्याख्यातयुक्त्या यादृच्छिकमहत्सङ्गेन मत्कथादौ जातश्रद्ध इत्यर्थः। अतएव (भा. ११/१९/२०) श्रद्धामृतकथायां मे इति (भा. ११/११/२३) श्रद्धालुर्मत्कथां शृण्वन्निति, तत्र तत्र भक्तियोगे कथाश्रद्धालुरेवाधिकारी दर्शितः। नातिसक्तो देहगेहकलत्रादिष्वत्यासक्तिरहितः, अतएव न निर्विण्ण इति तेषु निर्विण्णत्वे ज्ञानेऽधिकारः, अत्यासक्तत्वे कर्मण्यधिकारः। अत्यासक्तिराहित्ये भक्तावधिकार इत्यधिकारत्रयविवेकः। निर्वेदस्य कारणं निष्काम-कर्म हेतुकान्तःकरणशुद्धिरेव; अत्यासक्तेः कारणमनाद्यविद्यैव; अत्यासक्तिराहित्यस्य कारणं यादृच्छिकमहत्सङ्ग एवेति तत्र तत्र कारणं दृश्यम्। किञ्चैतदुत्कृष्टाधिकारिण एव लक्षणम्; किन्तु (भा. ११/२/२) को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्। न भजेत सर्वतोमृत्युरित्युक्तेर्यादृच्छिकभक्तसङ्गे सतीन्द्रियवानेव भक्तावधिकारी ज्ञेयः॥१५॥

## अनुवाद

यदृच्छया अर्थात् यादृच्छिक महत् सङ्ग के द्वारा मेरी कथादि में श्रद्धा उत्पन्न होती है। प्रथम स्कन्ध में भी यदृच्छया का इसी प्रकार व्याख्या है। अतएव श्रीमद्‌भागवत के (११/१९/२०) में उक्त है–

श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम॥

"जो मेरी भक्ति प्राप्त करना चाहता है, वह मेरी अमृतमयी कथा में श्रद्धा रखे, निरन्तर मेरे गुण लीला और नामों का संकीर्त्तन करे, मेरी पूजा में अत्यन्त निष्ठा रखे, और स्त्रोत्रों के द्वारा मेरी स्तुति करे।"

श्रीमद्‌भागवत के ११/११/२३ में उक्त है–

श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः।
गायन्ननुस्मरन् कर्मजन्मचाभिनयन्मुहुः॥

"मेरी कथाएँ समस्त लोकों को पवित्र करने वाली एवं कल्याण स्वरूपिणी हैं। श्रद्धा के साथ उन्हें सुनना चाहिये। बार-बार मेरे अवतार और लीलाओं का गान स्मरण और अभिनय करना चाहिये।"

भक्ति योग में हरि कथा के प्रति श्रद्धालु व्यक्ति ही अधिकारी होता है। नातिसक्त अर्थात् देह-गेह-कलत्रादि में अति आसक्ति रहित होना चाहिये। देह-गेह-कलत्रादि में अति निर्विण्ण होने से मुक्ति हेतुक ज्ञान में अधिकार होता है। अति आसक्ति से काम्य कर्म में अधिकार होता है। और देहगेहकलत्रादि में अति आसक्ति न होने पर भक्ति में अधिकार होता है। इस प्रकार ज्ञान कर्म और भक्ति में अधिकार त्रय का विवेक है।

निर्वेद तभी होता है जब निष्काम कर्म के द्वारा अन्तःकरण की शुद्धि होती है। अतिशय आसक्ति का कारण अनादि अविद्या ही है। अति आसक्ति न होने का कारण यदृच्छा से महत् सङ्ग ही है। इस प्रकार आसक्ति राहित्य का कारण जानना होगा। यह भक्ति में उत्कृष्ट अधिकारी का लक्षण है। किन्तु

श्रीमद्भागवत के ११/२/२ में लिखित है—

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्।
न भजेत् सर्वतो मृत्युरुपास्यममरोत्तमैः॥

"राजन्! मृत्यु सर्वत्र विराजमान है। इसलिए ऐसा कौन सा इन्द्रियवान् प्राणी है जो भगवान् मुकुन्द के चरण कमलों का भजन नहीं करेगा जो कि अमर और श्रेष्ठ पुरुषों के भी उपास्य हैं!" इस भागवतीय कथन से ज्ञात होता है कि यादृच्छिक भक्त का सङ्ग होने पर इन्द्रियवान् (इन्द्रियों के विषय-भोगों में आसक्त) मानव भी भगवद्भक्ति में अधिकारी होता है॥ १५॥

**उत्तमो मध्यमश्च स्यात्कनिष्ठश्चेति स त्रिधा॥ (१६)**

### अनुवाद

वैधी साधन भक्ति के अधिकारी व्यक्ति उत्तम, मध्यम और कनिष्ठ भेद से तीन प्रकार के होते हैं॥ १६॥

**तत्र उत्तमः—**

**शास्त्रे युक्तौ च निपुणः सर्व्वथा दृढ़निश्चयः।**
**प्रौढ़श्रद्धोऽधिकारी यः स भक्तावुत्तमो मतः॥ (१७)**

### अनुवाद

उत्तम अधिकारी—

जो व्यक्ति शास्त्र और युक्ति में निपुण एवं सर्वथा दृढ़ निश्चय होकर प्रौढ़ श्रद्धावान है; वह वैधी भक्ति का उत्तम अधिकारी है॥ १७॥

### दुर्गमसङ्गमनी

पूर्वं ''शास्त्रस्य शासनेनैव प्रवृत्ति''रित्युक्तत्वाच्छास्त्रार्थविश्वासएव आदिकारणं लब्धम्, अतः श्रद्धाशब्दस्तत्र प्रयुक्तः, तस्माच्छास्त्रार्थविश्वास एव श्रद्धेति लब्धे 'श्रद्धा'-तारतम्येन श्रद्धावतां तारतम्यमाह— शास्त्र इति द्वाभ्याम्। निपुणः प्रवीणः, सर्वथेति तत्त्वविचारेण साधनविचारेण पुरुषार्थविचारेण च दृढ़निश्चय इत्यर्थः। युक्तिश्चात्र शास्त्रानुगतैव ज्ञेया। युक्तिस्तु केवला नैवेति युक्तेः स्वातन्त्र्यनिषेधात्, "श्रुतेस्तु शब्दमूलत्वादिति'' न्यायात्। ''पूर्वापरानुरोधेन कोऽन्वर्थोऽभिमतो भवेत्। इत्याद्यूहनं तर्कः शुष्कतर्कन्तु वर्जयेदिति'' वैष्णवतन्त्राच्च। एवम्भूतो यः प्रौढ़श्रद्धः स एवोत्तमोऽधिकारीत्यर्थः॥ १७॥

### अनुवाद

पहले वैधी भक्ति के लक्षण में कहा गया है कि— "राग की अप्राप्ति होने के कारण शास्त्र के शासन से ही जिस भक्ति में प्रवृत्ति उत्पन्न होती है उसको वैधी भक्ति कहते हैं।" यहाँ पर शास्त्रार्थ में विश्वास ही भक्ति में प्रवृत्ति का आदि कारण प्राप्त होता है। अतः यहाँ पर श्रद्धा शब्द का प्रयोग किया गया है। इसलिए शास्त्रार्थ में विश्वास को ही श्रद्धा कहते हैं; इस प्रकार प्राप्त होने से श्रद्धा के तारतम्य से

श्रद्धावान् जन के अर्थात् भक्ति के अधिकारी का तारतम्य होता है। शास्त्र इत्यादि दो लक्षणों के द्वारा उसको कहते हैं।

निपुण, शब्द का अर्थ है– प्रवीण। उत्तम अधिकारी तत्त्व विचार में एवं साधन विचार में दृढ़ निश्चय वाला होता है। यहाँ युक्ति शब्द से शास्त्रानुगत युक्ति को जानना है। "केवला युक्ति स्वतन्त्र रूप से वस्तु प्रतिपादन करने में समर्थ नहीं है।" इस कथन से युक्ति की स्वतन्त्रता नहीं है। उत्तर मीमांसा का न्याय है– (ब्रह्मसूत्र) "श्रुति शब्द मूलक है।" शास्त्रीय विषय का शास्त्रीय युक्ति से ही प्रतिपादन करना आवश्यक है।

वैष्णव तन्त्र में कथित है– "पूर्वापर के अनुरोध से कौन सा अर्थ समीचीन है, इस प्रकार विचार करना ही तर्क अर्थात् नियम है। शास्त्रीय विषय में शुष्क तर्क का वर्जन करना चाहिऐ। इस प्रकार लक्षण युक्त जो प्रौढ़ श्रद्धावान् है वह व्यक्ति उत्तम अधिकारी होता है॥ १७॥

## अर्थरत्नाल्प-दीपिका

शास्त्र इति, शास्त्रोक्तार्थप्रतिपादनाय युक्तौ च निपुण उहापोहसमर्थः– सर्व्वथोपास्यविचारेण साधनविचारेण पुरुषार्थविचारेण च (भा. ५/१४/४४) 'यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान्, प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्। नैच्छन्नृपस्तदुचितं महतां मधुद्विट्,- सेवानुरक्तमनसामभवोऽपि फल्गुः, इत्यादि कैमुत्येन सुखाधिक्यमननात् प्रौढ़श्रद्धः॥ १७॥

## अनुवाद

'शास्त्रे युक्तौ च निपुणः' का अभिप्राय है कि शास्त्र में कथित वस्तु का तात्पर्य प्रतिपादन करने में एवं युक्ति में निपुण अर्थात् उहापोह समर्थ। 'सर्वथा दृढ़ निश्चयः' अर्थात् उपास्य विचार से, साधन विचार से एवं पुरुषार्थ विचार से दृढ़ निश्चय वाला होता है। श्रीमद्‌भागवत (५/१४/४४) के भरत चरित्र में उक्त है–

"नृपति भरत दुष्परिहार्य राज्य, धन, बन्धु, पुत्र, भार्या एवं सुरवाञ्छनीय एवं तदीय करुणार्थिनी लक्ष्मी को भी नहीं चाहते थे। कारण, मधुद्विट् सेवानुरागी महात्मावृन्द के पक्ष में मोक्ष सुख भी अति तुच्छ पदार्थ है।"

उपर्युक्त भरतजी के दृष्टान्त से जो व्यक्ति विषय सुखों से भगवद्भक्ति को अधिक सुखकर मानता है, वह प्रौढ़ श्रद्धावान् है॥ १७॥

## भक्तिसार-प्रदर्शिनी

पूर्वं शास्त्रस्य शासनेनैव प्रवृत्तिरित्युक्तत्वाच्छास्त्रार्थविश्वासएव आदिकारणं लब्धम्, अतः श्रद्धाशब्दस्तत्र प्रयुक्तः, तस्माच्छास्त्रार्थविश्वास एव श्रद्धेति लब्धे 'श्रद्धा'-तारतम्येन श्रद्धावतां तारतम्यमाह– शास्त्र इति द्वाभ्याम्। सर्वथेति तत्त्वविचारेण साधनविचारेण पुरुषार्थविचारेण च दृढ़निश्चय इत्यर्थः। युक्तिश्चात्र शास्त्रानुगतैव ज्ञेया। (भ.र.सि. १/१/४५) युक्तिस्तु केवला नैवेति युक्तेः स्वातन्त्र्यनिषेधात्। एवम्भूतो यः प्रौढ़श्रद्धः स एवोत्तमोऽधिकारीत्यर्थः॥ १७॥

### अनुवाद

पहले वैधी भक्ति के लक्षण में कहा गया है कि– "राग की अप्राप्ति होने के कारण शास्त्र के शासन से ही जिस भक्ति में प्रवृत्ति उत्पन्न होती है उसको वैधी भक्ति कहते हैं।" यहाँ पर शास्त्रार्थ में विश्वास ही भक्ति में प्रवृत्ति का आदि कारण प्राप्त होता है। अतः यहाँ पर श्रद्धा शब्द का प्रयोग किया गया है। इसलिए शास्त्रार्थ में विश्वास को ही श्रद्धा कहते हैं; इस प्रकार प्राप्त होने से श्रद्धा के तारतम्य से श्रद्धावान् जन के अर्थात् भक्ति के अधिकारी का तारतम्य होता है। शास्त्र इत्यादि दो लक्षणों के द्वारा उसको कहते हैं।

'सर्वथा दृढ़ निश्चयः' अर्थात् उपास्य विचार से, साधन विचार से एवं पुरुषार्थ विचार से दृढ़ निश्चय वाला होता है।

भक्ति में शास्त्रानुगत युक्ति ही ग्रहणीय है। कारण केवला युक्ति स्वतन्त्र होने के कारण निषिद्ध है। (भ.र.सि. १/१/४५) में उक्त है–

स्वल्पापि रुचिरेव स्याद् भक्तितत्त्वावबोधिका।
युक्तिस्तु केवला नैव यदस्या अप्रतिष्ठता॥

"थोड़ी सी रुचि ही भक्ति तत्व का बोध कराने वाली होती है। केवला युक्ति से बोध नहीं होता है, क्योंकि वह अप्रतिष्ठिता है।"

इस प्रकार जो प्रौढ़ श्रद्धावान् होता है वही उत्तम अधिकारी होता है॥ १७॥

**तत्र मध्यमः—**

**यः शास्त्रादिष्वनिपुणः श्रद्धावान् स तु मध्यमः॥ (१८)**

### अनुवाद

मध्यम अधिकारी—

जो शास्त्र युक्ति में अनिपुण किन्तु श्रद्धालु होता है; वह मध्यम अधिकारी होता है॥ १८॥

### दुर्गमसङ्गमनी

अनिपुण इति निपुणसदृशः, बलवद्बाधे दत्ते सति समाधातुमसमर्थ इत्यर्थः। तथाऽपि श्रद्धावान् मनसि दृढ़निश्चय एवेत्यर्थः॥१८॥

### अनुवाद

अनिपुण अर्थात् निपुण व्यक्ति के सदृश है, अर्थात् बलपूर्वक बाधा उपस्थित होने पर समाधान करने में असमर्थ है। तथापि श्रद्धावान् है अर्थात् मन में भक्ति के प्रति दृढ़ निश्चय वाला है॥ १८॥

### अर्थरत्नाल्प-दीपिका

य इति— श्रद्धावान् अस्य सेवने॥ १८॥

### अनुवाद

यहाँ श्रद्धावान का अर्थ है— भगवान् की सेवा में श्रद्धावान्॥ १८॥

## भक्तिसार-प्रदर्शिनी

अनिपुणो बलवद्बाधे दत्ते सति समाधातुमसमर्थ:; तथापि श्रद्धावान् गुरुपदिष्टभगवत्तत्वादौ मनसि दृढ़निश्चय एवेत्यर्थ:॥ १८॥

## अनुवाद

अनिपुण का अभिप्राय है– भक्ति मार्ग के प्रति बलवद् बाधा उपस्थित होने पर उसका समाधान करने में जो असमर्थ है। तथापि श्रद्धावान् है, अर्थात् श्रीगुरुदेव के द्वारा दिये गये भगवत्तत्त्वादि में मन में दृढ़ निश्चय वाला है। वह भक्ति मार्ग में मध्यम अधिकारी है॥ १८॥

**तत्र कनिष्ठः—**

**यो भवेत्कोमलश्रद्धः स कनिष्ठो निगद्यते॥ (१९)**

## अनुवाद

कनिष्ठ अधिकारी—

जो कोमल श्रद्धाशील है; वह कनिष्ठ अधिकारी है॥ १८॥

## दुर्गमसङ्गमनी

यो भवेदित्यत्रापि शास्त्रादिष्वनिपुण इत्यनुवर्त्तनीयं, श्रद्धामात्रस्य शास्त्रार्थविश्वासरूपत्वात्। ततश्चात्रानिपुण इति यत्किञ्चिन्निपुण इत्यर्थ:। कोमलश्रद्धः शास्त्रयुक्त्यन्तरेण भेत्तुं शक्य:॥ १९॥

## अनुवाद

भक्तिमार्ग में श्रद्धामात्र का शास्त्रार्थ विश्वासरूप होने के कारण कनिष्ठ श्रद्धालु के लक्षण में भी 'शास्त्र आदि में अनिपुण है', इतना जोड़ना आवश्यक है। अतएव यहाँ पर शास्त्रादि में अनिपुण कहने पर थोड़ा निपुण है इस प्रकार जानना होगा। कोमलश्रद्धा शब्द का अर्थ है– अपर शास्त्र युक्ति के द्वारा भक्त की मति को भेदा जा सकता है॥ १९॥

## अर्थरत्नाल्प-दीपिका

कोमलश्रद्धो भक्तिमार्गविश्वासान्मार्गान्तरविश्वासे प्रवेष्टुं शक्य:; अनिर्वचनीयस्य भाग्यस्य तारतम्याच्छ्रद्धावतां तारतम्यमिति भाव:॥ १९॥

## अनुवाद

कोमलश्रद्ध का अभिप्राय यह है कि व्यक्ति का भक्ति मार्ग में जो विश्वास है उससे हटाकर दूसरे अन्य मार्ग में विश्वास कराया जा सकता है।

भाव यह है कि अनिर्वचनीय भगवद्कृपा एवं भगवद्भक्त की कृपा के तारतम्य से श्रद्धावान् जन में तारतम्य होता है॥ १९॥

## भक्तिसार-प्रदर्शिनी

कोमलश्रद्धः शास्त्रयुक्त्यन्तरेण भेत्तुं शक्यो, न तु सर्वथा भिन्नः, तथात्वे भक्तत्वानुपपत्तेः।

बहिर्मुखकृतबलवद्बाधे सति क्षणमात्रं चित्तस्य दोलायमानत्वमेव कोमलत्वम्; पश्चात् स्वकृत विवेकेन गुरूपदिष्टार्थमेव निश्चिनोति ॥ १९ ॥

### अनुवाद

कोमलश्रद्ध वह है जिसकी मति भिन्न शास्त्र एवं युक्ति के द्वारा भेदन की जा सकती है; किन्तु सर्वथा भेदन नहीं की जा सकती है। क्योंकि सर्वथा भेदन होने पर उसकी तो भक्त संज्ञा ही नहीं होगी।

बहिर्मुख जन के द्वारा भक्ति मार्ग में बलवद् बाधा उपस्थित होने पर कुछ समय के लिए चित्त का दोलायमान होना ही कोमलता है। अनन्तर निजकृत विवेक के द्वारा, अथवा श्री गुरुदेव के उपदेश के द्वारा वह चित्त में निश्चय प्राप्त करता है ॥ १९ ॥

**तत्र गीतादिषूक्तानां चतुर्णामधिकारिणाम्।**
**मध्ये यस्मिन् भगवतः कृपा स्यात्तत्प्रियस्य वा ॥ (२०)**
**स क्षीणतत्तद्भावः स्याच्छुद्धभक्त्यधिकारवान्।**
**यथेभः शौनकादिश्च ध्रुवः स च चतुःसनः ॥ (२१)**

### अनुवाद

गीता प्रभृति शास्त्र में कथित "आर्त्त जिज्ञासु अर्थार्थी एवं ज्ञानी" चार प्रकार के अधिकारियों के मध्य में जिसके ऊपर भगवान् अथवा भगवद् भक्त की कृपा होती है उसका अपना आर्त्तत्वादि भाव नष्ट हो जाता है; और वह शुद्ध भक्ति का अधिकारी होता है। जिस प्रकार गजेन्द्र, शौनकादि मुनिगण, ध्रुव एवं चतुःसन शुद्ध भक्ति के अधिकारी हुये थे ॥ २०, २१ ॥

### दुर्गमसङ्गमनी

श्रीभगवद्गीतादिषु ये चतुर्विधा अधिकारिण उक्तास्तेऽपि शुद्धभक्तितः पूर्वावस्था एवेत्याह— तत्रेति। तत्र च यस्मिन्निति स इति च सामान्येनोक्तिः, यस्मिन् यस्मिन् स स इत्यर्थः। शौनकादिर्गणः चतुःसनः सनकादिः। श्रीगीतावाक्यञ्चेदम्— (७/१६/२०)—

"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन!।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।" इत्यादि।

तत्र ज्ञानी आत्मविदिति टीकाकाराः। तत्रोत्तमत्वस्य कारणञ्च व्याख्यातवन्तः, ज्ञानिनो

देहाद्यभिमानाभावेन चित्तविक्षेपाभावान्नित्ययुक्तत्वमेकान्तभक्तित्वञ्च सम्भवति, नान्यस्येति। अत्र चेदं प्रतिपद्यते— तादृशत्वं तस्य तत्त्वम्पदार्थज्ञानेऽपि सम्भवतीत्यास्तां तज्ज्ञानी।
तत्त्वम्पदार्थज्ञानानन्तरभाव्यैकज्ञानिगुरूणामपि श्रीभगवत्प्रसादाच्छुद्धभक्तिप्रवेशो दृश्यते, यथा तृतीये (भा. ३/१५/४३)— "तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः। अन्तर्गतः स्वविवरेण चकार तेषांसंक्षोभमक्षरजुषामपि चित्ततन्वोरिति"। तदेतदभिप्रेत्याह— स च चतुःसन इति, तदेवं शुद्धभक्तेरुत्कर्षव्यञ्जनार्थमेवैष उदाहृतः; न तु वैध्यंशेऽपि रागप्राप्तत्वात्, तच्चानुभवज्ञानित्वाद्, अतएव शास्त्रशासनातीतत्वाच्च। वैध्युदाहरणन्तु तादृशशाब्दज्ञानिषु ज्ञेयं। तथारम्भत एव शुद्धभक्त्युत्थाने पञ्चममप्युदाहरणं द्रष्टव्यं— यथा पूर्वजन्मनि श्रीनारद एव। श्रीगीतादिष्वपि राजविद्याराजगुह्याध्यायादावीदृश एवाधिकारी दर्शितः। तदेतद्गीतोदाहरणञ्च तन्मतानुसारेणापि शुद्धभजने पर्य्यवस्यतीति ग्रन्थकृद्भिरपि दर्शितम्। श्रीवैष्णवानां मते तु सुतरामेवेति तन्त्रोट्टङ्कितं, वस्तुतस्तु तत्र हि ज्ञानिशब्देन भगवज्ज्ञान्येवोच्यते। पूर्वं हि (गी. ७/२)— "ज्ञानं तेऽहं सविज्ञानमिदं वक्षाम्यशेषत" इत्युक्त्वा तस्य च ज्ञानस्य (गी ७/३) मनुष्याणां सहस्रेष्वित्यादिना आत्मज्ञानसिद्धेरपि दुर्ल्लभत्वमुक्त्वा स्वस्य च (गी. ७/४) "भूमिराप" इत्यादिना प्रधानाख्य-जीवाख्य-शक्तिद्वयकारणके स्वस्मिन् परमकारणत्वमुक्त्वा तत एव सर्वश्रेष्ठत्वं सर्वाश्रयत्वञ्चोक्तं, सर्वाश्रयत्वेऽपि (गी. ७/९)"पुण्यो गन्ध" इत्यादौ पुण्यादिशब्दानां यथायोगं सर्वत्र योजनया प्राप्ता दोषास्पृष्टा ये सर्वे गुणास्तेषामतितुच्छानामपि स्वाभेदनिर्देशेन स्वगुणच्छविमयत्वं दर्शयित्वा साक्षात् स्वगुणानान्तु कैमुत्यमेवानीतमानन्त्यञ्च। तत्र च (गी. ७/१२) "ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयी"त्यनेन मायागुणास्पृष्टगुणत्वं दर्शितं। तदेवं भेदेऽपि लब्धे यदुत्तरत्र (गी. ७/१९) बहूनां जन्मनामित्यादौ "वासुदेवः सर्वमिति" "ज्ञानवान्मांप्रपद्यते" इत्यत्र प्रतिपाद्ये यदभेद इव श्रूयते, तत् खलु सूर्य्यतद्रश्म्यादिवद्वासुदेवात् सर्वं न भिन्नं सर्वस्मात्तू वासुदेवो भिन्न इत्येव सङ्गच्छते। यथोक्तम् श्रीभागवते (भा. २/७/५०)— ब्रह्मणा— "सोऽयं तेऽभिहितस्तात! भगवान् भूतभावनः। समासेन हरेर्नान्यदन्यस्मात् सदसच्च यदिति॥" तत्रैव श्रीभगवता (गी. ७/१२) प्रोक्तं— "ये चैव सात्त्विका भावा" इत्यादि। श्रीमदर्जुनेन तु (गी. ११/४०) "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्येव वक्ष्यते। यस्मादेव चैवम्भूतज्ञानवान् यः स मां प्रपद्यत इति प्रपत्तिरेव प्रोक्ता, यतो वासुदेवः सर्वमिति मायागुणातीतबाह्याभ्यन्तरानन्तमहागुणगणालङ्कृतः सोऽहमिति स्वज्ञानमेव निर्दिशन् स्वस्य भजनमेव निश्चिकाय। अथ चतुर्विधा इत्यादि पद्यानां चायमेवार्थः— आर्त्तो दुःखहानेच्छुः। अर्थार्थी सुखप्राप्तीच्छुः, स च स च द्विविधः परिच्छिन्नापरिच्छिन्नत्वदृष्टिभेदेन, अपरिच्छिन्नदृष्टिश्चेत् तत्तदर्थं कश्चित्तत्त्वजिज्ञासुरपि भवति। व्यतिक्रमेणोक्तिरार्त्तिहानेच्छाऽनन्तरमेव च जिज्ञासा जायत इति। ज्ञानी पूर्वोक्तप्रकारकशाब्दज्ञानवान्। स च त्रिविधः, तादृशैश्वर्य्यमाधुर्य्यतत्तन्मिश्रत्वज्ञानभेदेन। सुकृतं भक्तिवासनाहेतुमहत्सङ्गादिमयं विद्यते येषां ते। तत्राद्येषु त्रिषु सुकृतस्य सन्देह इति यदि सुकृतिनस्ते तदा भजन्त इत्यर्थः। चतुर्थे तु निश्चयः, यतोऽसौ सुकृतित्वाज्जातज्ञानस्ततो भजत एवेत्यर्थः, तेषां मध्ये स एव पूर्वोक्तमज्ज्ञान्येवान्याभिलाषिताया मतान्तरप्रसिद्धतत्त्वम्पदार्थैक्यभावनारूपज्ञानस्य

स्मृतिप्रसिद्धवर्णाश्रमधर्मस्य चोपेक्षया केवलं मां भजन्नुत्तमभक्तत्वान्ममात्यन्तप्रियस्तस्य चाहमत्यन्तप्रिय इति सहेतुकमाह— तेषामित्यादिद्वयेन। नन्वार्त्तादित्रयस्यान्ते का निष्ठा स्यात्तत्राह— 'बहूनामिति'। 'सुकृतिन' इत्यत्र ज्ञापितं सुकृतविशेषं विना त्वन्ये संसरन्तीत्याह— कामैरित्यादि। तस्माच्चतुर्विधत्वमेव भक्तानामिति भगवत्प्रतिज्ञैव निर्णेया॥ २०, २१॥

## अनुवाद

श्रीमद्भगवद्गीता में जिन चार प्रकार के अधिकारियों की बात कही गयी है, वे सब भी शुद्ध भक्ति की पूर्वावस्था के हैं। कारिका में 'यस्मिन्' के प्रयोग से जानना चाहिए कि जो जो कृपा प्राप्त करेगा या जिसमें जिसमें भगवान् की कृपा होगी वह वह व्यक्ति शुद्ध भक्ति का अधिकारी होगा।

शौनकादि का अर्थ नैमिषारण्य के ऋषिगण व चतु:सन का अर्थ सनकादि चार कुमार है।

श्रीगीतावाक्य (७/१६-२०) इस प्रकार हैं—

चतुर्विधा भजन्ते मां जना: सुकृतिनोऽर्जुन!।<br>
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!॥<br>
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।<br>
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय:॥<br>
उदारा: सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।<br>
आस्थित: स हि युक्तात्मा मामेवानुत्तमां गतिम्॥<br>
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।<br>
वासुदेव: सर्वमिति स महात्मा सुदुर्लभ:॥<br>
कामैस्तैस्तैर्हतज्ञाना: प्रपद्यन्तेऽन्यदेवता:।<br>
तं तं नियममास्थाय प्रकृत्या नियता स्वया॥

"हे अर्जुन! आर्त्त, जिज्ञासु, अर्थार्थी और ज्ञानी; ये चार प्रकार के सुकृतिशील जन मेरा भजन करते हैं।

उनमें से नित्य मुझमें एकाग्रभाव से स्थित और अनन्य प्रेम भक्ति वाला ज्ञानी भक्त अति उत्तम है, क्योंकि उस ज्ञानी को मैं अत्यन्त प्रिय हूँ, और वह ज्ञानी भी मुझे अत्यन्त प्रिय है।

ये सभी उदार हैं, परन्तु ज्ञानी तो साक्षात् मेरा स्वरूप ही है— ऐसा मेरा मत है। क्योंकि वह मद्गत मन बुद्धिवाला ज्ञानी भक्त अति उत्तम गति स्वरूप मुझमें ही अच्छी प्रकार स्थित है।

बहुत जन्मों के अन्त के जन्म में तत्त्व ज्ञान को प्राप्त पुरुष 'सब कुछ वासुदेव ही है', इस प्रकार जानकर मुझको भजता है, वह महात्मा अत्यन्त दुर्लभ है।

उन उन आर्त्ति नाश आदि कामनाओं के द्वारा जिनका ज्ञान हरा जा चुका है, वे लोक अपने स्वभाव से प्रेरित होकर उन उन नियम को धारण करके अन्य देवताओं को भजते हैं, अर्थात् पूजते हैं।"

टीकाकार स्वामीपाद ने कहा है— उन सबों के मध्य में ज्ञानी आत्मतत्त्व ज्ञान वाला है। वह उत्तम है। उत्तम होने का कारण भी कहते हैं— ज्ञानी को देहाभिमान नहीं रहता है; अतएव चित्तविक्षेप न रहने से

नित्य युक्त होता है, इससे एकान्त भक्ति होना सम्भव होता है। अपर आर्त्त, जिज्ञासु, अर्थार्थी के लिए यह सम्भव नहीं है।

यहाँ पर इस प्रकार जानना होगा— तत्त्वं पदार्थ ज्ञान में देहाभिमान नष्ट होकर एकाग्रचित्त होना सम्भव है। तत् त्वं पदार्थ ज्ञान के अनन्तर एकता सम्पन्न होने वाले गुरुजनों का भी श्रीभगवत् प्रसाद से शुद्ध भक्ति में प्रवेश देखने में आता है। जैसाकि श्रीमद्भागवत के ३/१५/४३ में उक्त है—

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां सङ्क्षोभमक्षरजुषामपिचित्ततन्वोरिति॥

"सनकादि मुनिगण निरन्तर ब्रह्मानन्द में निमग्न रहा करते थे; किन्तु जिस समय भगवान् कमलनयन के चरणारविन्द मकरन्द से मिली हुई तुलसी मञ्जरी के गन्ध से सुवासित वायु ने नासिका रन्ध्रों के द्वारा उनके अन्तःकरण में प्रवेश किया, उस समय वे अपने शरीर को सम्भाल न सके, और उस दिव्य गन्ध ने उनके मन में भली-भाँति क्षोभ पैदा कर दिया।" इस विवरण को देखते हुये ही कारिका में कहा गया है कि चतुःसन भी भगवत् कृपा से शुद्ध भक्ति के अधिकारी हो गये।

भक्ति के उत्कर्ष को सूचित करने के लिए यह उदाहरण दिया गया है। वैधी भक्ति के उदाहरण में नहीं। यह तो अच्छा लगा है, उनकी राग प्राप्त होने के कारण भक्ति हुई है। ज्ञानी होने के कारण परतत्त्व का अनुभव उन सबमें रहा है। अतएव शास्त्र शासन के अतीत वे सब रहे हैं। वैधी उदाहरण तादृश शास्त्र ज्ञानियों में जानना होगा।

वैसे ही, आरम्भ से ही शुद्ध भक्ति प्राप्ति का पञ्चम उदाहरण श्रीनारद के पूर्व जन्म में है। श्रीगीतादि के नवम अध्याय राजविद्याराजगुह्याध्याय में भी इस प्रकार अधिकारी का वर्णन है। गीता का उदाहरण श्रीधर स्वामी के मत में शुद्ध भजन में पर्यवसित होता है; ग्रन्थकार ने भी इसी को दिखाया है।

श्री वैष्णवों का मत भी इसी प्रकार है, इसलिए उसका उत्थापन नहीं किया गया है। वस्तुतः गीता में ज्ञानी शब्द से भगवद् ज्ञानी को ही कहा गया है।

पहले ही गीता के (७/२) में कहा गया है—

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते।"

"मैं तुम्हारे लिए विज्ञान सहित इस तत्त्व ज्ञान को सम्पूर्ण रूप से कहुँगा; जिनको जानने के बाद संसार में फिर और कुछ भी जानने योग्य शेष नहीं रह जाता है।"

इसको कहने के बाद इस ज्ञान की दुर्लभता को गीता ७/३ में इस प्रकार कहा गया है—

"मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥"

"हजारों मनुष्यों में कोई एक मेरी प्राप्ति के लिए यत्न करता है। और उन यत्न करने वाले सिद्धों में भी कोई एक मुझको तत्त्व से अर्थात् यथार्थ रूप से जानता है।"

इस वचन से आत्मज्ञान सम्पन्न से भी सुदुर्लभत्व कहकर अपना परिचय देते हुए इस प्रकार

कहते हैं (गी. ७/४,५)—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥"

"पृथिवी, जल, अग्नि, वायु, आकाश, मन, बुद्धि और अहंकार— इस प्रकार यह आठ प्रकार से विभाजित मेरी प्रकृति है।

किन्तु, यह आठ प्रकार के भेदों वाली प्रकृति तो अपरा अर्थात् मेरी जड़ प्रकृति है। हे महाबाहो! इससे भिन्न मेरी जीव रूपा परा अर्थात् चेतन प्रकृति को जानो। जिससे यह सम्पूर्ण जगत् धारण किया जाता है।"

इनके द्वारा प्रधान व जीव शक्ति युगल के कारण रूप अपने को परम कारण कहकर, उससे स्वयं को सर्वश्रेष्ठ एवं सभी का आश्रय कहा है।

उनके सर्वाश्रय होने पर भी गीता के (७/९) में कहा गया है—

"पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥"

"मैं पृथिवी में पवित्र गन्ध हूँ, अग्नि में तेज हूँ, सम्पूर्ण भूतों में उनका जीवन हूँ और तपस्वियों में तप हूँ।"

यहाँ पर पुण्यादि शब्दों के योग से प्राप्त दोषों से अछूता जो सब गुण हैं, उन सब अति तुच्छ गुणों का अपने साथ अभेद दिखाकर, अपने गुणों की ये सब छवि हैं यह दिखाकर साक्षात् अपने गुणों को कैमुत्य न्याय से दिखाया जो कि अनन्त हैं।

गीता के ७/१२ में उन्होंने कहा है—

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥"

"और भी, जो सत्त्वगुण से उत्पन्न होने वाले भाव हैं, और जो रजोगुण से तथा तमोगुण से होने वाले भाव हैं, उन सबको तू मुझसे ही होने वाले हैं, ऐसा जानो। परन्तु वास्तव में मैं उनमें नहीं हूँ और वे मुझमें नहीं हैं।"

इस वचन के द्वारा अपने को माया के गुणों से अछूता गुण वाला दिखाया है। इस प्रकार भेद प्राप्त होने पर भी आगे कहते हैं (गी. ७/१९)—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥"

"बहुत जन्मों के बाद अन्त के जन्म में तत्त्व ज्ञान को प्राप्त पुरुष 'सब कुछ वासुदेव ही हैं', इस प्रकार जानकर मुझको भजता है। वह महात्मा अत्यन्त दुर्लभ है।"

यहाँ पर जो अभेद के तरह जान पड़ता है, उसको सूर्य और उनकी रश्मि के तरह जानना होगा। अर्थात् वासुदेव से सब कुछ भिन्न नहीं है, किन्तु सबसे वासुदेव भिन्न हैं। यहाँ पर यह सङ्गति हुयी। श्रीभागवत के २/७/५० में ब्रह्मा ने नारद को इसी प्रकार कहा है—

"सोऽयं तेऽभिहितस्तात भगवान् भूतभावनः।
समासेन हरेर्नान्यदन्यस्मात् सदसच्च यत्॥"

"बेटा नारद! सङ्कल्प से विश्व की रचना करने वाले षडैश्वर्य सम्पन्न श्रीहरि का मैंने तुम्हारे सामने संक्षेप में वर्णन किया। जो कुछ कार्य कारण अथवा भाव-अभाव है, वह सब भगवान् से भिन्न नहीं है। फिर भी भगवान्जी इससे पृथक् हैं ही।"

श्रीभगवान् ने गीता के ७/१२ में कहा है—

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि॥"

"और भी, जो सत्त्व गुण से उत्पन्न होने वाले भाव हैं, और जो रजोगुण से तथा तमोगुण से होने वाले भाव हैं, उन सबको तू मुझसे ही होने वाले हैं, ऐसा जानो। परन्तु वास्तव में उनमें मैं नहीं हूँ, और वे मुझमें नहीं हैं।"

श्रीमदर्जुन ने भी गीता ११/४० में कहा है—

"नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्य्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः॥"

"हे अनन्त सामर्थ्य वाले! आपके लिए आगे से और पीछे से भी नमस्कार। हे सर्वात्मन्! आपके लिए सब ओर से ही नमस्कार हो। क्योंकि अनन्त पराक्रमशाली आप समस्त संसार को व्याप्त किये हुए हैं, इससे आप ही सर्वरूप हैं।"

इसलिए जो मुझको इस प्रकार जानता है, वह मेरी शरण में आता है। इसलिए यहाँ पर प्रपत्ति का ही कथन हुआ है। कारण, वासुदेव सब कुछ हैं। मैं माया के गुणों से अतीत, बाहर व अन्दर अनन्त महागुणों से अलङ्कृत हूँ, इस प्रकार अपना स्वरूप कहकर अपने भजन को ही निश्चय कर दिया है।

अतएव चार प्रकार के व्यक्ति मुझको भजन करते हैं; इस पद्य का अर्थ इस प्रकार है— आर्त्त दुःख नाश की इच्छा करने वाले को कहते हैं। अर्थार्थी सुख पाने की इच्छा करने वाले को कहते हैं। ये सब परिच्छिन्न दृष्टि वाला और अपरिच्छिन्न दृष्टि वाला भेद से दो प्रकार के होते हैं। अपरिच्छिन्न दृष्टि यदि होती है, तो वह उन सबके लिए तत्त्व जिज्ञासु भी होता है।

व्यतिक्रम अर्थात् आर्त्त के बाद अर्थार्थी न कहकर जिज्ञासु कहा गया है, इस प्रकार से कहने का तात्पर्य यह है कि दुःख मिटने की इच्छा के बाद जिज्ञासा होती है।

ज्ञानी का अर्थ है— पूर्वोक्त कथन के अनुसार शास्त्रीय ज्ञानवान्। यह तीन प्रकार के होते हैं। एक भगवान् के ऐश्वर्य विषयक ज्ञानवान्, द्वितीय माधुर्य विषयक ज्ञानवान्, तृतीय ऐश्वर्य माधुर्य मिश्रित ज्ञानवान्।

सुकृत शब्द का अर्थ है— भक्ति वासना का कारण महत्सङ्गादि हुआ है जिसका वह। प्रथम तीन आर्त्त, जिज्ञासु और अर्थार्थी में सुकृति का सन्देह है; कारण इन तीनों में महत् सङ्ग होना सन्देह की बात है। यदि महत् सङ्ग हो तब वे भगवान् का भजन करेंगे। चतुर्थ जो ज्ञानी है, उनमें निश्चय है; कारण उनमें सुकृति से ही ज्ञान हुआ है, अत: वे अवश्य भगवान् का भजन करेंगे। उन सबों के मध्य में जो मेरे ज्ञान को प्राप्तकर अन्याभिलाषितारूप मतान्तर प्रसिद्ध तत् त्वं पदार्थ ऐक्य भावना रूप ज्ञान को छोड़ा है, स्मृति प्रसिद्ध वर्णाश्रम धर्म की भी उपेक्षा की है, केवल मेरा भजन करता है; इस प्रकार उत्तम भक्त वह मेरा अत्यन्त प्रिय है, मैं भी उसका अत्यन्त प्रिय हूँ। इस विषय का कथन कारण सहित गीता के ७/१७-१८ में इस प्रकार हुआ है—

"तेषां ज्ञानी नित्य युक्त एक भक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोरत्यर्थमहं स च मम प्रिय:॥
उदारा: सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थित: स हि युक्तात्मा मामेवानुत्तमां गतिम्॥"

"उनमें से नित्य मुझमें एकाग्रभाव से स्थित और अनन्य प्रेम भक्ति वाला ज्ञानी भक्त अति उत्तम है, क्योंकि उस ज्ञानी को मैं अत्यन्त प्रिय हूँ, और वह ज्ञानी भी मुझे अत्यन्त प्रिय है।

ये सभी उदार हैं, परन्तु ज्ञानी तो साक्षात् मेरा स्वरूप ही है; ऐसा मेरा मत है। क्योंकि वह मद्गत मन बुद्धिवाला ज्ञानी भक्त अति उत्तम गति स्वरूप मुझमें ही अच्छी प्रकार स्थित है।"

आर्त्त, जिज्ञासु और अर्थार्थी इन तीनों की अन्त में क्या निष्ठा होगी? इसके लिए कहते हैं (गी. ७/१९)—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेव: सर्वमिति स महात्मा सुदुर्लभ:॥"

"बहुत जन्मों के अन्त के जन्म में तत्त्व ज्ञान को प्राप्त पुरुष 'सब कुछ वासुदेव ही है', इस प्रकार जानकर मुझको भजता है, वह महात्मा अत्यन्त दुर्लभ है।"

सुकृतिन: इससे यह सूचित हुआ है कि सुकृत विशेष अर्थात् महत् कृपा के बिना पुन: पुन: जन्म मृत्यु रूप संसार प्राप्त होता है। इसलिये गीता ७/२०-२३ में कहा गया है—

"कामैस्तैस्तैर्हृतज्ञाना: प्रपद्यन्तेऽन्यदेवता:।
तं तं नियममास्थाय प्रकृत्या नियता: स्वया॥
यो यो यां यां तनुं भक्त: श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च तत: कामान् मयैव विहितान् हि तान्॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि॥"

"उन उन आर्त्ति नाश आदि कामनाओं के द्वारा जिनका ज्ञान हरा जा चुका है, वे लोक अपने स्वभाव से प्रेरित होकर उन उन नियम को धारण करके अन्य देवताओं को भजते हैं, अर्थात् पूजते हैं।

जो जो सकाम भक्त जिस जिस देवता के स्वरूप को श्रद्धा से पूजना चाहता है, उस उस भक्त की श्रद्धा को मैं उसी देवता के प्रति स्थिर करता हूँ।

वह पुरुष उस श्रद्धा से युक्त होकर उस देवता का पूजन करता है। और उस देवता से मेरे द्वारा ही विधान किये हुए उन इच्छित भोगों को निःसन्देह प्राप्त करता है।

परन्तु उन अल्प बुद्धि वालों का वह फल नाशवान है। तथा वे देवताओं को पूजने वाले, देवताओं को प्राप्त होते हैं। और मेरे भक्त अन्त में मुझको ही प्राप्त होते हैं।"

इसलिए आर्त्त, जिज्ञासु, अर्थार्थी और ज्ञानी इन चतुर्विध भक्तों के सम्बन्ध में भगवान् के कथन से ही निर्णय करना होगा॥ २०, २१ ॥

## अर्थरत्नाल्प-दीपिका

'आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च' इति चतुर्णां तत्तद्भावः आर्त्तत्वादिः क्षीणतत्तद्भावः सन् शुद्धभक्त्यधिकारवान् शुद्धसेवाश्रद्धावान् स्यात्; क्षीणतत्तद्भाव इत्यत्र तत्तदिति वीप्सा यस्मिन्नित्यत्र यस्मिन् यस्मिन् स स इत्यर्थः बोधयति, शरैरेकैक शस्त्रिभिरितिवत् ॥ २०,२१ ॥

## अनुवाद

आर्त्त, जिज्ञासु, अर्थार्थी और ज्ञानी इन चारों का आर्त्तत्वादि भाव क्षीण होकर शुद्ध भक्ति में अधिकार होता है, अर्थात् वे शुद्ध सेवा में श्रद्धावान् होते हैं।

क्षीणतत्तद्भावः यहाँ पर तत्तत् वीप्सा है, अतः यस्मिन शब्द से 'जिसमें जिसमें भगवत्कृपा होती है वह वह' ऐसा अर्थ होगा। कहने का अभिप्राय यह है कि जिसमें जिसमें जो जो भाव है, उस उस भाव के क्षीण होने पर वह वह व्यक्ति शुद्ध भक्ति का अधिकारी होता है। शस्त्रधारी जिस प्रकार एक एक शर के द्वारा एक एक को विद्ध करता है, उसी प्रकार यहाँ पर भी जानना होगा॥ २०-२१ ॥

## भक्तिसार-प्रदर्शिनी

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥' इति श्रीभगवद्गीतादिषु (७/१६) ये चतुर्विधा अधिकारिण उक्तास्तेऽपि शुद्धभक्तितः पूर्वावस्था एवेत्याह— तत्रेति इभो गजेन्द्रो भगवतो माधुर्यं प्राप्य लुब्धः सन्नार्त्तिनाशेच्छां विहाय पश्चाच्छुद्धभक्तो बभूव। एवं शौनकादिमुनिगणः सूतसंगात् स्वर्गेच्छादिकं विहाय शुद्धो भक्तोऽभूत्। ध्रुवोऽपि भगवत्कृपया राज्येच्छां विहाय। एवं चतुःसनः सनकादिरपि भगवत्कृपया मोक्षेच्छां विहाय॥ २०-२१ ॥

## अनुवाद

"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥"

"हे भरतवंशियों में श्रेष्ठ अर्जुन! उत्तम कार्य करने वाले आर्त्त, जिज्ञासु, अर्थार्थी और ज्ञानी ये चार प्रकार के भक्तजन मुझको भजते हैं।"

इस प्रकार श्री भगवद्गीता ७/१६ में जिन चार प्रकार के अधिकारियों की बात कही गयी है वे सब शुद्ध भक्ति की पूर्वावस्था के ही हैं। इभ अर्थात् गजेन्द्र, भगवत् माधुर्य को प्राप्त कर लुब्ध होने से आर्त्ति नाश की इच्छा से विरत होकर पीछे शुद्ध भक्त हुआ था। इसी प्रकार शौनकादि मुनिगण सूत के सङ्ग से स्वर्ग जाने की इच्छा को छोड़कर शुद्ध भक्त हुए थे। ध्रुव भी भगवत् कृपा से राज्य प्राप्त करने की इच्छा को छोड़कर शुद्ध भक्त हो गये। इसी प्रकार चतुःसन सनक, सनन्दन, सनत्कुमार और सनातन भी भगवत् कृपा से मोक्षेच्छा को छोड़कर शुद्ध भक्त हो गये॥२०-२१॥

**भुक्तिमुक्तिस्पृहा यावत् पिशाची हृदि वर्त्तते।**
**तावद्भक्तिसुखस्यात्र कथमभ्युदयो भवेत्!॥　　(२२)**

### अनुवाद

भुक्ति और मुक्ति स्पृहा स्वरूपा पिशाची जब तक हृदय में रहती है, तब तक उस हृदय में भक्ति सुख का अभ्युदय भला कैसे हो सकता है!॥ २२॥

### दुर्गमसङ्गमनी

अथ मूलमनुसरामः, पूर्वत्र हेतुं व्यतिरेकेणाह– भुक्तीति। मुक्तिस्पृहायामपि पिशाचीत्वं, भावान्तरेण भक्तिस्पृहावरकत्वात् पूर्वा, परा च स्वोन्मुखतात्पर्य्यवतीति। अत्र यद्यपि भक्ता अपि संसारतो मुक्ता भवन्त्येव, तथाऽपि तदंशे तु तेषां तात्पर्य्यं न भवत्येव, किन्तु भक्तेः प्रभावेणैव सा स्यादिति। ''व्याप्नोति हृदयं यावद्भुक्तिमुक्तिस्पृहाग्रह''इति पाठान्तरन्तु सुश्लिष्टं, तदेवमनया कारिकया साधकानामपि भुक्तिमुक्तिस्पृहा न युक्तेत्युक्तं, ततः सुतरामेव सिद्धानां नास्तीत्यभिप्रायस्तु परत्रोभयविधतत्तदुदाहरणेषु ज्ञेयः॥ २२॥

### अनुवाद

अनन्तर मूल का अनुसरण करते हैं। पहले वर्णित भक्ति के हेतु को अभावमुख से कहते हैं। मुक्ति इच्छा में भी पिशाचीत्व है। भुक्ति पिशाची है क्योंकि यह भावान्तर के द्वारा भक्ति स्पृहा का आवरक है। और मुक्ति स्वोन्मुख तात्पर्यवाली होने से पिशाची कही है। यद्यपि भक्तगण भी संसार से अवश्य मुक्त हो जाते हैं तथापि संसार से मुक्त होने के अंश में भक्तों का तात्पर्य नहीं रहता है। किन्तु भक्ति के प्रभाव से ही आनुषङ्गिक रूप से संसार से उनकी मुक्ति हो जाती है।

'भुक्तिमुक्तिस्पृहा यावत् पिशाची हृदि वर्त्तते' के स्थान पर "व्याप्नोति हृदयं यावत् भुक्तिमुक्ति-स्पृहाग्रहः" इस प्रकार का पाठ सुश्लिष्ट है।

इसलिए इस कारिका से यह ज्ञात होता है कि भक्ति साधकों के लिए भी भोग करने की इच्छा, एवं मुक्त होने की इच्छा उचित नहीं है। सुतरां सिद्धों में भोगेच्छा और मोक्षेच्छा नहीं होती है, इसको आगे के ग्रन्थ में उभयविध उदाहरणों में जानना होगा॥ २२॥

## अर्थरत्नाल्प-दीपिका

ननु भक्तिं कुर्वतामार्त्तादीनां तत्तदिच्छा भक्तिसुखोदयात् स्वत एव निवर्त्तेत, किमत्र कृपया? तत्राह– भुक्तीति; यथा पिशाचीस्थाने सज्जनस्य स्थितिर्न, तथा हृदि तस्यां सत्यां भक्तिसुखस्याभ्युदयो न, अत ईभादीनां तत्त्यागः कृपयैवेत्युक्तम्, अत आर्त्तादयो न शुद्धभक्तावधिकारिणः, किन्तु तदिच्छारहिता एव ॥ २२॥

## अनुवाद

भक्ति करने वाले आर्त्त, जिज्ञासु, अर्थार्थी और ज्ञानी की भक्ति सुख का उदय होने पर वह वह इच्छा स्वतः समाप्त हो जाती है, इस अवस्था में भक्त एवं भगवान की कृपा की आवश्यकता क्या रह गयी? इसलिए कहते हैं– जब तक हृदय में भोग करने की इच्छा एवं मुक्त होने की इच्छा रहती है, तब तक भक्ति सुख का उदय कैसे हो सकता है! जैसे पिशाची के रहने के स्थान में सज्जन की स्थिति नहीं हो सकती है, वैसे ही भोगेच्छा और मोक्षेच्छा वाले हृदय में भक्ति सुख का उदय हो ही नहीं सकता। अतएव इभ (गजेन्द्र) प्रभृति की उस उस इच्छा का त्याग कृपा से ही हुआ था। अतएव आर्त्तादि शुद्ध भक्ति के अधिकारी नहीं हैं। किन्तु जब वे सब इच्छाएं चली गयीं, तब वे सब शुद्ध भक्ति के अधिकारी हुये॥ २२॥

## भक्तिसार-प्रदर्शिनी

भुक्तीति– श्रीभागवतेऽपि (भा. ६/१७/२८) ''स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः'' इत्यनेन मोक्षस्य नरकतुल्यतया दर्शनकथनादतोऽत्र मोक्षस्पृहायाः पिशाचीत्वकथनमपि नासङ्गतमिति ज्ञेयम्॥ २२॥

## अनुवाद

श्रीमद्भागवत के ६/१७/२८ में भी उक्त है–

नारायणपराः सर्वे न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥

जो लोक भगवान् नारायण के शरणागत होते हैं, वे किसी से भी नहीं डरते हैं। क्योंकि वे स्वर्ग, मोक्ष और नरक इन तीनों को समान भाव से दर्शन करने वाले होते हैं।

इस प्रकार मोक्ष को नरक के समान दर्शन कथन से मोक्ष स्पृहा का पिशाचीत्व कथन भी असङ्गत नहीं हुआ है, इस प्रकार जानना होगा॥ २२॥

**तत्रापि च विशेषेण गतिमण्वीमनिच्छतः।**
**भक्तिर्हृतमनःप्राणान् प्रेम्णा तान् कुरुते जनान्॥ (२३)**

## अनुवाद

भुक्ति और मुक्ति स्पृहा रहित जनों के मध्य में विशेष करके मुक्ति स्पृहा रहित जनों के मन, प्राण (इन्द्रिय) को भक्ति प्रेम के द्वारा हरण करती रहती है॥ २३॥

### दुर्गमसङ्गमनी

मुक्तीच्छारहिताया भक्तेर्वैशिष्ट्यमाह— तत्रापीति। अण्वीं मोक्षलक्षणां। भक्तिः श्रवणादिलक्षणा। हृतमात्मसात् कृतं मनः प्राणाश्चेन्द्रियाणि येषां तथाभूतान् प्रेमद्वारा कुरुते॥ २३॥

### अनुवाद

मुक्ति इच्छा रहित भक्ति का वैशिष्ट्य कहते हैं तत्रापीत्यादि कारिका के द्वारा। अण्वीं गतिम् का अर्थ है— मोक्षलक्षणा गति (मुक्ति)। भक्तिः से श्रवणादि लक्षणा भक्ति सूचित हो रहा है। यह श्रवणादि लक्षणा भक्ति भक्त के मन एवं प्राण अर्थात् इन्द्रियों को प्रेम द्वारा आत्मसात् करती रहती है। इस प्रकार मन एवं प्राण भी प्रेम के द्वारा भक्ति रूप हो जाते हैं॥ २३॥

### अर्थरत्नाल्प-दीपिका

भुक्तिमुक्तिस्पृहारहितेष्वपि मुक्तीच्छारहितानां वैशिष्ट्यमाह— तत्रापीति। अण्वीं मोक्षलक्षणां, प्राणान् इन्द्रियाणि, भक्तिः श्रवणादिलक्षणा, प्रेम्णा प्रेमद्वारा ॥ २३॥

### अनुवाद

भुक्ति मुक्ति स्पृहा रहित जनों के मध्य में भी मुक्ति इच्छा रहित जनों का वैशिष्ट्य कहते हैं— तत्रापीत्यादि। अण्वीं गतिम् का अर्थ है— मोक्षलक्षणा गति। प्राणान् का अर्थ है— इन्द्रिय समूह। भक्तिः शब्द से श्रवणादि लक्षणा भक्ति को जानना है। प्रेम्णा अर्थात् प्रेम द्वारा॥ २३॥

### भक्तिसार-प्रदर्शिनी

तयोर्मध्ये मुक्तीच्छारहिताया भक्तेर्वैशिष्ट्यमाह— तत्रापीति। तथा च विषयभोगेच्छा न भक्तेरात्यन्तिक विरोधिनीति भावः। अण्वीं मोक्षलक्षणां गतिमनिच्छतो जनान् भक्तिः श्रवणकीर्त्तनादिलक्षणा हृतमनः प्राणानात्मसात्कृतमनःप्राणान् प्रेमद्वारा कुरुते; प्राणा इन्द्रियाणि॥ २३॥

### अनुवाद

भुक्ति मुक्ति दोनों के मध्य में मुक्ति इच्छा रहित भक्ति का वैशिष्ट्य कहते हैं— तत्रापि इत्यादि। इस प्रकार कहने का अभिप्राय यह है कि विषय भोगेच्छा भक्ति की आत्यन्तिक विरोधी नहीं है। किन्तु जो लोक मुक्ति को नहीं चाहते हैं श्रवण कीर्त्तनादि रूपा भक्ति उन सबके मन प्राण अर्थात् इन्द्रिय प्रभृति को प्रेम के द्वारा आत्मसात् करती रहती है॥ २३॥

**तथा च तृतीये (३/२५/३६)—**

**तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः।**
**हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते॥ इति। (२४)**

### अनुवाद

इसी प्रकार तृतीय स्कन्ध (भा. ३/२५/३६) में कहा गया है—

दर्शनीय अङ्ग-प्रत्यङ्ग, उदार हास-विलास, मनोहर चितवन और सुमधुर वाणी से युक्त मेरे रूपों की माधुरी में उनके मन और प्राण फँस जाते हैं। ऐसे भक्तों के न चाहने पर भी मेरी भक्ति उन्हें परमपद (पार्षदलक्षणा मुक्ति) की प्राप्ति करा देती है॥ २४॥

## दुर्गमसङ्गमनी

एतत्प्रमाणयति— तैरिति। दर्शनीयावयवाद्यनुभवजातप्रेमद्वारैवेत्यर्थः। प्रयुङ्क्ते कुरुते। तदेवमक्लेशप्राप्तत्वाद्व्याख्यातम्। व्याख्यान्तरेऽपि अण्वीं सूक्ष्मां दुर्ज्ञेयां पार्षदलक्षणामित्येवार्थः, प्रकरणप्राप्तत्वात्। (भा. ३/२५/३७) ''श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते हि लोके" इति वक्ष्यमाणात्, तस्या अप्यनिच्छा दैन्येनैवेति भावः॥ २४॥

## अनुवाद

उक्त विषय को प्रमाणित करते हैं— तैरित्यादि भागवतीय पद्य के द्वारा। दर्शनीय अवयवों के अनुभव से उत्पन्न प्रेम के द्वारा मन एवं इन्द्रियों का हरण करते हैं। प्रयुङ्क्ते का अर्थ है— करा देती है। ये भक्तगण समस्त क्लेशों से रहित होने के कारण इनकी मुक्ति की इच्छा नहीं होती है।

व्याख्यान्तर में भी अण्वी सूक्ष्मा दुर्ज्ञेया पार्षद स्वरूप गति को देते हैं। प्रकरण के अनुसार इस प्रकार अर्थ होता है। आगे (भा. ३/२५/३७) में उक्त है—

अथोविभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम्।
श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके॥

भक्ति की प्रवृत्ति के पश्चात् यद्यपि वे मुझ मायापति के सत्यादि लोकों की भोग सम्पत्ति, स्वयं प्राप्त होने वाली अष्टसिद्धि अथवा वैकुण्ठ लोक के भगवदीय ऐश्वर्य की भी इच्छा नहीं करते, तथापि मेरे धाम में पहुँचने पर उन्हें ये सब विभूतियाँ स्वयं ही प्राप्त हो जाती हैं।

भक्ति का स्वरूप है दैन्य, अतएव उन सब ऐश्वर्य के प्रति जो अनिच्छा है, वह दैन्य के कारण ही है॥ २४॥

## अर्थरत्नाल्प-दीपिका

तैरित्याद्यनुभावेन प्रेम दर्शितम्; प्रेम्णैव साक्षाद् भगवदनुभवात्, प्रयुङ्क्ते कुरुते ॥ २४॥

## अनुवाद

दर्शनीय उदार दर्शनीय अवयव इत्यादि अनुभाव के द्वारा प्रेम का प्रदर्शन हुआ है। प्रेम से ही साक्षात् भगवान् का दर्शन होता है। प्रयुङ्क्ते का अभिप्राय है कि ये सब ऐश्वर्य दान करते हैं॥ २४॥

## भक्तिसार-प्रदर्शिनी

मद्दर्शनादिमाधुर्येणैव सचमत्कारमनुभूयमानेन ब्रह्मसायुज्यस्यारोचकत्वमुत्पद्येत इत्याह तैरिति। दर्शनीया अति मनोहरा ये अवयवाः श्रीकृष्णरामाद्यङ्गानि तैस्तथा उदारा अभीष्टप्रदातारो विलासहासेक्षितमनोहरवाक्यादयस्तैस्तथा च भक्तिरण्वीं गतिमनिच्छतो जनान्

विलासहासादिभिर्हृतमनःप्राणान् प्रयुङ्क्ते कुरुते॥ २४॥

### अनुवाद

मेरे दर्शनादि माधुर्य के द्वारा चमत्कार अनुभव होने पर ब्रह्म सायुज्य में अरुचि उत्पन्न होती है। कहते हैं—दर्शनीय अति मनोहर श्रीकृष्ण रामादि के अङ्ग प्रत्यङ्ग समूह हैं, उदार अर्थात् अभीष्ट प्रदाता, विलास, हास, ईक्षण व मनोहर वाक्य के द्वारा मन एवं इन्द्रियों का हरण करती रहती है। मेरी भक्ति मुक्ति न चाहने वाले लोगों का विलास हास्य आदि के द्वारा मन एवं प्राण का हरण करती रहती है॥ २४॥

**श्रीकृष्णचरणाम्भोजसेवानिर्वृतचेतसाम्।**
**एषां मोक्षाय भक्तानां न कदापि स्पृहा भवेत्॥ (२५)**

### अनुवाद

श्रीकृष्ण के चरणकमलों की सेवा के महासुख में मग्नचित्त भक्तों की कभी भी मोक्ष की स्पृहा नहीं होती है॥ २५॥

### अर्थरत्नाल्प-दीपिका

जातभक्तिसुखानान्तु मोक्षसुखानां मोक्षस्पृहा स्वत एव नास्तीत्याह— श्रीकृष्णेति। कदापि भगवता तद्दानादिकालेऽपि॥ २५॥

### अनुवाद

भक्ति सुख प्राप्त होने के बाद मोक्ष सुख के प्रति इच्छा स्वतः ही नहीं होती है; इसको व्यक्त करने के लिये कहते हैं— श्रीकृष्ण इत्यादि कारिका। कदापि का अभिप्राय है— कदाचित् भगवान् श्रीकृष्ण मुक्ति सुख देना चाहे तो भी उसमें भक्तों की इच्छा नहीं होती है॥ २५॥

**यथा तत्रैव श्रीमदुद्धवोक्तौ (भा. ३/४/१५)—**

**को न्वीश! ते पादसरोजभाजां, सुदुर्ल्लभोऽर्थेषु चतुर्ष्वपीह।**
**तथाऽपि नाहं प्रवृणोमि भूमन्! भवत्पदाम्भोजनिषेवणोत्सुकः॥(२६)**

### अनुवाद

जैसाकि श्रीमद्भागवत (३/४/१५) में श्रीमान् उद्धव ने कहा है—

हे परमेश्वर! आपके चरण-कमलों की सेवा करने वाले पुरुष को इस संसार में धर्म, अर्थ, काम और मोक्ष इन चारों में से कोई भी पदार्थ दुर्लभ नहीं है, तथापि हे प्रभो! आपके चरण कमलों की सेवा के लिए ही लालायित मैं आपकी सेवा के अतिरिक्त कुछ भी नहीं मांगता हूँ॥ २६॥

### भक्तिसार-प्रदर्शिनी

चतुर्षु धर्मार्थकाममोक्षेषु मध्ये को दुर्लभः॥ २६॥

### अनुवाद

चतुर्षु अर्थात् धर्म, अर्थ, काम व मोक्ष के मध्य में क्या दुर्लभ है? भक्ति तो सुदुर्लभ वस्तु को भी प्रदान करती रहती है॥ २६॥

**तत्रैव श्रीकपिलदेवोक्तौ (भा. ३/२५/३४)—**

**नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाऽभिरता मदीहाः।**
**येऽन्योन्यतो भागवताः प्रसज्य, सभाजयन्ते मम पौरुषाणि॥ (२७)**

## अनुवाद

श्रीमद्भागवत (३/२५/३४) में श्रीकपिलदेव ने कहा है—

मेरी चरण सेवा में प्रीति रखने वाले और मेरी ही प्रसन्नता के लिए समस्त कार्य करने वाले कितने ही भाग्यवान भक्त जो एक-दूसरे से मिलकर प्रेमपूर्वक मेरे ही पराक्रमों की चर्चा किया करते हैं। वे मेरे साथ एकीभाव अर्थात् सायुज्य मोक्ष की भी इच्छा नहीं करते॥ २७॥

## दुर्गमसङ्गमनी

एकात्मतां ब्रह्मसायुज्यं भगवत्सायुज्यमपि॥ २७॥

## अनुवाद

एकात्मतां अर्थात् ब्रह्म सायुज्य एवं भगवत् सायुज्य को भी नहीं चाहते हैं॥ २७॥

## भक्तिसार-प्रदर्शिनी

तत्रैव श्रीकपिलदेवोक्तौ— नैकात्मतामिति ब्रह्मैक्यरूपायै मुक्त्यै न स्पृहयन्तीत्यर्थः। ननु केन सुखेन पूर्णास्ते ब्रह्मसुखं न रोचयन्ति? तत्राह— मम पादयोः सर्वेन्द्रियैर्या सेवा तस्यामेव, न तु ज्ञानादिषु, अभि शास्त्राभिमुख्येन रता अत्यासक्तिमन्तः; अनेन भक्तेर्भगवद्विषयत्वं सर्वेन्द्रियवृत्तिरूपत्वं कर्मज्ञानादिराहित्यं शास्त्रानुसारित्वं स्वाभाविकत्वञ्चोक्तम्। मय्येव मत्सौन्दर्यमाधुर्याद्यास्वादन एव ईहा वाञ्छा येषां ते इत्यन्याभिलाषशून्यत्वम् प्रसज्यासज्य पौरुषाणि गोवर्द्धनोद्धरणादिलीलामृतानि सभाजयन्ते सस्तुतिकमास्वादयन्ति; तेन चरणसेवानन्दाभावात् सौन्दर्य-सौरभ्याद्यनुभवाभावाल्लीलामृतास्वादनाभावाच्च ब्रह्मसुखं न रोचयन्तीति मुक्तावस्पृहायां हेतुत्रयमुक्तम्॥ २७॥

## अनुवाद

श्री कपिलदेव ने श्रीमद्भागवत में कहा है— भक्तगण ब्रह्म एकता रूप मुक्ति को नहीं चाहते हैं। तो फिर किस सुख से पूर्ण होकर वे ब्रह्म सुख को नहीं चाहते हैं? कहते हैं— मेरे चरण कमलों की समस्त इन्द्रियों के द्वारा जो सेवा, उस सेवा सुख से विभोर होकर ही ब्रह्म सुख को नहीं चाहते हैं। ज्ञानादि में उस प्रकार सुख नहीं है। यहाँ पर अभिरता से शास्त्राभिमुख्य द्वारा अतिशय आसक्ति युक्त जानना है।

इसलिए भक्ति का भगवद्विषयकत्व, सब इन्द्रियों का वृत्तिरूपत्व, कर्म ज्ञानादि राहित्य एवं शास्त्रानुसारित्व एवं स्वाभाविकत्व कहा गया है। उन सबकी सौन्दर्य, माधुर्य के आस्वादन में इच्छा है, अतएव अन्याभिलाषिता शून्य होना स्वाभाविक है। पौरुषाणि यानि आसक्ति के साथ गोवर्धन धारणादि लीलामृत का आस्वादन स्तुति सहित करते रहते हैं। इसलिए चरणसेवानन्द न रहने कारण, सौन्दर्य

सौरभ्यादि अनुभव न रहने के कारण, लीलामृत का भी आस्वादन न रहने से ब्रह्म सुख रुचिकर नहीं होता है। इस प्रकार मुक्ति के लिए इच्छा न होने के तीन कारण कहे गये हैं॥ २७॥

**तत्रैव (भा. ३/२९/१३)—**

**सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत।**
**दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥　　(२८)**

### अनुवाद

श्रीमद्भागवत के तृतीय स्कन्द के २९/१३ में उक्त है—

सालोक्य, सार्ष्टि, सामीप्य एवं सायुज्य मुक्ति को भी मेरे भक्तगण मेरे सेवा के विना दिये जाने पर भी ग्रहण नहीं करते हैं। इनके अन्वेषण की तो बात ही नहीं उठती॥ २८॥

### दुर्गमसङ्गमनी

सार्ष्टिः समानैश्वर्यम्॥ २८॥

### अनुवाद

सार्ष्टि यानि कि भगवान् के समान ऐश्वर्य॥ २८॥

### भक्तिसार-प्रदर्शिनी

सालोक्यं मया सहैकलोके वासः; सार्ष्टिः समानैश्वयर्यम्; सामीप्यं निकटवर्त्तित्वम्; सारूप्यं समानरूपत्वम्; एकत्वं सायुज्यम्; उत अपि दीयमानमपि न गृह्णन्ति; कुतस्तत्कामनेति भावः। मत्सेवनं विनेति केचिद् गृह्णन्ति चेन्मत्सेवार्थमेव गृह्णन्तीत्यर्थः॥ २८॥

### अनुवाद

सालोक्य— भगवान् के साथ एक लोक में वास करना, सार्ष्टि— समान ऐश्वर्य, सारूप्य— समानरूपता, सामीप्य— पास में रहना, एकत्व— सायुज्य; इन सबको देने पर भी नहीं लेते हैं। फिर तो इनकी कामना कहाँ से होगी। यही भाव है।

'मेरी सेवा के बिना' कहने का तात्पर्य यह है कि यदि कोई व्यक्ति प्रथम चारों के मध्य में किसी को ग्रहण करता है तो जानना होगा कि मेरी सेवा के लिए ही ग्रहण किया है॥ २८॥

**चतुर्थे श्रीध्रुवोक्तौ (४/९/१०)—**

**या निर्वृतिस्तनुभृतां तव पादपद्म,-ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।**
**सा ब्रह्मणि स्वमहिमन्यपि नाथ! माभूत् किम्वान्तकासिलुलितात् पततां विमानात्॥(२९)**

### अनुवाद

श्रीमद्भागवत के चतुर्थ स्कन्ध में श्रीध्रुव ने कहा है—

नाथ! आपके चरण कमलों का ध्यान करने से और आपके भक्तों के पवित्र चरित्र सुनने से

प्राणियों को जो आनन्द प्राप्त होता है, वह निजानन्द स्वरूप ब्रह्म में भी नहीं मिल सकता। फिर जिन्हें काल की तलवार काटे डालती है, उन स्वर्गीय विमानों से गिरने वाले पुरुषों को भला वह सुख मिल ही कैसे सकता है॥ २९॥

## दुर्गमसङ्गमनी

स्वमहिमनि स्वः असाधारणो महिमा यस्य तस्मिन्नपि, अन्तकस्यासिना कालेन लुलितात् विमानात् पततां नास्तीति किमुत वक्तव्यम्॥ २९॥

## अनुवाद

ब्रह्मानन्द जो कि असाधारण महिमा से युक्त होता है, उसमें भी वह आनन्द नहीं है, फिर कालरूपी खड्ग से कटे हुए विमान से गिरने वाली वस्तु का कहना ही क्या है?॥ २९॥

## भक्तिसार-प्रदर्शिनी

येति ध्यानादित्युपलक्षणम्, श्रवणादेरपि, श्रवणेनेत्युपलक्षणम्, ध्यानादिनापि, सा निर्वृतिः, स्वमहिमरूपे ब्रह्मणि ब्रह्मानन्देऽपि माभूत् न भवति। महतो भावो महिमा,– त्वं महान्, तत्तू महत्त्वं सर्वव्यापकत्वलक्षणो धर्म एवेति त्वन्निष्ठा यावती निर्वृतिस्तावती तव कथं वर्त्ततामिति भावः, 'मदीयं महिमानञ्च परब्रह्मेति शब्दितम्' इत्यष्टमे (भा. ८/२४/३८) मत्स्यदेवोक्त्यापि ब्रह्मणो भगवन्महिमत्वमवगतम्। ततश्चान्तकासिना कालेन लुलितात् खण्डिताद् विमानात् स्वर्गीयात् पततां नास्तीति किमु वक्तव्यम्? ततश्च स्वर्गापवर्गाभ्यामधिकस्यान्यस्य कस्यापि फलस्याश्रवणाद् भक्तेर्वास्तवं फलं त्वद्भक्तिरेवेति भक्तेः स्वतः फलत्वं भक्तानाञ्च निष्कामत्वमुपपादितम्॥ २९॥

## अनुवाद

ध्यानादि उपलक्षण है श्रवणादि का; अतः इससे श्रवणादि अन्यान्य अङ्गों को भी ग्रहण करना चाहिए। इसी प्रकार श्रवण भी उपलक्षण है ध्यानादि का। इस प्रकार भगवद्ध्यानादि से जो आनन्द आता है, भगवत्कथा श्रवण से जो आनन्द आता है; उस प्रकार आनन्द ब्रह्मानन्द में भी नहीं होता है। महान् का भाव ही महिमा है। तुम महान हो। सर्वव्यापकत्व धर्म ही महत्व है। तुम सर्वव्यापक हो, अतः तुम्हारे में निष्ठाशील व्यक्ति को जो आनन्द मिलता है, वह आनन्द तुम्हारी महिमा स्वरूप जो ब्रह्म है उनमें कैसे मिल सकता है? श्रीमद्भागवत के ८/२४/३८ में उक्त है–

मदीयं महिमानञ्च परब्रह्मेति शब्दितम्।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि॥"

मत्स्यदेव ने कहा– उस समय जब तुम प्रश्न करोगे, तब मैं तुम्हें उपदेश दुँगा। मेरे अनुग्रह से मेरी वास्तविक महिमा, जिसका नाम 'परब्रह्म' है तुम्हारे हृदय में प्रकट हो जायेगी, और तुम उसे ठीक-ठीक जान लोगे।

मत्स्यदेव की उक्ति से भी ब्रह्म भगवान् की महिमा रूप में अवगत होता है। सुतरां अन्तक मृत्यु

की तलवार से काल के द्वारा खण्डित विमान से स्वर्ग से गिरने वाले का सुख ही क्या है, कुछ भी सुख नहीं है।

अतएव स्वर्ग व अपवर्ग से अधिक अन्य फल सुनने में जब नहीं आता है तब भक्ति का वास्तविक फल है— तुम्हारी भक्ति। इस प्रकार भक्ति का स्वतः फलत्व एवं भक्तों का निष्कामत्व प्रतिपादित हुआ है॥ २९॥

**तत्रैव श्रीमदादिराजोक्तौ (४/२०/२४)—**

**न कामये नाथ! तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः।**
**महत्तमान्तर्हृदयान्मुखच्युतो, विधत्स्व कर्णायुतमेष मे वरः॥ (३०)**

### अनुवाद

आदिराज श्रीपृथु ने कहा (भा. ४/२०/२४)—

हे नाथ! मैं उस मोक्षपद की प्रार्थना नहीं करता हूँ जहाँ महत्तम भागवतों के अन्तर्हृदय से मुख के द्वारा विनिःसृत आपकी पादपद्म सुधा, आपके गुण कथा माधुर्य पान करने की सम्भावना नहीं है। मेरी यही प्रार्थना है कि आप मुझे आपकी गुण कथा सुनने के लिए अयुत अयुत कर्ण दीजिये॥ ३०॥

### दुर्गमसङ्गमनी

तदपि कैवल्यमपि, यत्र भवत्पदाम्भोजमकरन्दो यशःश्रवणादिसुखं नास्ति। तर्हि किं कामयसे, तत्राह— यशः श्रवणाय कर्णानामयुतं विधत्स्व, एष मे वरः॥ ३०॥

### अनुवाद

तदपि अर्थात् कैवल्य को भी नहीं चाहता हूँ, कारण वहाँ पर आपके चरण कमल मकरन्द यश सुनने का सुख नहीं है। तब तुम क्या चाहते हो? कहते हैं, यश श्रवण के लिये अयुत अयुत कान दो, यही मेरा प्रार्थित वर है॥ ३०॥

### अर्थरत्नाल्प-दीपिका

तदपि कैवल्यमपि ॥ ३०॥

### अनुवाद

मैं कैवल्य (मुक्ति) को भी नहीं चाहता हूँ॥ ३०॥

### भक्तिसार-प्रदर्शिनी

न कामये इति; तदपि कैवल्यमपि क्वचित् कदाचिदपि दुःखदशायामपि न कामये, कुतः? यत्र कैवल्ये युष्मच्चरणाम्बुजस्यासवो मकरन्दस्तदीयगुणकथामाधुर्यभरो नास्ति। कीदृशः? महत्तमान्तर्हृदयान्मुखद्वारा च्युतोऽन्तर्हृदयेनास्वाद्यानन्दोद्रेकात् कीर्त्यमान इत्यर्थः। शुकमुखादमृतद्रवसंयुतमितिवत् मदास्वाद्यत्वे सति तस्यातिमाधुर्यमुदयत इति भावः। मधुरमपि जलं क्षारभूमिप्रविष्टं यथा विरसी भवति, तथैवावैष्णवमुखनिर्गतो भगवद्गुणोऽपि नातिरोचक इति

व्यतिरेकश्च गम्यः। तर्हि किं कामये? तत्राह— विधत्स्वेति महतां गुणकथानाञ्चानन्त्याद् यैर्यैर्यत्र यत्र या या गुणकथाः कीर्त्त्यमानाः स्युस्तासामेकामहं त्यक्तुं न शक्नोमीत्यतिलोभात् कर्णानन्त्यस्पृहा। ननु कोऽप्येवं न वृणीते? सत्यम्, मम त्वेष एव वरो नान्य इति॥ ३०॥

## अनुवाद

मैं कैवल्य को भी कभी भी दुःख दशा में भी नहीं चाहता हूँ। क्यों नहीं चाहते हो? कहते हैं— जिस कैवल्य मुक्ति में तुम्हारे चरणाम्बुज के आसव, मकरन्द, तुम्हारे गुण कथा माधुर्य का विस्तार नहीं है। किस प्रकार? महत्‌गणों के हृदय से मुख के द्वारा चुता हुआ, अन्तर्हृदय के द्वारा आस्वाद्य जो आनन्दोद्रेक से कीर्त्तन किया गया है। इस प्रकार गुण कथा। शुकमुख से आये हुए अमृत द्रव संयुत के तरह आस्वादन करने से अत्यन्त माधुर्य का उदय होगा। मेघ का मधुर जल क्षार भूमि में प्रविष्ट होकर जिस प्रकार विरस होता है, उसी प्रकार अवैष्णव मुख निर्गत भगवत् गुण भी अति रोचक नहीं होता है; इसे व्यतिरेक मुख से जानना चाहिये।

तब तुम क्या चाहते हो? कहते हैं— अनन्त कान दीजिये। महत् अनन्त, तुम्हारी गुण कथा भी अनन्त है, जो जो जहाँ जहाँ जो जो गुणकथा का गान करते रहते हैं, उन सबों में से एक भी मैं छोड़ना नहीं चाहता हूँ, अत्यन्त लोभ होने के कारण अनन्त कान पाने की इच्छा होती है।

आज तक किसी ने इस प्रकार नहीं चाहा, तुम कैसे इस प्रकार का वर चाहते हो? सच है, मेरा तो यही वर है, चाहना है। अन्य किसी प्रकार का वर नहीं चाहता हूँ॥ ३०॥

**पञ्चमे श्रीशुकोक्तौ (५/१४/४४)—**

**यो दुस्त्यजाम् क्षितिसुतस्वजनार्थदारान्, प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्।**
**नैच्छन्नृपस्तदुचितं महतां मधुद्विट्,-सेवाऽनुरक्तमनसामभवोऽपि फल्गुः॥ (३१)**

## अनुवाद

पञ्चम स्कन्ध (भा. ५/१४/४४) में श्रीशुक की उक्ति है—

नृपति भरत दुष्परिहार्य्य राज्य, धन,बन्धु, पुत्र, भार्या एवं सुर वाञ्छनीय एवं तदीय करुणार्थिनी लक्ष्मी को भी नहीं चाहते थे। कारण, मधुसूदन के सेवानुरागी महात्मावृन्द के पक्ष में मोक्ष सुख भी अति तुच्छ पदार्थ है॥ ३१॥

## दुर्गमसङ्गमनी

यः आर्षभेयो भरतः॥ ३१॥

## अनुवाद

श्लोकोक्त यः शब्द से ऋषभदेव के पुत्र भरत को जानना है॥ ३१॥

## अर्थरत्नाल्प-दीपिका

यो भरतः ॥ ३१॥

### अनुवाद

श्लोकोक्त यः शब्द से भरत को जानना है॥ ३१॥

### भक्तिसार-प्रदर्शिनी

य इति भरतः, वैराग्योत्थं शारीरकष्टं मा स्वीकरोतु, मया लाल्यमानो गृह एव तिष्ठत्विति सदयोऽवलोको यस्यास्ताम्। अभवो मोक्षोऽपि फलगुस्तुच्छः, तत्रापि ते विरज्यन्ति इत्यर्थः॥ ३१॥

### अनुवाद

भरत वैराग्य हेतु शारीरिक कष्ट को स्वीकार न करके मुझसे लालित होकर घर में ही निवास करें, इस प्रकार सदय दृष्टि जिन लक्ष्मी की हुई थी, उन लक्ष्मी को भी छोड़कर चले गये थे। यह उनके लिए ठीक ही था, कारण जिन सब महानुभाव के चित्त सदा श्रीमधुसूदन की सेवा में अनुरक्त है, उन सबके लिए मोक्ष भी अत्यन्त नगण्य तुच्छ वस्तु होती है। भाव यह है कि इससे भी वे विरत होते हैं॥३१

**षष्ठे श्रीवृत्रोक्तौ (६/११/२५)—**

**न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा समञ्जस! त्वा विरहय्य काङ्क्षे॥ (३२)**

### अनुवाद

षष्ठ स्कन्ध (भा. ६/११/२५) में वृत्तासुर की उक्ति है—

हे समञ्जस! सर्व सौभाग्यनिधे! मैं आपको छोड़कर ध्रुवलोक, ब्रह्मपद, पृथिवी का एक छत्र आधिपत्य, पाताल की अधीश्वरता, अथवा अणिमादि सिद्धियाँ, और तो और मुक्ति भी नहीं चाहता हूँ॥ ३२॥

### दुर्गमसङ्गमनी

नाकपृष्ठं ध्रुवपदं, सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम्। रसाधिपत्यं पातालादिसाम्राज्यम्, अपुनर्भवं मोक्षमपि त्वा त्वां विरहय्य त्यक्त्वा। अत्र नाकपृष्ठादिचतुष्टयस्यानुक्रमश्च न्यूनत्वविवक्षया ततश्चोत्तरोत्तरकैमुत्यमपि, ध्रुवपदस्य श्रैष्ठ्यं विष्णुपदसन्निहितत्वात्, योगसिद्धादिकन्तु सर्वत्रैतेषां पश्चाद्विन्यस्तम्। अनयोस्तूत्तरत्र श्रैष्ठ्यम्॥ ३२॥

### अनुवाद

वृत्र कह रहे हैं— नाकपृष्ठ अर्थात् ध्रुवपद, सार्वभौम अर्थात् श्रीप्रियव्रतादि के तरह महाराज्य, रसाधिपत्य अर्थात् पातालादि का साम्राज्य, अपुनर्भव अर्थात् मोक्ष; इन सबको भी आपको छोड़कर नहीं चाहता हूँ। यहाँ नाक पृष्ठ, पारमेष्ठ्य, सार्वभौम और रसाधिपत्य इन चारों को क्रमशः उत्तरोत्तर न्यूनत्व दिखाने के लिए इस प्रकार कहा गया है। उत्तरोत्तर कैमुत्य के लिए है। विष्णु पद के आसपास होने के कारण ध्रुवपद की श्रेष्ठता है। योग सिद्धि व मुक्ति को सबके पीछे लिखा गया है। इन दोनो में योग सिद्धि से मुक्ति श्रेष्ठ है॥ ३२॥

### भक्तिसार-प्रदर्शिनी

न नेति नाकपृष्ठं स्वर्गपदम्। हे समञ्जस! त्वा त्वां विरहय्य त्यक्त्वा॥ ३२॥

### अनुवाद

नाकपृष्ठ स्वर्ग का नाम है। हे समञ्जस! कल्याण गुण वारिधि! तुमको छोड़कर ये सब नहीं चाहता हूँ॥ ३२॥

**तत्रैव श्रीरुद्रोक्तौ (भा. ६/१७/२८)—**

**नारायणपराः सर्वे न कुतश्चन बिभ्यति।**
**स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥ (३३)**

### अनुवाद

श्रीमद्भागवत (भा. ६/१७/२८) में श्रीरुद्र की उक्ति है—

नारायण परायण लोकसमूह किसी से भी भयभीत नहीं होते हैं। कारण, वे सब नारायण को छोड़कर अन्यत्र हानि-लाभ दृष्टि रहित होकर स्वर्ग, मुक्ति व नरक को एक दृष्टि से देखते हैं॥ ३३॥

### दुर्गमसङ्गमनी

श्रीनारायणं विनाऽन्यत्र हानोपादानदृष्टिराहित्यात्, अपवर्ग इव स्वर्गे नरकेऽपि तुल्यमेकमेवार्थं द्रष्टुमनुभवितुं शीलं येषां ते, तुल्यशब्दस्यैकवाचित्वम्— "रषाभ्यां नो णः समानपदे" इतिवत्॥ ३३॥

### अनुवाद

श्रीनारायण को छोड़कर अन्यत्र हानि-लाभ दृष्टि नहीं होने के कारण मुक्ति के तरह स्वर्ग व नरक में भी एक दृष्टि रहती है। एक प्रकार ही अनुभव करते हैं। तुल्य शब्द का अर्थ एक है, एक प्रकार देखते हैं। जैसे न के स्थान में ण होने का सूत्र में कहा गया है। समान पद में अर्थात् एक पद में र और ष के उत्तर न के स्थान में ण होगा। इस प्रकार विशेष दृष्टि न रखकर समान दृष्टि रखते हैं॥ ३३॥

### भक्तिसार-प्रदर्शिनी

नारायणेति, नन्वेवं सर्वोत्तममाहात्म्यवत्त्वे भक्तानां को हेतुस्तत्राह— नारायणनिष्ठत्वमेव, नान्य इत्याह— नारायणेति। न केवलमेते चित्रकेतुप्रभृतय एव, अपि तु सर्व एव। स्वर्गेति त्रयाणामेव भक्तिसुखराहित्येनारोचकत्वाविशेषादिति भावः॥ ३३॥

### अनुवाद

भक्तगण जो कि सर्वोत्तम हैं, इसमें कारण क्या है? कहते हैं— वे सब श्री नारायण निष्ठ हैं। अन्य निष्ठ नहीं हैं। सुतरां वे किसी से डरते नहीं। केवल चित्रकेतु आदि ही इस प्रकार भयमुक्त हैं, ऐसा नहीं है; किन्तु समस्त नारायण परायण व्यक्ति ही भयमुक्त होते हैं। स्वर्ग, अपवर्ग व नरक तीनों में ही भक्ति सुख न होने से भक्त उनमें रुचिशील नहीं होते हैं॥ ३३॥

**तत्रैव इन्द्रोक्तौ (भा. ६/१८/७४)—**

**आराधनं भगवत ईहमाना निराशिषः।**
**ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः॥ (३४)**

### अनुवाद

भागवत (६/१८/७४) में इन्द्र की उक्ति है—

जो लोक भगवान् की आराधना के अभिलाषी और निष्काम हैं, दूसरी वस्तुओं की तो बात ही क्या, मोक्ष की भी इच्छा नहीं करते, वे ही अपने स्वार्थ में निपुण हैं॥ ३४॥

### दुर्गमसङ्गमनी

परं मोक्षमपि॥ ३४॥

### अनुवाद

निष्काम भाव से भगवान् की आराधना करने वाले भक्तगण परं अर्थात् मोक्ष को भी नहीं चाहते हैं। वस्तुतः वे ही स्वार्थ कुशली हैं॥ ३४॥

### भक्तिसार-प्रदर्शिनी

आराधनमिति, परं मोक्षमपि। स्वार्थकुशला इति तेन ये हरेराराधनेनमोक्षमिच्छन्ति, ते वर्त्तमानमहानिधिविनिमयेन तृणार्थिनः स्वार्थानभिज्ञाः, किन्तु विषयसाद्गुण्यात्तेऽपि कृतार्था एवेत्यर्थः, (भा. ५/१९/२६)— 'सत्यं दिशत्यर्थितमर्थितो नृणाम्'॥ ३४॥

### अनुवाद

निष्काम भाव से मोक्ष को भी न चाहकर जो श्रीहरि की आराधना करते हैं, वे स्वार्थ कुशल हैं। किन्तु जो श्रीहरि की आराधना करके मुक्ति चाहते हैं, वे वर्त्तमान महानिधि के बदले में तृण को चाहते हैं, वे लोक स्वार्थ में अनभिज्ञ होते हैं। किन्तु विषय की महत्त्व दृष्टि से वे भी कृतार्थ हो जाते हैं। (भा. ५/१९/२६) में उक्त है—

सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम्॥

मानववृन्द, भक्ति का अनुष्ठान करके यदि श्रीभगवान् के निकट अपर कुछ पुरुषार्थ वस्तु प्रार्थी होते हैं, तो परम दयालु श्रीहरि, उनके प्रार्थना के अनुरूप धर्मादि पुरुषार्थ वस्तु प्रदान करते हैं, किन्तु मन में विचार भी करते हैं, मैने जो कुछ भी दिया है, वह परमार्थ वस्तु नहीं है, कारण, उक्त कामित वस्तु प्राप्त करने के पश्चात् हृदय में अभाव बुद्धि होगी, और मेरे निकट पुनर्वार वे सब धन जन की प्रार्थना करेंगे। इस प्रकार विचारकर उक्त सकाम भक्तगण के हृदय में जिससे वासना का उद्गम न हो, तज्जन्य वासना उद्गम स्थान में भगवान् निज पादपल्लव प्रदान करते हैं ॥ ३४॥

**सप्तमे प्रह्लादोक्तौ (७/६/२५)—**

**तुष्टे च तत्र किमलभ्यमनन्त! आद्ये,**
**किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः।**
**धर्म्मादयः किमगुणेन च काङ्क्षितेन**
**सारं जुषां चरणयोरुपगायतां नः॥　(३५)**

## अनुवाद

सप्तम स्कन्ध (भा. ७/६/२५) में प्रह्लाद की उक्ति है—

सबके आदि एवं अनन्त भगवान् के प्रसन्न हो जाने पर ऐसी कौन सी वस्तु है जो प्राप्त नहीं हो जाती? लोक और परलोक के लिए जिन धर्म, अर्थ आदि की आवश्यकता कही जाती है—वे तो गुणों के परिणाम से बिना प्रयास के स्वयं ही मिलने वाले हैं। इनसे भी क्या प्रयोजन है? हमें मोक्ष की भी क्या आवश्यकता है? कारण, हम सब श्रीभगवान् के चरणों का सेवन और उनके नाम गुणों का कीर्त्तन करके परमानन्द का आस्वादन कर रहे हैं॥ ३५॥

## दुर्गमसङ्गमनी

अगुणेन मोक्षेण। सारं जुषां तन्माधुर्य्यास्वादिनां सताम्॥ ३५॥

## अनुवाद

अगुण अर्थात् मोक्ष की भी क्या आवश्यकता है?

भगवान् के माधुर्य आस्वादनकारी भक्तों के लिए मोक्ष की आवश्यकता नहीं है॥ ३५॥

## भक्तिसार-प्रदर्शिनी

तुष्ट इति; आद्ये भगवति तुष्टे सति गुणव्यतिकराद् रजोगुणक्षोभात् स्वयमेव सिद्धा ये धर्मादयस्तैः किम्? आकाङ्क्षितेनागुणेन मोक्षेण किम्? चरणयोः सारं जुषां नोऽस्माकम् एतैः किम्?॥ ३५॥

## अनुवाद

प्रह्लाद कह रहे हैं— सबके आदि, अनन्त श्रीभगवान् के संतुष्ट होने पर भक्तों के लिए कुछ भी दुर्लभ नहीं रहता है। रजोगुण के क्षोभ के कारण जो धर्मादि स्वतः ही निष्पन्न होते रहते हैं, उससे क्या प्रयोजन है?

अगुणेन अर्थात् मोक्ष से भी क्या प्रयोजन है? कारण हम सब भगवत् चरण सेवा को समझ गये हैं। एवं उन्हीं के स्तव गान करके परमानन्द प्राप्त कर रहे हैं॥ ३५॥

**तत्रैव शक्रोक्तौ (भा. ७/८/४२)—**

**प्रत्यानीताः परम! भवता त्रायता नः स्वभागा,**
**दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि।**
**कालग्रस्तं कियदिदमहो नाथ! शुश्रूषतां ते,**
**मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम्?॥ (३६)**

## अनुवाद

वहीं (भा. ७/८/४२) इन्द्र की श्री नृसिंहदेव के प्रति उक्ति है—

पुरुषोत्तम! आपने हमारी रक्षा की है। आपने हमारे जो यज्ञ भाग लौटाये हैं, वे वास्तव में आप

अन्तर्यामी के ही हैं। दैत्यों के आतङ्क से सङ्कुचित हमारे हृदय कमल को आपने पुनः प्रफुल्लित कर दिया है। वह भी आपका ही निवास स्थान है। यह जो स्वर्गादि का राज्य हम लोकों को पुनः प्राप्त हुआ है, यह सब काल का ग्रास है। जो आपके सेवक हैं, उनके लिए यह है ही क्या? स्वामिन्! जो आपकी सेवा में रत हैं वे मुक्ति का भी आदर नहीं करते। फिर अन्य भोगों की तो उन्हें आवश्यकता ही क्या है॥ ३६॥

### भक्तिसार-प्रदर्शिनी

प्रत्येति; हे परम! नोऽस्मांस्त्रायता रक्षता भवता स्वीया एव भागा दैत्यात् प्रत्यानीताः प्रत्याहृताः, इन्द्रादीनां तद्दासादीनामस्माकं वस्तुषु वस्तुतः प्रभोस्तवैव स्वत्वौचित्यात्। किञ्चास्माकं हृदयं खलु कमलं, तत्र शश्वत् तवैव ध्यातत्वात्तद्गृहं, कमलं यथा निःश्रीकं रात्रौ तमसाक्रान्तं मलिनं निद्रितं भवेत्तथैव दैत्यजन्मारभ्यैतावद्दिनपर्यन्तं भयाद् दैत्यस्यैव ध्यातत्वात् दैत्याक्रान्तं, सम्प्रति तव नृसिंहसूर्य्यस्योदये सति प्रत्यबोधि, तच्चरणाक्रान्तं सद् व्यकसदित्यर्थः। कालग्रस्तमिदमिन्द्रपदं कियत्? अपरैर्योगैश्वर्यादिभिः॥ ३६॥

### अनुवाद

हे परमेश्वर! हम सबकी रक्षा करते हुए आपने दैत्य से हमारे भाग को वापस लौटा दिया। हम इन्द्रादि आपके दास हैं, हमारी वस्तुओं में प्रभु आपका ही अधिकार है। हमारे हृदय कमल के सदृश हैं, आपका निरन्तर ध्यान करने से वह आपका घर है। कमल जिस प्रकार रात्रि में मलिन हो जाता है, उसी प्रकार दैत्य के जन्म से ही उसके भय से उसका ही ध्यान करते-करते हृदय कमल दैत्याक्रान्त अर्थात् मलिन हो गया है। सूर्योदय से कमल जिस प्रकार विकसित होता है, उसी प्रकार हमारे हृदय कमल को आप सूर्य्यरूप नृसिंह के उदय ने विकसित कर दिया। अर्थात् आपके चरणकमल स्पर्श से यह विकसित हो गया।

भक्तों के लिये काल के गाल में चले जाने वाले इस इन्द्र पद का क्या महत्त्व है? अपरैः अर्थात् योग ऐश्वर्यादि की फिर बात ही क्या है? क्या लाभ है?॥ ३६॥

**अष्टमे श्रीगजेन्द्रोक्तौ (८/३/२०)—**

**एकान्तिनो यस्य न कञ्चनार्थं, वाञ्छन्ति ये वै भगवत्प्रपन्नाः।**
**अत्यद्भुतं तच्चरितं सुमङ्गलं, गायन्त आनन्दसमुद्रमग्नाः॥ (३७)**

### अनुवाद

अष्टम स्कन्ध (भा. ८/३/२०) में श्रीगजेन्द्र ने कहा है—

भगवान् के अनन्य भक्तगण उन्हीं की शरण में रहते हुए उनसे किसी भी वस्तु की इच्छा नहीं करते, केवल उनकी परम दिव्य मङ्गलमयी लीलाओं का गान करते हुए आनन्द के समुद्र में निमग्न रहते हैं॥ ३७॥

### भक्तिसार-प्रदर्शिनी

एकान्तिन इति; एकान्तिनो यस्य भक्ता न कञ्चनार्थं वाञ्छन्ति तमीड़ इत्युत्तरेणान्वयः। कुतो न

वाञ्छन्ति, यतो भगवत्प्रपन्ना भगवत्प्रपत्तिमहासम्पत्त्यैव परिपूर्णा इत्यर्थः। तेषां सुखं सर्वतोप्यधिकमित्याह— अत्यद्भुतमित्यादि ॥ ३७ ॥

### अनुवाद

जिनके एकान्तिक भक्तगण किसी भी वस्तु को नहीं चाहते हैं, मैं उनका स्तव करता हूँ; इस प्रकार पर श्लोक के साथ अन्वय होगा। क्यों नहीं चाहते हैं? क्योंकि वे भगवत् प्रपन्न हैं, अर्थात् भगवत् प्रपत्तिरूप महा सम्पत्ति से ही परिपूर्ण हैं। उन सबका सुख सबसे अधिक है; इसके लिये कहते हैं— वे भगवान् के अति अद्भुत मङ्गलमय लीला का गान करते हुए आनन्द में मगन रहते हैं ॥ ३७ ॥

**नवमे श्रीवैकुण्ठनाथोक्तौ (९/४/६७)—**

**मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम्।**
**नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम्? ॥ (३८)**

### अनुवाद

श्रीमद्भागवत के नवम स्कन्ध ४/६७ में श्रीवैकुण्ठनाथ की उक्ति है—

मेरे अनन्य भक्त सेवा से ही अपने को परिपूर्ण मानते हैं। मेरी सेवा के फलस्वरूप जब उन्हें सालोक्य आदि चार मुक्तियाँ प्राप्त होती हैं, तब वे उन्हें भी स्वीकार करना नहीं चाहते हैं, फिर काल के चक्र से नष्ट हो जाने वाली वस्तुओं की तो बात ही क्या है ॥३८ ॥

### भक्तिसार-प्रदर्शिनी

प्रतीतं प्राप्तं कालेन विप्लुतं नष्टम्; अन्यत् स्वर्गादिकं कुत इच्छन्ति ॥ ३८ ॥

### अनुवाद

सेवा से प्राप्त सालोक्यादि चार मुक्तियों को नहीं चाहते हैं। फिर स्वर्गादि काल कवलित होने वाले को क्यों चाहेंगे? ॥ ३८ ॥

**श्रीदशमे नागपत्नीस्तुतौ (१०/१६/३७)—**

**न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥ (३९)**

### अनुवाद

श्रीमद्भागवत के दशम स्कन्ध (भा. १०/१६/३७) में नागपत्नियों ने स्तुति में कहा है—

प्रभो! जो आपके चरणों की धूल की शरण ले लेते हैं वे भक्तगण स्वर्ग को भी नहीं चाहते हैं। पृथ्वी के एकछत्र राज्य को भी नहीं चाहते हैं। न तो ब्रह्मा का पद ही लेना चाहते हैं, न रसातल का ही राज्य। उन्हें योग सिद्धियों की भी चाह नहीं होती। यहाँ तक कि वे जन्म मृत्यु से छुड़ाने वाले कैवल्य (मोक्ष) की भी इच्छा नहीं करते ॥ ३९ ॥

### दुर्गमसङ्गमनी

अत्र नाकपृष्ठमपि न वाञ्छन्ति, किमुत सार्वभौमं, पारमेष्ठ्यमपि न वाञ्छन्ति, किमुत रसाधिपत्यमिति, पूर्व्वार्धे योज्यम्; उत्तरार्धे वाशब्दोऽप्यर्थे। पादरजःशब्देन भक्तिविशेषज्ञापनया गाढ़प्रतिपत्तिर्ज्ञाप्यते ॥ ३९ ॥

### अनुवाद

जब वे स्वर्ग को ही नहीं चाहते हैं, तो फिर एकछत्र राज्य को क्यों चाहेंगे? पारमेष्ठ्य अर्थात् ब्रह्मा के पद को भी नहीं चाहते हैं तो फिर पाताल के आधिपत्य को क्यों चाहेंगे? उत्तरार्द्ध में वा शब्द अपि अर्थ में है। पाद रजः शब्द से भक्ति विशेष सूचित होने से गाढ़ प्रतिपत्ति सूचित हुआ है॥ ३९ ॥

**तत्रैव श्रीवेदस्तुतौ (भा. १०/८७/२१)—**

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः।**
**न परिलसन्ति केचिदपवर्गमपीश्वर! ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ (४०)**

### अनुवाद

वेद स्तुति (भा. १०/८७/२१) में उक्त है—

हे भगवन्! परमात्म तत्त्व का ज्ञान प्राप्त करना अत्यन्त कठिन है। उसी का ज्ञान कराने के लिए आप विविध प्रकार के अवतार ग्रहण करते हैं। और उनके द्वारा ऐसी लीला करते हैं, जो अमृत के महासागर से भी मधुर हैं और मादक भी है। जो लोक उसका सेवन करते हैं, उनकी सारी थकावट दूर हो जाती है, वे परमानन्द में मग्न हो जाते हैं। कुछ भक्त ऐसे भी होते हैं जो आपकी लीला कथाओं को छोड़कर मोक्ष की भी अभिलाषा नहीं करते। स्वर्ग आदि की तो बात ही क्या है? वे आपके चरण कमलों के परमहंस के सत्संग में जहाँ आपकी कथा होती है, इतना सुख मानते हैं कि उसके लिये इस जीवन में प्राप्त अपनी घर गृहस्थी का भी परित्याग कर देते हैं॥ ४० ॥

### दुर्गमसङ्गमनी

हे ईश्वर! दुरवगमं यदात्मनः स्वस्य भगवतस्तत्त्वं ब्रह्मानन्दाच्छादकरूपगुणलीलायाथार्थ्यम्, तस्य निगमाय निगमानाय ज्ञापनायात्ता प्रपञ्चआनीता तनुः श्रीविग्रहो येन तस्य, तव चरितमेव महामृताब्धिस्तत्र यः परिवर्त्तः मुहुः परिवृत्य प्लवनं, तेन परिश्रमणाः वर्जितसंसारश्रमास्ते। केचिद् विरलप्रचारा अपवर्गमपि नेच्छन्ति। कीदृशास्ते? तत्राहुः— ते चरणसरोजयोर्हंसानां भागवतपरमहंसाख्यानां यानि कुलानि शिष्योपशिष्यपरम्परा, तेषां सङ्गेन विसृष्टगृहाः, तन्मते प्रथमत एव प्रवृत्तास्तेऽपि। आस्तां तावत्ते हंसाः, तत्कुलानि चेत्यर्थः॥ ४० ॥

### अनुवाद

हे ईश्वर! दुर्बोध्य आत्म तत्त्व, भगवत्तत्त्व, ब्रह्मानन्द को आच्छादन करने वाले रूप गुण लीला की जो वास्तविकता है, उसको सूचित करने के लिए आप अपने श्रीविग्रह को मर्त्य भूमि पर ले आये हैं।

आपका चरित्र ही महा अमृत का समुद्र है। संसार सागर में जो लोक बारम्बार गोता लगाते लगाते थक जाते हैं, वे लोक आपके चरितामृत समुद्र में गोता लगाकर संसार के परिश्रम को भी दूर कर देते हैं।

कोई-कोई विरल प्रचार व्यक्तिगण मोक्ष को भी नहीं चाहते हैं। वे लोक किस प्रकार होते हैं? कहते हैं– वे आपके चरणकमलों के हंसगण अर्थात् भागवत परमहंस नामक व्यक्तियों के शिष्य उपशिष्यों के सङ्ग से घर को छोड़ देते हैं। उनके मत यानि दर्शन में जो अभी प्रवृत्त ही हुए हैं वे भी घर छोड़ देते हैं। वे परमहंस व उनके शिष्य-उपशिष्य घर गृहस्थी का परित्याग कर देते हैं, इसकी तो बात ही क्या है? ॥ ४० ॥

### भक्तिसार-प्रदर्शिनी

हे ईश्वर! दुरवगमं यदात्मनः स्वस्य भगवतस्तत्त्वं ब्रह्मानन्दाच्छादकरूपगुणलीलायाथार्थ्यम्, तस्य निगमायज्ञापनायात्ता प्रपञ्चआनीता तनुः श्रीविग्रहो येन तस्य तव चरितमेव महामृताब्धिस्तत्र यः परिवर्त्तः मुहुः परिवृत्य प्लवनं, तेन परिश्रमणाः वर्जितसंसारश्रमास्ते केचिद् विरलप्रचारा अपवर्गमपि नेच्छन्ति। कीदृशास्ते? तत्राहुः– ते तव चरणसरोजयोर्हंसानां भागवतपरमहंसानां यानि कुलानि शिष्योपशिष्यपरम्परा तेषां सङ्गेन विसृष्टगृहाः॥ ४० ॥

### अनुवाद

हे ईश्वर! दुर्बोध्य आत्म तत्त्व, भगवत्तत्त्व, ब्रह्मानन्द को आच्छादन करने वाले रूप गुण लीला की जो वास्तविकता है, उसको सूचित करने के लिए आप आपने श्रीविग्रह को मर्त्त्य भूमि पर ले आये हैं। आपका चरित्र ही महा अमृत का समुद्र है। संसार सागर में जो लोक बारम्बार गोता लगाते लगाते थक जाते हैं, वे लोक आपके चरितामृत समुद्र में गोता लगाकर संसार के परिश्रम को भी दूर कर देते हैं।

कोई-कोई विरल प्रचार व्यक्तिगण मोक्ष को भी नहीं चाहते हैं। वे लोक किस प्रकार होते हैं? कहते हैं– वे आपके चरणकमलों के हंसगण अर्थात् भागवत परमहंस नामक व्यक्तियों के शिष्य उपशिष्यों के सङ्ग से घर को छोड़ देते हैं॥ ४० ॥

**एकादशे श्रीभगवदुक्तौ (११/२०/३४)–**

**न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम्॥ (४१)**

### अनुवाद

एकादश स्कन्ध (भा. ११/२०/३४) में भगवान् श्रीकृष्ण की उक्ति है–

मेरे अनन्य प्रेमी एवं धैर्यवान् साधु भक्त स्वयं तो कुछ चाहते ही नहीं; यदि मैं उन्हें देना चाहता हूँ और देता भी हूँ तो भी दूसरी वस्तुओं की तो बात ही क्या वे कैवल्य मोक्ष भी नहीं लेते हैं॥ ४१ ॥

**तथा (भा. ११/१४/१४)–**

**न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाऽऽधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनाऽन्यत्॥ (४२)**

### अनुवाद

जिसने अपने को मुझे सौंप दिया है, वह मुझे छोड़कर न तो ब्रह्मा का पद चाहता है, और न देवराज इन्द्र का, उसके मन में न तो सार्वभौम सम्राट् बनने की इच्छा होती है, न वह रसातल का ही स्वामी होना चाहता है। वह योग की बड़ी बड़ी सिद्धियों और मोक्ष तक की अभिलाषा नहीं करता है॥ ४२॥

### दुर्गमसङ्गमनी

अत्र पारमेष्ठ्यादिचतुष्टयस्यानुक्रमश्चाधोऽधोविवक्षया, न्यूनत्वविवक्षया च; ततश्च पूर्ववत् कैमुत्यमपि, योगादिद्वयं तु पूर्ववत्, किं बहुना यत् किञ्चिदन्यदपि साध्यजातं तत्सर्वं नेच्छन्त्यपि, किन्तु मत् मां विना तादृशभक्तिसाध्यं मामेव सर्वपुरुषार्थाधिकमिच्छन्तीत्यर्थः, मय्यर्पितात्मा कृतात्मनिवेदनः॥ ४२॥

### अनुवाद

यहाँ पर पारमेष्ठ्यादि चारों का जो अनुक्रम है वह अधः अधः स्थिति एवं न्यूनत्व को व्यक्त करने के लिये है; इसलिये पूर्ववत कैमुत्य को भी जानना होगा। कहने का अभिप्राय यह है कि जब परमेष्ठि पद को नहीं चाहते हैं तो स्वर्ग राज्य को भला क्यों चाहेंगे? योगसिद्धि और मुक्ति को भी पहले की भाँति अप्रयोजनीय जानना होगा। अधिक क्या कहना है, इनके अतिरिक्त जो कुछ साध्यजात होता है उन सबको भी नहीं चाहते हैं। मुझको छोड़कर कुछ भी नहीं चाहते हैं। किन्तु समस्त पुरुषार्थों से अधिक भक्ति साध्य मुझको ही चाहते हैं। कारण वे मुझमें अर्पितात्मा हैं, अर्थात् वे सब मुझमें आत्म निवेदन किये हुए हैं॥ ४२॥

### भक्तिसार-प्रदर्शिनी

किं बहुना? यत् किञ्चिदन्यदपि साध्यजातम्, तत्सर्वं नेच्छन्त्येव, किन्तु मत् मां विना तादृशभक्तिसाध्यं मामेव सर्वपुरुषार्थाधिकमिच्छतीति भावः, मय्यर्पितात्मा कृतात्मनिवेदनः॥ ४२॥

### अनुवाद

अधिक क्या कहना है, इनके अतिरिक्त जो कुछ साध्यजात होता है उन सबको भी नहीं चाहते हैं। मुझको छोड़कर कुछ भी नहीं चाहते हैं। किन्तु समस्त पुरुषार्थों से अधिक भक्ति साध्य मुझको ही चाहते हैं। कारण वे मुझमें अर्पितात्मा हैं, अर्थात् वे सब मुझमें आत्म निवेदन किये हुए हैं॥ ४२॥

**द्वादशे श्रीरुद्रोक्तौ (१२/१०/६)—**

**नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत।**
**भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये॥ (४३)**

### अनुवाद

द्वादश स्कन्ध (भा. १२/१०/६) मे श्रीरुद्र की उक्ति है—

ये ब्रह्मर्षि कुछ भी नहीं चाहते हैं। यहाँ तक कि मोक्ष को भी। इसका कारण यह है कि इन्होंने अव्यय, अविनाशी भगवान् में शुद्ध भक्ति प्राप्त कर ली है॥ ४३॥

**पद्मपुराणे च कार्त्तिकमाहात्म्ये (दामोदराष्टके)—**

**वरं देव! मोक्षं न मोक्षावधिं वा, न चान्यं वृणेऽहं वरेशादपीह।**
**इदं ते वपुर्नाथ! गोपालबालं, सदा मे मनस्याविरास्तां किमन्यैः?॥ (४४)**

### अनुवाद

पद्मपुराण के कार्तिक माहात्म्य (दामोदराष्टक) में उक्त है—

हे देव! मैं मोक्ष किंवा मोक्ष को अवधि करके जितनी वस्तुएं या अन्य कोई वर, इन सबके दाता शिरोमणि आपसे इन्हें नहीं चाहता हूँ। हे नाथ! तुम्हारा यह गोपालबाल स्वरूप मेरे मन में निरन्तर आविर्भूत हों। अन्य वर की क्या आवश्यकता है॥ ४४॥

### दुर्गमसङ्गमनी

मोक्षावधिं मोक्षञ्चेति, नरकादिमोक्षास्तु तत्र के वराका इति भावः॥ ४४॥

### अनुवाद

धर्म, अर्थ, काम को मैं नहीं चाहता हूँ, मोक्ष को भी नहीं चाहता हूँ। नरकादि मोक्ष अति क्षुद्र है, उसको क्या चाहना है॥ ४४॥

### अर्थरत्नाल्प-दीपिका

वरमिति— मोक्षं न वृणे मोक्षावधिं धर्मार्थकामरूपं वाऽन्यं वरञ्च न वृणे॥ ४४॥

### अनुवाद

मैं मोक्ष नहीं चाहता हूँ; मोक्ष की अवधि वैकुण्ठ, धर्म, अर्थ, कामरूप या अन्य वर को भी नहीं चाहता हूँ॥ ४४॥

### भक्तिसार-प्रदर्शिनी

मोक्षमेवं मोक्ष एवावधिर्येषां तान् धर्मार्थकामानप्यहं न वृणे॥ ४४॥

### अनुवाद

मोक्ष है शेष सीमा जिन सबकी उन धर्म, अर्थ व काम को भी मैं नहीं चाहता हूँ॥ ४४॥

**कुबेरात्मजौ बद्धमूर्त्त्यैव यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च।**
**तथा प्रेमभक्तिं स्वकां मे प्रयच्छ, न मोक्षे ग्रहो मेऽस्ति दामोदरेह॥ (४५)**

### अनुवाद

आपने बद्ध अवस्था में कुबेर के पुत्र युगल को मुक्त करके भक्तिमान् बनाया है। उस प्रकार निज प्रेम भक्ति मुझको भी दान करो। हे दामोदर! मुक्ति के लिए मेरा आग्रह नहीं है॥ ४५॥

### भक्तिसार-प्रदर्शिनी

कुबेरात्मजौ नलकूवरमणिग्रीवौ॥ ४५॥

### अनुवाद

नलकूवर और मणिग्रीव नामक कुबेर के पुत्र युगल को दामोदर मुक्तकर भक्तिमान् किये थे॥ ४५॥

हयशीर्ष-श्रीनायणव्यूहस्तवे च—

न धर्म्मं काममर्थं वा मोक्षं वा वरदेश्वर!।
प्रार्थये तव पादाब्जे दास्यमेवाभिकामये॥ (४६)

### अनुवाद

हयशीर्ष पञ्चरात्र के श्रीनारायण व्यूह स्तव में उक्त है—

हे वरदेश्वर! मैं धर्म, अर्थ, काम वा मोक्ष की प्रार्थना नहीं करता हूँ। आपके चरणकमलों के दास्य की ही कामना करता हूँ॥ ४६॥

### भक्तिसार-प्रदर्शिनी

न धर्ममिति; ॥ ४६॥

### अनुवाद

धर्म, अर्थ, काम वा मोक्ष की प्रार्थना नहीं करता हूँ। केवल आपके चरणकमलों के दास्य की ही कामना करता हूँ॥ ४६॥

तत्रैव —

पुनः पुनर्वरान् दित्सुर्विष्णुर्मुक्तिं न याचितः।
भक्तिरेव वृता येन प्रह्लादं तं नमाम्यहम्॥ (४७)

### अनुवाद

वहीं पर (हयशीर्ष पञ्चरात्र के श्रीनारायण व्यूह स्तव में) उक्त है—

उन प्रह्लाद को नमस्कार करता हूँ, जिन्होंने बारम्बार वर देने के इच्छुक श्रीविष्णु से मुक्ति नहीं माँगी; भक्ति ही ग्रहण की॥ ४७॥

### दुर्गमसङ्गमनी

विष्णुर्न याचित इति दुहादौ गौणकर्मण एव विष्णोर्वाच्यत्वात् प्रथमा विभक्तिरेव, वृतेत्यत्र वृणोतेरपि तदादित्वे मुख्यकर्म्मणो भक्तेरुक्तत्वमार्षम्॥ ४७॥

### अनुवाद

दुहादिनीवहादि धातु द्विकर्मक होते हैं। ये गण इस प्रकार हैं—

दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चित्रो
ब्रूवि-शासि-जि-दण्डि-वृ-मन्थि वदः।
इति तूभय कर्म दुहादि भवे-
दथ नी-वहि-हृञ्-कृषि मुख्यमपि॥ (श्रीहरिनामामृत व्याकरण)

उक्त में सर्वत्र प्रथमा विभक्ति होती है। दुहादि में गौण कर्म उक्त होने का विधान होने के कारण न याचित के योग से दुहादि का गौण कर्म विष्णु उक्त हुआ, एवं विष्णु में प्रथमा विभक्ति हुयी।

'वृता' यहाँ पर वृणोते वृञ् धातु के योग से मुख्य कर्म भक्ति का उक्त होना आर्ष प्रयोग है॥ ४७॥

## अर्थरत्नाल्प-दीपिका

विष्णुर्न याचित इति याचतेर्दुहादित्वाद् गौणकर्मण एव विष्णोः प्रत्ययेनोक्तत्वात् प्रथमा, भक्तिरेव वृता याचिता। अत्र प्रथमार्षो द्विकर्मकस्य विवक्षाभावात्; विष्णोर्भक्तिर्वृतेति वा योज्यम्॥ ४७॥

## अनुवाद

विष्णुर्नयाचितः, यहाँ पर याचि धातु दुहादिगण पठित होने के कारण गौण कर्म विष्णु उक्त हुआ है अतः प्रथमा विभक्ति का प्रयोग हुआ है। भक्तिरेव वृता याचिता— यहाँ पर प्रथमा विभक्ति होना आर्ष प्रयोग है। कारण, द्विकर्मक कहने का उद्देश्य नहीं रहा।

किम्वा "विष्णोर्भक्तिर्वृता" इस प्रकार योजना करना उचित है॥ ४७॥

## भक्तिसार-प्रदर्शिनी

विष्णुर्न याचित इति दुहादेर्गौणकर्मण एव विष्णोरुक्तत्वात् प्रथमा। भक्तिरेव वृतेत्यत्र द्वितीयकर्मणोऽविवक्षितत्वादेव मुख्यकर्मणो भक्तेरुक्तत्वम्॥ ४७॥

## अनुवाद

दुहादिगण का प्रयोग होने के कारण गौण कर्म विष्णु उक्त हुआ एवं प्रथमा विभक्ति हुयी।

"भक्तिरेव वृता" यहाँ पर द्वितीय कर्म का अकथन होने के कारण मुख्य कर्म भक्ति ही उक्त हुयी है॥ ४७॥

**यदृच्छया लब्धमपि विष्णोर्दाशरथेस्तु यः।**
**नैच्छन्मोक्षं विना दास्यं तस्मै हनुमते नमः॥** (४८)

## अनुवाद

अनायास प्राप्त होने पर भी विष्णु दाशरथि (दशरथनन्दन राम) से दास्य के विना मोक्ष को नहीं लिये। मैं उन हनुमान् को प्रणाम करता हूँ॥ ४८॥

**अतएव प्रसिद्धं श्रीहनुमद्वाक्यम्—**

**भवबन्धच्छिदे तस्यै स्पृहयामि न मुक्तये।**
**भवान् प्रभुरहं दास इति यत्र विलुप्यते॥** (४९)

## अनुवाद

अतएव श्रीहनुमान का प्रसिद्ध वाक्य है—

'आप प्रभु हैं और मैं आपका दास हूँ' इस प्रकार सम्बन्ध का जहाँ पर लोप हो जाता है उस भवबन्ध छेदनकारी मुक्ति को मैं नहीं चाहता हूँ॥ ४९॥

## भक्तिसार-प्रदर्शिनी

भवबन्धच्छेदिकायै तस्यै मुक्त्यै अहं न स्पृहयामि, यत्र मुक्तौ॥ ४९॥

### अनुवाद

भवबन्धन छेदनकारी उस मुक्ति को मैं नहीं चाहता हूँ जिसमें आप प्रभु हैं, मैं आपका दास हूँ, इस प्रकार सम्बन्ध का विलोप हो जाता है॥ ४९॥

**श्रीनारदपञ्चरात्रे च जितन्ते-स्तोत्रे—**

**धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन।**
**त्वत्पादपङ्कजस्याधो जीवितं दीयतां मम॥ (५०)**

### अनुवाद

श्रीनारदपञ्चरात्र के जितन्त स्तोत्र में कहा गया है—

धर्म, अर्थ, काम और मोक्ष में कभी भी मेरी इच्छा नहीं है। आप अपने चरण कमल जो कि मेरे जीवन सर्वस्व हैं, उसके नीचे मेरा स्थान दीजिये॥ ५०॥

### भक्तिसार-प्रदर्शिनी

जीवितम् जीवनम्— तथा च तं विना मम जीवनमेव मास्तु इत्यर्थः॥ ५०॥

### अनुवाद

जीवितम् अर्थात् मेरे जीवन सर्वस्व हैं, उसके बिना मेरा जीवन नहीं रहेगा॥ ५०॥

**मोक्षसालोक्यसारूप्यान् प्रार्थये न धराधर!।**
**इच्छामि हि महाभाग! कारुण्यं तव सुव्रत!॥ (५१)**

### अनुवाद

हे धराधर! हे महाभाग! हे सुव्रत! मैं मोक्ष, सालोक्य, सारूप्यादि की प्रार्थना नहीं करता हूँ, केवल तुम्हारी करुणा को चाहता हूँ॥ ५१॥

**अतएव श्रीभागवते षष्ठे (६/१४/५)—**

**मुक्तानामपि सिद्धानां नारायणपरायणः।**
**सुदुर्ल्लभः प्रशान्तात्मा कोटिष्वपि महामुने!॥ (५२)**

### अनुवाद

इसीलिये श्रीभागवत के षष्ठ स्कन्ध (६/१४/५) में कहा गया है—

हे महामुने! कोटि-कोटि मुक्तगणों एवं सिद्धगणों में भी नारायण की सेवा मात्र को चाहने वाला प्रशान्तात्मा व्यक्ति सुदुर्ल्लभ होता है॥ ५२॥

### दुर्गमसङ्गमनी

मुक्तानां प्राकृतशरीरस्थत्वेऽपि तदभिमानशून्यानाम्। सिद्धानां प्राप्तसालोक्यादीनाञ्च, कोटिष्वपि मध्ये नारायणसेवामात्राकाङ्क्षी सुदुर्ल्लभः॥ ५२॥

## अनुवाद

मुक्तानां अर्थात् जो प्राकृत शरीर में रहते हुए भी शरीर के अभिमान से रहित हैं; एवं सिद्धानां अर्थात् जिन्होंने सालोक्यादि को प्राप्त कर लिया है; ऐसे करोड़ों-करोडों के मध्य नारायण की सेवामात्र की आकाङ्क्षा करने वाला सुदुर्लभ है॥ ५२॥

## अर्थरत्नाल्प-दीपिका

यत एषां मोक्षेच्छा कदापि नास्त्यत एवैते पञ्चविधमुक्तेषु सुदुर्लभा इत्याह— अतएव 'श्रीभागवते षष्ठ' इत्यादि श्लोकत्रय्या मुक्तानां देहस्थत्व एव प्राप्तब्रह्मभावानां प्राप्तसालोक्यादिचतुर्धामुक्तानामपि कोटिषु मध्ये॥ ५२॥

## अनुवाद

इन सबकी मुक्ति की इच्छा कभी भी नहीं है अतः पञ्चविध मुक्तों के मध्य में भी नारायण परायण व्यक्ति सुदुर्लभ है। अतएव श्रीभागवत के तीन श्लोकों (६/१४/३-५) से कहते हैं कि प्राकृत शरीर में स्थित रहते हुए भी ब्रह्मभाव को प्राप्त; और सालोक्य, सार्ष्टि, सारूप्य, सामीप्य नामक चार प्रकार की मुक्तियों को प्राप्त करने वाले कोटि-कोटि के मध्य में नारायण परायण व्यक्ति सुदुर्लभ है।

श्रीभागवत (६/१४/३-५) का यह प्रसङ्ग इस प्रकार है—

रजोभिः सम संख्याताः पार्थिवैरिह जन्तवः।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः॥

भगवन्! इस जगत् के प्राणी पृथिवी के धूलि कणों के समान ही असंख्य हैं। उनमें से कुछ मनुष्य आदि श्रेष्ठ जीव ही अपने कल्याण की इच्छा करते हैं।

प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम।
मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्ध्यति॥

ब्राह्मणों में श्रेष्ठ! उनमें भी संसार से मुक्ति चाहने वाले तो विरल ही होते हैं। और मोक्ष चाहने वाले हजारों में मुक्ति या सिद्धि लाभ तो कोई विरला ही कर पाता है।

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्ल्लभः प्रशान्तात्मा कोटिष्वपि महामुने!॥

हे महामुने! कोटि-कोटि मुक्तगणों एवं सिद्धगणों में भी नारायण की सेवा मात्र को चाहने वाला प्रशान्तात्मा व्यक्ति सुदुर्ल्लभ होता है॥ ५२॥

## भक्तिसार-प्रदर्शिनी

मुक्तानां प्राकृतशरीरस्थत्वेऽपि तदभिमानशून्यानाम्; सिद्धानां प्राप्तसालोक्यादीनाञ्च; कोटिष्वपि मध्ये नारायणसेवामात्राकाङ्क्षी सुदुर्ल्लभः॥ ५२॥

## अनुवाद

मुक्तानां अर्थात् जो प्राकृत शरीर में रहते हुए भी शरीर के अभिमान से रहित हैं; एवं सिद्धानां

अर्थात् जिन्होंने सालोक्यादि को प्राप्त कर लिया है; ऐसे करोड़ों-करोडों के मध्य नारायण की सेवामात्र की आकाङ्क्षा करने वाला सुदुर्लभ है॥ ५२॥

**प्रथमे च श्रीधर्म्मराजमातुः स्तुतौ (१/८/२०)—**

**तथा परमहंसानां मुनीनाममलात्मनाम्।**
**भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः? ॥　(५३)**

## अनुवाद

प्रथम स्कन्ध (भा १/८/२०) में श्रीधर्मराज की माता कुन्तीदेवी की स्तुति में उक्त है—

आप शुद्ध हृदय वाले विचारशील जीवन्मुक्त परमहंसों के हृदय में अपनी प्रेममयी भक्ति का सृजन करने के लिए अवतीर्ण हुए हैं; फिर हम अल्प बुद्धि स्त्रियाँ आपको कैसे पहचान सकती हैं?॥५३॥

## दुर्गमसङ्गमनी

तदेवं ''श्रीकृष्णचरणाम्भोजसेवानिर्वृतचेतसाम्'' इत्यनेन (भ.र.सि. १/२/२५) तत्सेवासुखैकस्पृहिणां यन्मोक्षस्पृहा नास्तीत्युक्तं, तत्र प्रमाणानि विवृतानि, अथ तादृशेषु तस्य च स्वसेवादान एव प्रयत्न इत्याह— ''प्रथमे'' इत्यनन्तरं तथा परमेत्यनेन। परमहंसानां भक्तियोगविधानमर्थः प्रयोजनं यस्य तं त्वामिति शेषः। पश्येमहि जानीमहि॥ ५३॥

## अनुवाद

श्रीकृष्णचरणाम्भोज सेवा निर्वृतचेतसाम्।
एषां मोक्षाय भक्तानां न कदापि स्पृहा भवेत्॥

श्रीकृष्ण के चरण कमलों के सेवा के महासुख में निमग्नचित्त भक्तगणों को भगवान् के देने के इच्छुक होने पर भी मोक्ष प्राप्त करने की इच्छा कभी भी नहीं होती है (भ.र.सि. १/२/२५)। भगवान् के सेवा सुख को चाहने वाले को मोक्ष स्पृहा नहीं होती है; इस प्रकार कहा गया है। इस विषय में अनेक प्रमाण भी दिखाया गया है।

अब इस प्रकार के व्यक्तियों में निज सेवादान करने के लिए ही भगवान् का जो प्रयत्न होता है उसको प्रथम स्कन्ध के ८वें अध्याय के २०वें श्लोक में कुन्तीदेवी की स्तुति में कहते हैं—

"तथा परमहंसानां मुनीनाममलात्मनाम्।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥"

"परमहंस लोगों के लिये भक्तियोग का विधान करना ही आपका अर्थ अर्थात् प्रयोजन होता है; अतः आप भगवान् को हम अल्पबुद्धि स्त्रियाँ भला कैसे जान सकती हैं?"

यहाँ 'त्वाम्' अर्थात् 'आपको' अलग से ग्रहण करना है।

पश्येमहि अर्थात् जान सकती हैं॥ ५३॥

## अर्थरत्नाल्प-दीपिका

परमहंसानां जीवन्मुक्तानां भक्तियोगविधानार्थमर्थो यस्य तं त्वामिति शेषः॥ ५३॥

### अनुवाद

परमहंस अर्थात् जीवन्मुक्त व्यक्तियों को भक्तियोग विधान करना ही जिनका प्रयोजन है; इस प्रकार के व्यक्ति आपको हम सब स्त्रियाँ भला कैसे जान सकती हैं? यहाँ 'त्वाम्' अर्थात् 'आपको' अलग से ग्रहण कर लेना है॥ ५३॥

### भक्तिसार-प्रदर्शिनी

तदेवं ''श्रीकृष्णचरणाम्भोजसेवानिर्वृतचेतसाम्'' इत्यनेन (भ.र.सि. १/२/२५) तत्सेवासुखैकस्पृहिणां यन्मोक्षस्पृहा नास्तीत्युक्तं, तत्र प्रमाणानि विवृतानि। इदानीं तादृशभक्तेषु भगवतश्च स्वसेवादान एवाभिप्राय इत्याह— प्रथमेत्यनन्तरं तथा परमेत्यनेन। परमहंसानां भक्तियोगविधानमेवार्थः प्रयोजनं यस्य तं त्वामित शेषः॥ ५३॥

### अनुवाद

श्रीकृष्ण चरणाम्भोज सेवा निर्वृतचेतसाम्।
एषां मोक्षाय भक्तानां न कदापि स्पृहाभवेत्॥

श्रीकृष्ण के चरण कमलों के महासुख में निमग्न चित्त भक्तगणों को भगवान् के देने के इच्छुक होने पर भी मोक्ष प्राप्त करने की इच्छा कभी भी नहीं होती है (भ.र.सि. १/२/२५)। भगवान् के सेवा सुख को चाहने वाले को मोक्ष स्पृहा नहीं होती है; इस प्रकार कहा गया है। इस विषय में अनेक प्रमाण भी दिखाया गया है।

अब इस प्रकार के भक्तों में निज सेवादान करने के लिए ही भगवान् का जो अभिप्राय होता है, उदाहरणार्थ उसको प्रथम स्कन्ध के ८वें अध्याय के २०वें श्लोक में कुन्तीदेवी की स्तुति में इस प्रकार कहा गया है—

"तथा परमहंसानां मुनीनाममलात्मनाम्।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥"

"परमहंस लोगों के लिये भक्तियोग का विधान करना ही आपका अर्थ अर्थात् प्रयोजन होता है; अतः आप भगवान् को हम अल्पबुद्धि स्त्रियाँ भला कैसे जान सकती हैं?"

यहाँ 'त्वाम्' अर्थात् 'आपको' अलग से ग्रहण करना है॥ ५३॥

**तत्रैव श्रीसूतोक्तौ (भा. १/७/१०)—**

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥ इति।** (५४)

### अनुवाद

वहीं पर (भा. १/७/१०) ही श्रीसूत की उक्ति है—

श्रीहरि के गुण समूह ही इस प्रकार हैं कि आत्माराम मुनिगण एवं निवृत्त हृदयग्रन्थि मुनिगण भी उनकी अहैतुकी भक्ति करते रहते हैं॥ ५४॥

## दुर्गमसङ्गमनी

निर्ग्रन्था विधिनिषेधात्मकग्रन्थेभ्यो निर्गता अपि॥ ५४॥

## अनुवाद

निर्ग्रन्था का अभिप्राय उन लोगों से है जो विधि-निषेधात्मक शास्त्रों से परे हो गये हैं। ऐसे लोग भी भगवान् के गुणों से आकृष्ट होकर उनकी अहैतुकी भक्ति करते हैं॥ ५४॥

## अर्थरत्नाल्प-दीपिका

आत्मारामा ब्रह्मानुभविनः निर्ग्रन्था विधिनिषेधात्मकग्रन्थेभ्यो निर्गता अपि। अत्र हेतुमाह— इत्थम्भूतगुण इत्थम्भूता आत्मारामादिकर्षका गुणा यस्य स तथा, आत्मारामाः स्वतो भक्तिकरणायोग्या भगवान् तानपि कृपया गुणैराकृष्य भक्तिं कारयितुमवतरति स्म अहो भक्तानां दौर्लभ्यमिति भावः ॥ ५४॥

## अनुवाद

आत्माराम वे हैं जिन्होंने ब्रह्म का अनुभव किया है। निर्ग्रन्था— जो विधि-निषेधात्मक ग्रन्थों से अपने को बाहर कर चुके हैं। इसका कारण कहते हैं— इस प्रकार ही श्रीहरि के गुण हैं। आत्मारामादि आकर्षक गुण है जिनका, इस प्रकार श्रीहरि हैं। आत्मारामगण स्वतः भक्ति करने में अयोग्य होते हैं। भगवान् उन सबको भी कृपा पूर्वक गुणों के द्वारा आकर्षण करके भक्ति करवाने के लिये अवतीर्ण होते हैं। अहो! भक्तों की कैसी दुर्ल्लभता है?॥ ५४॥

## भक्तिसार-प्रदर्शिनी

निर्ग्रन्था विधिनिषेधात्मकग्रन्थेभ्यो निर्गता अपि, इत्थम्भूत आत्मारामाकर्षकगुणो यस्य सः॥ ५४॥

## अनुवाद

विधि-निषेधात्मक ग्रन्थों से जो लोक अपने को बाहर कर चुके हैं, वे भी श्रीहरि के प्रति भक्ति करते हैं। इस प्रकार आत्माराम आकर्षक जिनका गुण है वह हैं श्रीकृष्ण॥ ५४॥

**अत्र त्याज्यतयैवोक्ता मुक्तिः पञ्चविधापि चेत्।**
**सालोक्यादिस्तथाप्यत्र भक्त्या नातिविरुध्यते॥ (५५)**

## अनुवाद

इस भक्ति प्रकरण में यद्यपि पञ्चविध मुक्तियों का त्याज्य रूप से कथन हुआ है; तथापि सालोक्यादि अर्थात् सालोक्य, सार्ष्टि, सारूप्य और सामीप्य ये चार प्रकार की मुक्तियाँ भक्ति मार्ग में अतिशय विरुद्ध नहीं हैं॥ ५५॥

## दुर्गमसङ्गमनी

अत्र त्याज्येति— अपि चेद्यद्यपि, तथापि सालोक्यादिः सालोक्यसार्ष्टिसामीप्यसारूप्यरूपा नातिशयेन विरुध्यते, किन्तु केनाप्यंशेन विरुध्यते, प्रतिकूलतया भाव्यत इति तत्र तत्र भक्तिश्रवणात्॥ ५५॥

## अनुवाद

अपि चेत् का अर्थ है– यद्यपि। तथापि सालोक्य-सार्ष्टि-सामीप्य-सारूप्य रूपा चार प्रकार की मुक्तियाँ सर्वांश में विरुद्ध नहीं हैं; किन्तु किसी एक अंश में प्रतिकूल होती हैं। वहाँ पर भी भक्ति होती है, प्रतिकूल अंश को छोड़कर॥ ५५॥

## अर्थरत्नाल्प-दीपिका

अत्रेति; अपि चेत् यद्यपि सालोक्यादिश्चतुर्विधा नातिविरुध्यते, केनाप्यंशेन प्रतिकूला भवति केनापि नेत्यर्थः। ऐक्यरूपा तु सर्वांशेनैव॥ ५५॥

## अनुवाद

यहाँ अपि चेत् का अर्थ है– यद्यपि। सालोक्यादि चार प्रकार की मुक्ति भक्ति के अतिशय विरुद्ध नहीं हैं। अभिप्राय यह है कि ये चारो किसी एक अंश में प्रतिकूल होती हैं, किसी अंश में प्रतिकूल नहीं होती हैं। ऐक्य रूपा मुक्ति तो सर्वांश में ही प्रतिकूल होती है॥ ५५॥

## भक्तिसार-प्रदर्शिनी

अत्र त्याज्येति; अपि चेद्यद्यपि, तथापि सालोक्यादिः सालोक्यसार्ष्टिसामीप्यसारूप्यरूपा नातिशयेन विरुध्यते– तत्र तत्र भक्तिश्रवणात् नात्यन्तविरोधश्च॥ ५५॥

## अनुवाद

यहाँ अपि चेत् का अर्थ है– यद्यपि। तथापि सालोक्यादिः अर्थात् सालोक्य, सार्ष्टि, सामीप्य और सारूप्यरूपा मुक्ति भक्ति के साथ अतिशय विरुद्ध नही है; वहाँ पर भी भक्ति होती है, ऐसा सुनने में आता है। इसलिये इनका भक्ति से अत्यन्त विरोध नहीं है॥ ५५॥

**सुखैश्वर्य्योत्तरा सेयं प्रेमसेवोत्तरेत्यपि।**
**सालोक्यादिर्द्विधा तत्र नाद्या सेवाजुषां मता॥ (५६)**

## अनुवाद

यह सालोक्यादि मुक्ति दो प्रकार की होती है– सुखैश्र्वयोत्तरा एवं प्रेमसेवोत्तरा। इनमें प्रथम सुखैश्वर्योत्तरा मुक्ति को सेवापरायण भक्त नहीं चाहते हैं॥ ५६॥

## दुर्गमसङ्गमनी

तत्रातिशब्दप्रतिपाद्यमाह, सुखेति– तल्लोकादिस्वभावजं सुखमैश्वर्यम् उत्तरं प्राधान्येन वाञ्छनीयं यस्यां सा, प्रेम्णा प्रेमस्वाभाव्येन सेवैव उत्तरा यस्यां सा, तत्र नाद्या सेवाजुषां मतेति ''सालोक्यसार्ष्टिसामीप्ये''त्याद्युक्तत्वात्। तत्र सालोक्यादिचतुष्टयं सेवनं विनाभूतं चेत् तर्हि न गृह्णन्त्येवेत्यर्थः। एकत्वं तु नित्यं, तद्विनाभूतत्वात् न गृह्णन्त्येवेत्यर्थः। तच्चेश्वरे ब्रह्मणि च सायुज्यं ज्ञेयम्॥ ५६॥

### अनुवाद

पूर्व्वोक्त श्लोक में अति शब्द के प्रतिपाद्य विषय को कहते हैं— सुखैश्वर्योत्तरा इत्यादि। सुखैश्वर्योत्तरा मुक्ति वह है जिसमें उन लोकादि के स्वाभाविक सुख और ऐश्वर्य की प्राधान्य रूप में इच्छा होती है। तथा प्रेमसेवोत्तरा मुक्ति वह है जिसमें प्रेम स्वभाव के कारण सेवा की ही प्रधानता रहती है। इन दोनों में से प्रथम सुखैश्वर्योत्तरा को सेवा परायण जन नहीं चाहते हैं। इसको सालोक्यसार्ष्टिसामीप्य इत्यादि पूर्व में कथित श्लोक से जाना जा सकता है। इनमें से सालोक्यादि चार प्रकार की मुक्तियाँ यदि सेवा रहित होती हैं तो उनको ग्रहण नहीं करते हैं। किन्तु एकत्व मुक्ति को सदा सेवा विहीन होने के कारण कभी भी ग्रहण नहीं करते हैं। ईश्वर और ब्रह्म में सायुज्य (मिल जाना) को एकत्व कहते हैं॥ ५६॥

### अर्थरत्नाल्प-दीपिका

नातिविरुध्यते इति विविच्य दर्शयति,— सुखेति। ऐश्वर्य्यप्रधानगुणप्रकाशि श्रीपरव्योमनाथादीनामैश्वर्य्यप्रधानेषु लोकेषु तेषां सेवामुपसर्जनीकृत्य सुखैश्वर्य्यप्रधानतया सालोक्यादीनां स्थितिः सुखैश्वर्य्योत्तरा मुक्तिः। सुखैश्वर्य्ये उपसर्जनीकृत्य तत्सेवाप्रधानतया तत्र स्थितिः प्रेमसेवात्तरा सा। सेवाजुषां सेवायां प्रीतिमतां श्रीमार्कण्डेयादीनाम्॥ ५६॥

### अनुवाद

पूर्व के श्लोक में 'नातिविरुध्यते' कहा गया है; उसी को विस्तार करके दिखा रहे हैं— ऐश्वर्य प्रधान गुण को प्रकाश करने वाले श्रीपरव्योमनाथ आदि के ऐश्वर्य प्रधान लोक में उनकी सेवा को गौण करके सुख ऐश्वर्य को मुख्य करके रहने के कारण यह सालोक्यादि मुक्ति सुखैश्वर्योत्तरा कहलाती है। और जब सुख ऐश्वर्य को गौण करके भगवान् की सेवा की प्रधानता से वहाँ स्थिति होती है तो वह मुक्ति प्रेमसेवोत्तरा कहलाती है।

सेवाजुषां का अर्थ है— सेवा में प्रीतिशील। श्रीमार्कण्डेय आदि इसी प्रकार के भक्त हैं॥ ५६॥

### भक्तिसार-प्रदर्शिनी

तत्रातिशब्दप्रतिपाद्यमाह— सुखैरिति। तल्लोकादिस्वभावजं सुखमैश्वर्यञ्चोत्तरं प्राधान्येन वाञ्छनीयं यस्यां सा। प्रेम्णः स्वाभाव्येन सेवोत्तरा प्राधान्येन वाञ्छनीया यस्यां सा। तत्र नाद्या सेवाजुषां मतेति भगवत्सुखतात्पर्येण सेवाजुषां भक्तानां स्वस्य सुखैश्वर्योत्तरा मुक्तिर्न मता— न सम्मता। तत्र सालोक्यादिचतुष्टयं सेवनं विनाभूतं चेत्तर्हि न गृह्णन्ति, एकत्वन्तु सर्वथा तद्विनाभूतत्वान्न गृह्णन्त्येवेत्यर्थः। एकत्वन्त्वीश्वरे ब्रह्मणि च सायुज्यरूपं ज्ञेयम्॥ ५६॥

### अनुवाद

पूर्व्वोक्त श्लोक में अति शब्द के प्रतिपाद्य विषय को कहते हैं— सुखैश्वर्योत्तरा इत्यादि। सुखैश्वर्योत्तरा मुक्ति वह है जिसमें उन लोकादि के स्वाभाविक सुख और ऐश्वर्य की प्राधान्य रूप में इच्छा होती है। तथा प्रेमसेवोत्तरा मुक्ति वह है जिसमें प्रेम स्वभाव के कारण सेवा की ही प्राधान्य रूप में

इच्छा रहती है। इन दोनों में से प्रथम सुखैश्वर्योत्तरा को सेवाकाङ्क्षी जन नहीं चाहते हैं। उन सबका तात्पर्य भगवत् सुख में होता है; अतः स्वसुख तात्पर्यमयी मुक्ति में उन सबकी सम्मति नहीं होती है।

सालोक्यादि चार प्रकार की मुक्तियाँ यदि सेवा रहित होती हैं तो उनको ग्रहण नहीं करते हैं। किन्तु एकत्व मुक्ति को सदा सेवा विहीन होने के कारण कभी भी ग्रहण नहीं करते हैं। ईश्वर और ब्रह्म में सायुज्य को एकत्व कहते हैं॥ ५६॥

**किन्तु प्रेमैकमाधुर्य्यजुष एकान्तिनो हरौ।**
**नैवाङ्गीकुर्व्वते जातु मुक्तिं पञ्चविधामपि॥** (५७)

### अनुवाद

किन्तु श्रीहरि के एकान्ती भक्तजन एकमात्र प्रेम माधुर्य का आस्वादक होने के कारण पञ्चविध मुक्ति को भी कभी भी स्वीकार नहीं करते हैं॥ ५७॥

### दुर्गमसङ्गमनी

नैवाङ्गीकुर्वत इति 'प्रेमसेवोत्तरे'त्युत्तरशब्दोपादानादन्यांशस्यापि सद्भावापत्तेः, तत्रान्यांशं नेच्छन्तीत्यर्थः। "मत्सेवया प्रतीतन्ते" इत्यादौ तु प्रथमा सेवा साधनरूपा, द्वितीया तु तया सिद्धरूपा, प्रतीतमानुषङ्गिकतया प्राप्तमपि सालोक्यादिचतुष्टयं तद्गतसुखैश्वर्य्यादिकन्तु नेच्छन्तीत्यर्थः। ततः साक्षात्तदीयसेवयैव पूर्णा लब्धपरमानन्दाः। सेवा ह्येषा सालोक्यादिकमपेक्षत एव, एतच्च न वाञ्छन्ति चेत्, कैमुत्येनैक्यं सालोक्यादिभ्यो यदन्यत्तत्तु कालविप्लुतमेव, तद्वा कथं वाञ्छन्त्वित्यर्थः॥ ५७॥

### अनुवाद

पञ्चविधा मुक्ति को एकान्ती भक्तजन स्वीकार नहीं करते हैं; इसका कारण कहते हैं— प्रेमसेवोत्तरा में उत्तर शब्द देने के कारण अन्यांश (सुख और ऐश्वर्य की इच्छा) भी रह जाता है, किन्तु एकान्ती भक्तगण अन्यांश की बिल्कुल इच्छा नहीं करते हैं।

नवम स्कन्ध के चतुर्थ अध्याय के ६७ वें श्लोक में श्रीवैकुण्ठ नाथ ने कहा है—

"मत् सेवया प्रतीतं च सालोक्यादिचतुष्टयम्।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम्॥"

"मेरे अनन्य प्रेमी भक्त सेवा से ही अपने को पूर्ण कृत-कृत्य मानते हैं। मेरी सेवा के फलस्वरूप जब उन्हें सालोक्य सारूप्य आदि मुक्तियाँ प्राप्त होती हैं, तब वे उन्हें भी स्वीकार नहीं करते। फिर समय के फल से नष्ट हो जाने वाली वस्तुओं की तो बात ही क्या है?"

प्रथम सेवा साधन रूपा, द्वितीया उसके द्वारा सिद्ध रूपा होती है। प्रतीतं— आनुषङ्गिक रूप से प्राप्त होने पर भी सालोक्यादि चार को एवं उसके सुख-ऐश्वर्य आदि को नहीं चाहते हैं। यही मत्सेवया इत्यादि श्लोक का तात्पर्य है। वे भक्तगण साक्षात् भगवत् सेवा से ही पूर्ण एवं परमानन्द में विभोर रहते हैं।

सेवा करने के लिए सालोक्यादि की आवश्यकता होती है, यदि इसको भी नहीं चाहते हैं, तो

एकता को भला कैसे चाहेंगे? यदि सालोक्यादि को नहीं चाहते हैं तो जो काल कवलित हो जाते हैं, उन स्वर्गादि को क्यों चाहेंगे? ॥ ५७ ॥

## अर्थरत्नाल्प-दीपिका

किन्तु हरौ एकान्तिनस्तदेकनिष्ठाः श्रीमदुद्धवपाण्डवहनुमदादयः। किंरूपास्ते? तत्राह— प्रेमैकेति। दासादिसम्बन्धिप्रेमसेवामात्रास्वादकाः॥ ५७ ॥

## अनुवाद

किन्तु श्रीहरि के एकान्ति-एकनिष्ठ श्रीमदुद्धव पाण्डव हनुमत् आदि भक्तगण मुक्ति को नहीं चाहते हैं। वे सब किस प्रकार होते हैं? इसके लिए कहते हैं— एकमात्र प्रेमसेवा माधुर्य परायण हैं। दास्य आदि भाव से प्रेम सेवा मात्र का आस्वादनकारी हैं॥ ५७ ॥

## भक्तिसार-प्रदर्शिनी

नैवाङ्गीकुर्वत इति— एकान्तिनो भक्ताः प्रेमसेवोत्तरामपि नैवाङ्गीकुर्वते। प्रेमसेवोत्तरेत्यत्र उत्तरशब्दोपादानेन स्वसुखतात्पर्यस्यापि गौणतया सद्भावापत्तेः। तथा च केवलप्रेमसेवार्थमेव सालोक्यमङ्गीकुर्वन्ति, न तु प्रेमसेवोत्तरार्थमपि॥ ५७ ॥

## अनुवाद

'नैवाङ्गीकुर्वते' इसका विस्तार करते हैं— एकान्तिक भक्तगण प्रेमसेवोत्तरा मुक्ति को भी नहीं स्वीकार करते हैं। प्रेमसेवोत्तरा— यहाँ पर उत्तर शब्द का प्रयोग होने से स्व-सुख तात्पर्य की स्थिति गौण रूप में रह जाती है। केवल प्रेम सेवा के लिए ही सालोक्य को ग्रहण करते हैं, किन्तु प्रेमसेवोत्तरा मुक्ति के लिए नहीं॥ ५७ ॥

**तत्राप्येकान्तिनां श्रेष्ठा गोविन्दहृतमानसाः।**
**येषां श्रीशप्रसादोऽपि मनो हर्त्तुं न शक्नुयात्॥　　(५८)**

## अनुवाद ५८

उन एकान्ति भक्तगणों के मध्य में भी श्रीगोविन्द के द्वारा हृतचित्त महाजन गण ही श्रेष्ठ हैं। परव्योम में रहने वाले महानारायण का अनुग्रह भी उन सबके मन को हरण नहीं कर सकता है॥ ५८ ॥

## दुर्गमसङ्गमनी

गोविन्दः श्रीगोकुलेन्द्रः। उपलक्षणत्वेन श्रीद्वारकानाथोऽपि, श्रीशः परव्योमाधिपः॥ ५८ ॥

## अनुवाद

यहाँ गोविन्द का अर्थ है— श्री गोकुलेन्द्र। श्रीशः उपलक्षण के द्वारा श्रीद्वारिका नाथ को भी जानना होगा। श्रीशः का अभिप्राय है— परव्योमाधिपति॥ ५८ ॥

## अर्थरत्नाल्प-दीपिका

गोविन्दो नन्दनन्दनः, श्रीशः श्रीपरव्योमेश्वरः॥ ५८॥

## अनुवाद

गोविन्द अर्थात् नन्दनन्दन जिन भक्तों के मनोहरण किये हैं, उन सबके मनोहरण श्रीश अर्थात् श्रीपरव्योमेश्वर भी नहीं कर सकते हैं॥ ५८॥

## भक्तिसार-प्रदर्शिनी

तत्राप्येकान्तिनां नानावतारभक्तानां मध्ये गोविन्दः श्रीगोकुलेन्द्रः तेन हृतमानसाः श्रेष्ठाः। श्रीशः परव्योमेशो महानारायणस्तस्यापि प्रसादोऽनुग्रहः॥ ५८॥

## अनुवाद

उन एकान्तिजनों में अर्थात् नाना अवतारों के एकान्तिक भक्तों के मध्य में भी श्रीगोकुलेन्द्र के द्वारा जिनका मनोहरण किया गया है वे श्रेष्ठ हैं। श्रीशः अर्थात् परव्योम में स्थित महानारायण का अनुग्रह भी श्रीगोविन्द के भक्तों का मनोहरण नहीं कर सकता है॥ ५८॥

**सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोः।**
**रसेनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः॥ (५९)**

## अनुवाद ५९

सिद्धान्ततः परव्योमाधिप महानारायण एवं श्रीकृष्ण के स्वरूप के मध्य में अभेद होने पर भी श्रीकृष्ण स्वरूप ही सर्वोत्कृष्ट प्रेममय रस के द्वारा उत्कर्ष मण्डित है, यही रस का स्वभाव है॥ ५९॥

## दुर्गमसङ्गमनी

रसेनेति— सर्वोत्कृष्टप्रेममयरसेनेत्यर्थः। उत्कृष्यते अन्तर्भूतण्यर्थत्वात् उत्कृष्टतया प्रकाश्यत इत्यर्थः। यतस्तस्य रसस्य एषैव स्थितिः स्वभावः, यत्कृष्णरूपमेवोत्कृष्टत्वेन दर्शयतीत्यर्थः। यथोक्तं कुरुक्षेत्रयात्रायामष्टपट्टमहिषीतरमहिषीभिः। (भा. १०/८३/४१-४३)—

"न वयं साध्वि! साम्राज्यं स्वाराज्यं भोज्यमप्युत। वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम्॥
कामयामह एतस्य श्रीमत्पादरजःश्रियः। कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मनः॥" इति। अत्र साम्राज्यं सार्वभौमं पदं। स्वाराज्यमिन्द्रपदं। भोज्यं तदुभयभोगभाक्त्वं। वैराज्यमणिमादिसिद्ध्या विराजमानत्वं। पारमेष्ठ्यं प्राजापत्यम्। आनन्त्यं "ते ये ते शत"मित्यादिश्रुतिरीत्या मनुष्यानन्दमारभ्य शतशतगुणितत्वेन प्राजापत्यानन्दस्य गणनायाः परां काष्ठां दर्शयित्वा परब्रह्मणि तु 'यतो वाचो निवर्त्तन्त' इत्यनेन यदानन्दस्यानन्त्यं दर्शितं, तदपीत्यर्थः। किं बहुना, हरेः श्रीपतेः पदं सामीप्यादिकमपि यत् तदेतत् सर्वमपि न कामयामहे, नाधीनं कर्तुमिच्छाम इत्यर्थः। तर्हि किमधिकं लब्धुं कामयध्वे? तत्राहुः, एतस्यास्मत्पतित्वेन सर्वविज्ञातस्य गदाभृतः श्रीमत्पादरज एव मूर्ध्ना वोढुं कामयामहे। तत्रापि यत् श्रियः

कुचकुङ्कुमगन्धेनाढ्यं, तद्गन्धेन प्राप्तसम्पद्विशेषं, तत्पुनरधिकं कामयामह इत्यर्थः। ननु श्रीपतेरेव पदं श्रीकुचकुङ्कुमगन्धाढ्यं तत्सामीप्यादित्यागात् तत्तु भवत्यस्त्यक्तवत्य एव। यदि श्रीरत्र रुक्मिण्यभिप्रेयते, तर्हि तत्तु भवतीनां प्राप्तमेव, तस्मात्तत्तद्विलक्षणाया एव श्रियः कुचकुङ्कुमगन्धाढ्यं तत्स्यादिति गम्यते, ततस्तदवबोधनाय पुनर्विशिष्यतां ? तत्राहुर्व्रजस्त्रिय इति, (भा. १०/२१/२७)—

''पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन।
तद्दर्शनस्मररुजस्तृणरूषितेन, लिम्पन्त्य आननकुचेषु जहुस्तदाधिमिति॥''—

स्ववाक्याद्यनुसारेण व्रजस्त्र्यादयो यद्वाञ्छन्ति ववाञ्छुरित्यर्थः। वर्त्तमानप्रयोगेण तत्तदविच्छेद उत्प्रेक्ष्यते। अत्र पुलिन्द्यादिनिर्द्देशस्तु स्वेषामपि तत्प्राप्तियोग्यताविवक्षया, तृणवीरुधो दूर्वाद्याः। आसां तादृगनुभवश्च तत्कुङ्कुमसौरभवासितत्वावच्छिन्नतत्पदप्रभावादेवेति भावः। आसां वाञ्छा (भा. ११/१२/८)— 'केवलेन हि भावेन गोप्यो गावो नगा मृगाः' इति दृष्टेः। 'गावो गाश्चारयन्तो गोपा' इत्यन्तेन निर्देशस्तु तेषां केषाञ्चित् प्रियनर्म्मसखादीनां तदनुमोदनकारित्वेऽपि पुरुषत्वात् तत्रायोग्यत्वविवक्षया। अयं भावः— स्त्रीत्वेन प्रसिद्धायाः श्रियस्तत्र कामनैव श्रूयते, न तु सङ्गतिः; (भा. १०/१६/३६)— ''कस्यानुभावोऽस्य न देव! विद्महे, तवाङ्घ्रिरेणुस्पर्शाधिकारः। यद्वाञ्छया श्रीर्ललनाचरत्तपोविहाय कामान् सुचिरं धृतव्रतेति'' नागपत्नीनामुक्तेः। (भा. १०/४७/६२)— "या वै श्रियाऽर्च्चितम्" इत्युद्धवस्याप्युक्तेः, न च रुक्मिणीत्वेन प्रसिद्धायाः श्रियस्तत्र सङ्गतिः, कालदेशयोरन्यतमत्वात्, न च व्रजस्त्रीणां श्रीसम्बन्धलालसा युक्ता, (भा. १०/४७/६०)— 'नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसाद' इत्यादिना ततोऽपि परमाधिक्यश्रवणात्, तस्मात् ''रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने'' इति मात्स्यस्कान्दादिनिर्णीत्या रुक्मिण्या सह पठिता शक्तित्वसाधारण्येनैव, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति न्यायरीत्या महेन्द्रेण परमेश्वर इव दुर्गयाप्यहंग्रहोपासनाशास्त्रदृष्ट्या स्वाभेदेनोपदिष्टा। श्रीराधा तु सर्वतः पूर्णा तल्लक्ष्मीः। तथा—

''देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥'' इति बृहद्गौतमीयदृष्ट्या च। तथा या तासु राधात्वेन प्रसिद्धा, सर्वतोविलक्षणा श्रीर्विराजते, तामुद्दिश्यैव तासां तदिदं वाक्यम्। यथा (भा. १०/३०/२८)—

''अनया राधितो नूनं भगवान् हरिरीश्वरः। यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः॥'' इति (भा. १०/३०/११)— "अप्येणपत्न्युपगतः प्रिययेहे"त्यादि द्वयञ्च। ततश्च तासां यथा तत्र स्पृहास्पदता तथास्माकं चेति। तदेवं तादृशप्रेमस्फूर्त्तिमयतद्गन्धाढ्यतायाः सम्प्रत्यस्मासु प्रकाशः स्यादिति दर्शितम्। न केवलं तादृशं तद्रज एव वाञ्छन्ति, अपि तु तादृशं पादस्पर्शञ्च वाञ्छन्ति, ततो वयमपि च कामयामह इत्यर्थः। यद्वा, तद्रजस एव विशेषणं पादस्पर्शमिति तदव्यभिचारिफलत्वात्तदभिन्नमेवेत्यर्थः। एतस्य तत्र कीदृशस्य ? महान् सर्वत्रत्यादपि स्वभावादुत्तम आत्मा सौन्दर्य्यादिप्रकाशमयस्वभावो यस्य तादृशस्य। (भा. १०/३३/६)— ''तत्रातिशुशुभे ताभिर्भगवान् देवकीसुत'' इति श्रीशुकोक्तेः। तस्मात् साधूक्तं (१/२/५८) 'तत्राप्येकान्तिनां श्रेष्ठा गोविन्दहृतमानसा' इत्यादिना। (१/२/५९) कृष्णरूपमित्यनेन च तादृशं तत्सौन्दर्य्यमेवोपलक्षितमिति। यद्यप्येतत् प्रकरणं सिद्धभक्तगणाश्रितम्, तथाप्यन्ये तथादृष्ट्या

स्युरित्यत्रानुकीर्त्तितम्॥ ५९॥

## अनुवाद

रस के द्वारा श्रीकृष्ण उत्कर्ष मण्डित हैं, अर्थात् सर्वोत्कृष्ट प्रेममय रस के द्वारा श्रीकृष्ण का सर्व भगवत् स्वरूपों से उत्कर्ष है। 'उत्कृष्यते' यहाँ अन्तर्भूत णि प्रत्यय का अर्थ रहने के कारण अर्थ होता है– उत्कृष्ट रूप से प्रकाशित होता है। इसका कारण यह है कि उस रस की इस प्रकार ही स्थिति अर्थात् स्वभाव है जो श्रीकृष्ण रूप को सबसे उत्कृष्ट रूप से दिखाता है। जैसाकि कुरुक्षेत्र यात्रा में अष्टपट्ट महिषियों से भिन्न अन्य महिषियों ने कहा है (भा. १०/८३/४१-४३)–

"न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत।
वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदं॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः।
कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः।
गावश्चारयतो गोपाः पादस्पर्शं महात्मनः" इति।

"साध्वी द्रौपदी जी! हम साम्राज्य, इन्द्रपद अथवा इन दोनों को भोग, अणिमा आदि ऐश्वर्य, ब्रह्मा का पद, मोक्ष अथवा सालोक्य सारूप्य आदि मुक्तियाँ कुछ भी नहीं चाहतीं हैं।

हम केवल इतना ही चाहती हैं कि अपने प्रियतम प्रभु के सुकोमल चरण कमलों की वह रज सर्वदा अपने सिर पर वहन किया करें, जो श्री के वक्षःस्थल पर लगी हुयी केशर की सुगन्ध से युक्त है।

उदार शिरोमणि भगवान् के जिन चरण कमलों का स्पर्श उनके गौ चराते समय गोप, गोपियाँ, भीलिनें, तिनके और घास लताएँ तक करना चाहती थीं, उन्हीं की हमें भी चाह है।"

यहाँ पर साम्राज्य का अर्थ है– सार्वभौम पद; स्वराज्य का अर्थ है– इन्द्रपद। भोज्यं अर्थात् उन दोनों लोकों का भोग भी नहीं चाहती हैं। वैराज्यं अर्थात् अणिमादि सिद्धियों के द्वारा विराजमानत्व। पारमेष्ठ्य अर्थात् प्राजापत्य ब्रह्मा का स्थान। आनन्त्य– "येते शतमित्यादि श्रुति" के रीति से मनुष्यानन्द से आरम्भ कर सौ सौ गुणा बढ़ाकर प्राजापत्यानन्द की गिनती की अन्तिम सीमा को दिखाकर परब्रह्म में "यतो वाचो निवर्त्तन्ते" इसके द्वारा जहाँ पर वाणी की गति नहीं है वहाँ पर आनन्द की अनन्तता को दर्शाया है। उसको भी हम सब नहीं चाहती हैं।

और तो और, नारायण श्रीपति का स्थान अर्थात् समीप में रहना आदि इन सबको भी नहीं चाहती हैं, अपने अधीन करना नहीं चाहती हैं।

तब इन सबसे अधिक क्या पाना चाहती हैं? इसके लिये कहती हैं– हमारे पति रूप में प्राप्त सर्व प्रसिद्ध गदाधारी के श्रीचरण धूलि को ही मस्तक पर धारण करना चाहती हूँ।

उसमें भी जो धूलि श्री की कुचकुङ्कुम गन्ध से युक्त, तथा उस गन्ध से युक्त होकर विशेष सम्पत्ति युक्त हुए हैं, उसकी ही विशेष रूप से कामना करती हूँ।

जब तुम सबों ने लक्ष्मीपति के सामीप्य आदि को छोड़ दिया है तब तो श्रीकुचकुङ्कुम गन्ध युक्त

चरण धूलि को भी छोड़ ही दिया है।

यहाँ यदि श्री शब्द से आपसब रुक्मिणी को कहना चाहती हैं, तब तो वह तुम सबों के लिए प्राप्त ही है। अतएव उससे भी विलक्षण श्री की कुच कुङ्कुम गन्ध युक्त जो कुछ वस्तु हो, उसको विशेष रूप से कहो। कहती हैं 'व्रज की स्त्रियाँ जिसको चाहती रहती हैं' (भा. १०/२१/१७) इत्यादि पद्य के द्वारा—

"पूर्णाः पुलिन्द्य उरुगाय पदाब्ज राग-श्रीकुङ्कुमेन दयितास्तनमण्डितेन।
तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्॥"

"हम तो वृन्दावन की इन भीलनियों को ही धन्य और कृतकृत्य मानती हैं। ऐसा क्यों सखी? कारण, जब ये हमारे कृष्ण को देखती हैं, तब प्रेम के करण इनके हृदय में भी उनके मिलने की तीव्र आकाङ्क्षा जाग उठती है। उस समय ये क्या उपाय करती हैं, यह भी सुन लो। गोपियाँ अपने वक्षःस्थलों पर जो केसर लगाती हैं, वह श्यामसुन्दर के चरणों में लगी होती है, और वे जब वृन्दावन के घास पर चलते हैं, तब उनमें भी लग जाती है। ये सौभाग्यवती भीलनियाँ उन्हें उन तिनकों पर से छुड़ाकर अपने स्तनों और मुखों पर मल लेती हैं, और इस प्रकार अपने हृदय की प्रेम-पीड़ा शान्त करती हैं।"

इस प्रकार अपने वाक्य के अनुसार व्रजस्त्री आदि जो कुछ चाहती हैं, उसी को हम चाहती हैं।

वाञ्छन्ति— वर्त्तमान काल की क्रिया है, इसके प्रयोग से पता चलता है कि इस प्रकार क्रिया का कभी भी विच्छेद नहीं होता है।

यहाँ पर पुलिन्द्यादि के निर्देश से ज्ञात होता है कि अपनी भी उसको प्राप्त करने की योग्यता है। तृण वीरुध शब्द से दूब आदि घास को जानना होगा। इन सबों का इस प्रकार अनुभव उस प्रकार कुङ्कुम सौरभ युक्त उनके चरण युगल के प्रभाव से ही है।

इन सबों की इच्छा भा. (११/१२/८) में इस प्रकार उक्तहै—

"केवलेन हि भावेन गोप्यो गावो नगा मृगाः।
येऽन्ये मूढ़धियो नागाः सिद्धा मामीयुरञ्जसा॥"

"गोपियाँ, गायें, वृक्षगण, व्रज के हरिण आदि पशुगण एवं अपर मूढ़ बुद्धि सर्पगण, एकमात्र मदीय सङ्गजनित भाव अर्थात् प्रीति लक्षण भक्ति द्वारा कृतार्थ होकर सुखपूर्वक मुझको प्राप्त किये थे।"

'गोचारण करते हुए गोपगण' इस प्रकार निर्देश से पता चलता है कि प्रियनर्म सखाओं का अनुमोदन रहने पर भी वे सब पुरुष थे, इसलिये उन सबों में उस प्रकार भाव नहीं हुआ, पुरुष अयोग्य है।

कहने का अभिप्राय यह है कि स्त्री रूप में प्रसिद्ध लक्ष्मी की कृष्ण प्राप्ति की कामना ही सुनने में आती है, किन्तु कभी भी उन्होंने प्राप्त नहीं किया। भा. १०/१६/३६ में उक्त है—

कस्यानुभावोऽस्य न देव विद्महे, तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रता॥

"भगवन्! हम नहीं समझ पातीं कि यह इसकी किस साधना का फल है, जो यह आपके चरण कमलों की धूल का स्पर्श पाने का अधिकारी हुआ है? आपके चरणों की रज इतनी दुर्लभ है कि उसके लिए आपकी अर्द्धाङ्गिनी लक्ष्मीजी ने बहुत दिनों तक समस्त भोगों का त्याग करके नियमों का पालन

करते हुए तपस्या की थी।" नागपत्नियों ने इस प्रकार कहा है।

भा. १०/४७/६२ में उद्धव ने कहा है–

"या वै श्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम्।
कृष्णस्य तद् भगवतश्चरणारविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम्॥"

"स्वयं भगवती लक्ष्मीजी जिनकी पूजा करती रहती हैं; ब्रह्मा, शङ्कर आदि परम समर्थ देवता, पूर्वकाम, आत्माराम और बड़े-बड़े योगेश्वर अपने हृदय में जिनका चिन्तन करते रहते हैं। उन भगवान् श्रीकृष्ण के उन्हीं चरणारविन्दों को रासलीला के समय गोपियों ने अपने वक्षःस्थल पर रखा और उनका आलिङ्गन करके अपने हृदय की जलन विरह व्यथा शान्त की।"

यहाँ श्री शब्द से प्रसिद्ध रुक्मिणी के साथ प्रकरण की सङ्गति नहीं होगी, काल और देश का व्यवधान है। और व्रजस्त्रियों की लालसा श्री के सम्बन्ध में नहीं हो सकती है। क्योंकि भा १०/४७/६० में उक्त है–

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद् व्रजवल्लवीनाम्॥

"भगवान् श्रीकृष्ण ने रासोत्सव के समय इन व्रजाङ्गनाओं के गले में बाँह डाल-डालकर इनके मनोरथ पूर्ण किये। इन्हें भगवान् ने जिस कृपा प्रसाद का वितरण किया, इन्हें जैसा प्रेमदान किया, वैसा भगवान् की परम प्रेमवती नित्य सङ्गिनी वक्षःस्थल पर विराजमान लक्ष्मीजी को भी नहीं प्राप्त हुआ। ऐसा प्रसाद कमल की सी सुगन्ध और कान्ति से युक्त देवाङ्गनाओं को भी नहीं मिला फिर दूसरी स्त्रियों की तो बात ही क्या करें?"

इस कथन से भी व्रज सुन्दरियों का परमाधिक्य है। इसलिए मत्स्य पुराण एवं स्कन्द पुराण में लिखित है– "द्वारका में रुक्मिणी, और वृन्दावन में श्रीराधा श्रेष्ठ हैं", इस प्रकार कथन शक्ति साधारण दृष्टि से हुआ; नियम इस प्रकार है– 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' महेन्द्र ने परमेश्वर के समान तथा दुर्गा ने भी उपासना का उपदेश शास्त्र दृष्टि से अभेद मानकर किया है।

श्रीराधा सब प्रकार से पूर्ण भगवान् की लक्ष्मी है। बृहद्गौतमीय के अनुसार श्रीराधा इस प्रकार हैं–

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥"

"देवी राधिका परदेवता कृष्णमयी हैं। वह सर्वलक्ष्मीमयी, सर्वकान्ति, सम्मोहिनी सर्वश्रेष्ठा शक्ति हैं।"

समस्त लक्ष्मिओं में श्रेष्ठा शक्ति श्रीराधा नाम से प्रसिद्ध है। सबसे विलक्षण शक्ति राधा नाम से विराजित है। उनको लक्ष्य करके भा. १०/३०/२८ में कहा गया है–

"अनयाराधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रह॥"

"अवश्य ही सर्वशक्तिमान् भगवान् श्रीकृष्ण की यह आराधिका होगी। इसलिए इस पर प्रसन्न होकर हमारे प्राणप्यारे श्यामसुन्दर ने हमें छोड़ दिया है, और इसे एकान्त में ले गये हैं।"

भा. १०/३०/११ में वर्णित है—

"अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः।
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वातिगन्धः॥"

"सखि! हरिणियों! हमारे श्यामसुन्दर के अङ्ग सङ्ग से सुषमा, सौन्दर्य की धारा बहती रहती है। वे कहीं अपनी प्राणप्रिया के साथ तुम्हारे नयनों को परमानन्द का दान करते हुए इधर से ही तो नहीं गये हैं? देखो-देखो, यहाँ कुलपति श्रीकृष्ण की कुन्द कली की माला की मनोहर गन्ध आ रही है, जो उनकी परम प्रेयसी के अङ्ग सङ्ग से लगे हुए कुचकुङ्कुम से अनुरञ्जित रहती है।"

इसलिए उन सबों को जिस प्रकार स्पृहास्पदता है, उस प्रकार हम सबों की भी है। अतएव उस प्रकार प्रेम स्फूर्त्तिमय गन्धयुक्त होकर हमारे पास प्रकाशित होंगे। केवल उस प्रकार रज की ही प्रार्थना नहीं करती हैं, किन्तु चरण कमल का भी स्पर्श करना चाहती हैं। इसलिए हम लोक भी उसकी कामना करती हैं।

किम्वा धूली उसका विशेषण है, चरण कमल का ही स्पर्श करना चाहती हैं,-धूल और धूल से लगा हुआ चरण कमल अभिन्न है। वह किस प्रकार है? महात्मनः अर्थात् वह महान् है, समस्त वस्तुओं में एवं स्वभाव से उत्तम है, वह परमप्रिय आत्मा है, सौन्दर्य आदि प्रकाशमय स्वभाव भी जिसका है।

भा. १०/३३/६ में श्री शुक ने कहा है—

"तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः।
मध्ये मणीनां हैमानां महामरकतो यथा॥"

"यमुनाजी की रमणरेती पर व्रजसुन्दरियों के बीच में भगवान् श्रीकृष्ण की बड़ी अनोखी शोभा हुई। ऐसा जान पड़ता था, मानो अगणित पीली दमकती हुई सुवर्ण मणियों के बीच में ज्योतिर्मयी नीलमणि चमक रही है।"

इसलिए उत्तम ही कहा है (भ.र.सि. १/२/५८)—

"तत्राप्येकान्तिनां श्रेष्ठा गोविन्दहृतमानसाः।
येषां श्रीश प्रसादोऽपि मनोहर्त्तुं न शक्नुयात्॥"

"उन एकान्ति भक्तगणों के मध्य में भी श्रीगोविन्द के द्वारा हृतचित्त महाजनगण ही श्रेष्ठ हैं। परव्योम में रहने वाले महानारायण का अनुग्रह भी उन सबके मन को हरण नहीं कर सकता है।"

और भी कहा है—

"सिद्धान्ततस्त्वभेदेऽपि कृष्णश्रीशस्वरूपयोः।
रसोनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः॥"

सिद्धान्ततः परव्योमाधिप महानारायण एवं श्रीकृष्ण के स्वरूप के मध्य में अभेद होने पर भी श्रीकृष्ण स्वरूप ही सर्वोत्कृष्ट प्रेममय रस के द्वारा उत्कर्ष मण्डित है, यही रस का स्वभाव है।

यहाँ श्रीकृष्ण का रूप उपलक्षण में होने के कारण उनका सौन्दर्य भी समस्त भगवत् अवतारों से उत्कर्ष मण्डित है।

यद्यपि यह प्रकरण सिद्ध भक्तगणों का है, तथापि अन्य भक्तजन भी इन्हीं सिद्ध भक्तों के समान चित्तवाले हों अत: उनकी जानकारी के लिए यहाँ लिखा गया है॥ ५९॥

## अर्थरत्नाल्प-दीपिका

तत्र हेतुमाह,– सिद्धान्तत इति। श्रीशकृष्णयोर्ये स्वरूपे सच्चिदानन्दनिबिड़ौ श्रीविग्रहौ तयो: सिद्धान्ततोऽभेदे ऐक्येऽपि कृष्णरूपं कृष्णविग्रहस्तु रसेन वक्ष्यमाणाद्भुतचतु:षष्ठिगुणजास्वादविशेषेण करणेनोत्कृष्यते, तद्योग्येषु भक्तेषु श्रीशादुत्कर्षतया प्रकाश्यते, कर्मकर्त्तरि प्रत्यय:। एषा रसस्थितिरेषैव रसमर्य्यादा (भा. ३/२/१२)–

'यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धे: परं पदं भूषणभूषणाङ्गम्॥'

(भा. १०/४४/१४)–

'गोप्यस्तप: किमचरन् यदमुष्य रूपं, लावण्यसारमसमोर्द्ध्वमनन्यसिद्धम्।
दृग्भि: पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशस: श्रिय: ऐश्वरस्य॥'

(भा. १०/१६/३६)–

'यद्वाञ्छया श्रीर्ललनाचरत्तपो विहायकामान् सुचिरं धृतव्रता' इत्यादि श्रीभागवतपुराणादिषु श्रीजयदेव-विल्वमङ्गल-लीलाशुक-श्रीचैतन्यदेव-पार्षदाद्यनुभवेषु च दृश्यते इत्यर्थ:॥ ५९॥

## अनुवाद

कारण बताते हैं– सिद्धान्तत: इत्यादि कारिका से। श्रीश व कृष्ण के स्वरूप सच्चिदानन्दघन हैं। दोनों के श्रीविग्रह में सैद्धान्तिक दृष्टि से अभेद होने पर भी श्रीकृष्ण विग्रह रस के द्वारा अर्थात् आगे कहे जाने वाले अद्भुत चौसठ गुणों से उत्पन्न आस्वाद विशेष के द्वारा उत्कर्ष मण्डित हैं। अपने योग्य भक्तों में नारायण से भी उत्कर्ष रूप से प्रकाशित होते हैं। यहाँ कर्मकर्त्तरि प्रत्यय हुआ है। रस की स्थिति अर्थात् मर्यादा इसी प्रकार ही है। (भा. ३/२/१२) में उक्त है–

"यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धे, परं पदं भूषणभूषणाङ्गम्॥"

"भगवान् ने अपनी योगमाया के बल मर्त्यलीलोपयोगी जो विग्रह प्रकट किया था, वह इतना मनोहर था कि उससे स्वयं (वैकुण्ठ स्थित श्रीनारायण) को भी विस्मय हो जाता था। उसमें सौभाग्य सम्पत्ति की पराकाष्ठा थी। उनका अङ्ग आभूषणों का भी आभूषण था, अर्थात् उनका अङ्ग परम सौन्दर्य युक्त था।"

भा. १०/४४/१४ में उक्त है–

"गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमौर्द्ध्वमनन्यसिद्धम्।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य॥"

"हे सखी! पता नहीं, गोपियों ने कौन-सी तपस्या की थी, जो नेत्ररूपी पात्रों से नित्य-निरन्तर इनकी रूप-माधुरी का पान करती रहती हैं। इनका रूप क्या है, लावण्य का सार! संसार में या उससे परे किसी का भी रूप इनके रूप के समान नहीं है, फिर बढ़कर होने की तो बात ही क्या है। सो भी किसी के सँवारने-सजाने से नहीं, गहने-कपड़े से भी नहीं, बल्कि स्वयंसिद्ध है। इस रूप को देखते-देखते तृप्ति भी नहीं होती, क्योंकि यह प्रतिक्षण नूतन होता जाता है। समग्र यश, सौन्दर्य और ऐश्वर्य इसी के आश्रित हैं। सखियों! परन्तु इसका दर्शन तो औरों के लिये बड़ा ही दुर्लभ है, वह तो गोपियों के ही भाग्य में सुलभ है।"

भा. १०/१६/३६ में उक्त है—

"कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रता॥"

"भगवन्! हम नहीं समझ पातीं कि इसकी किस साधना का फल है जो यह आपके चरण कमलों की धूल का स्पर्श पाने का अधिकारी हुआ है? आपके चरणों की रज इतनी दुर्लभ है कि उसके लिए आपकी अर्द्धाङ्गिनी लक्ष्मीजी ने भी बहुत दिनों तक समस्त भोगों का त्याग कर नियमों का पालन करते हुए तपस्या किया था।"

श्रीभागवत पुराणादि में, श्रीजयदेव, विल्वमङ्गल श्रीलीलाशुक, श्रीचैतन्यदेव के पार्षदादि के अनुभवों में भी ऐसा देखने में आता है॥ ५९॥

### भक्तिसार-प्रदर्शिनी

रसेनेति— सर्वोत्कृष्टप्रेममयरसेनेत्यर्थः। उत्कृष्यतेऽन्तर्भूतण्यर्थत्वादुत्कृष्टतया प्रकाश्यत इत्यर्थः। यतस्तस्य रसस्य एषैव स्थितिः स्वभावः, यत्कृष्णस्वरूपमेवोत्कृष्टत्वेन दर्शयतीत्यर्थः। तथा च नानाविधप्रेमरसम्य महाभावरूपरसे उत्कर्षस्य परमकाष्ठा तादृशरसस्यालम्बनः केवलः व्रजेन्द्रनन्दनः श्रीकृष्ण एव, नत्ववतारान्तरो महानारायणो वा। अतएव महानारायणस्य वक्षःस्थलस्थितापि लक्ष्मीः तादृशरसोत्कर्षविशिष्टस्य प्राप्त्यर्थं तपश्चकार। तत्र प्रमाणं श्रीदशमे (भा. १६/३६)नागपत्नीस्तुतौ—

'कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रता॥' इति।

तत्रैवोद्धवोक्तौ (१०/४७/६०)— 'नायं श्रियोङ्ग उ नितान्तरतेः प्रसाद' इति। महाभावस्य प्रमाणं तत्रैव दशमे (४७/५९)— 'कृष्णे क्व चैष परमात्मनि रूढ़भाव' इति रूढ़भावस्यापरपर्यायो महाभावः। एवं सति साधूक्तं रसेनोत्कृष्यते कृष्णरूपमिति भावः॥ ५९॥

### अनुवाद

रस के द्वारा श्रीकृष्ण उत्कर्ष मण्डित हैं, अर्थात् सर्वोत्कृष्ट प्रेममय रस के द्वारा श्रीकृष्ण का सर्व

भगवत् स्वरूपों से उत्कर्ष है। 'उत्कृष्ट्यते' यहाँ अन्तर्भूत णि प्रत्यय का अर्थ रहने के कारण अर्थ होता है– उत्कृष्ट रूप से प्रकाशित होता है। इसका कारण यह है कि उस रस की इस प्रकार ही स्थिति अर्थात् स्वभाव है जो श्रीकृष्ण रूप को सबसे उत्कृष्ट रूप से दिखाता है। कारण, नानाविधि प्रेमरस के उत्कर्ष की पराकाष्ठा महाभाव रूप रस में है। इस प्रकार के रस का आलम्बन केवल व्रजेन्द्रनन्दन श्रीकृष्ण ही हैं; अवतारान्तर अथवा महानारायण नहीं हैं। अतएव नारायण के वक्षःस्थल में रहने वाली लक्ष्मी ने भी उस प्रकार रसोत्कृष्ट विशिष्ट वस्तु को प्राप्त करने के लिए तपस्या की थी। इसका प्रमाण श्रीमद्भागवत के दशम स्कन्ध १६/३६ में नागपत्नियों के स्तुति में इस प्रकार है–

"कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रतेति॥"

"भगवन्! हम नहीं समझ पातीं कि इसकी किस साधना का फल है जो यह आपके चरण कमलों की धूल का स्पर्श पाने का अधिकारी हुआ है? आपके चरणों की रज इतनी दुर्लभ है कि उसके लिए आपकी अर्द्धाङ्गिनी लक्ष्मीजी ने भी बहुत दिनों तक समस्त भोगों का त्याग कर नियमों का पालन करते हुए तपस्या किया था।"

भा. १०/४७/६० में उक्त है–

"नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः।
रसोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद् व्रजवल्लवीनाम्॥"

"भगवान् श्रीकृष्ण ने रासोत्सव के समय इन व्रजाङ्गनाओं के गले में बाँह डाल डालकर इनके मनोरथ पूर्ण किये। इन्हें भगवान् ने जिस कृपा प्रसाद का वितरण किया, इन्हें जैसा प्रेमदान किया, वैसा भगवान् की परम प्रेमवती नित्य सङ्गिनी वक्षःस्थल पर विराजमान लक्ष्मीजी को भी नहीं प्राप्त हुआ। कमल की सी सुगन्ध और कान्ति से युक्त देवाङ्गनाओं को भी नहीं मिला। फिर दूसरी स्त्रियों की तो बात ही क्या करें?"

महाभाव का प्रमाण श्रीमद्भागवत् के १०/४७/५९ में इस प्रकार है–

"क्वेमाः स्त्रियो वनचरीव्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढ़भावः।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः॥"

ये सब वनचरी कृष्णप्रीति की किस भूमिका में स्थित हैं? और व्यभिचार दुष्ट हम सब भी किस भूमिका में हैं? अहो! परमात्मा में इन सबका इस प्रकार रूढ़ भाव है। परिसेवित अमृत के समान भगवान् भजनानुकारी अज्ञगण को भी निश्चय ही श्रेय को प्रदान करते हैं।

रूढ़ भाव का ही दूसरा नाम है महाभाव। इस प्रकार उत्तम ही कहा गया है कि रस के द्वारा श्रीकृष्ण स्वरूप उत्कर्ष को प्राप्त है॥ ५९॥

**किञ्च–**

**शास्त्रतः श्रूयते भक्तौ नृमात्रस्याधिकारिता।**
**सर्वाधिकारितां माघस्नानस्य ब्रुवता यतः।**

दृष्टान्तिता वशिष्ठेन हरिभक्तिर्नृपं प्रति॥ (६०)

यथा पाद्मे—

सर्वेऽधिकारिणो ह्यत्र हरिभक्तौ यथा नृप!॥ (६१)

## अनुवाद

और भी—

शास्त्र से ज्ञात होता है कि इस भक्ति मार्ग में मनुष्य मात्र का ही अधिकार है। कारण, माघ स्नान की अधिकारिता निर्णय प्रसङ्ग में मयूरध्वज राजा के पास वशिष्ठ मुनि ने हरि भक्ति को दृष्टान्त रूप में उल्लेख किया है॥ ६०॥

यथा पद्म पुराण में उक्त है—

हरिभक्ति में जिस प्रकार सबका अधिकार है, उसी प्रकार माघ स्नान में भी सबका अधिकार है॥ ६१॥

## दुर्गमसङ्गमनी

नन्वेवं भुक्तिमुक्तिस्पृहारहिताः श्रद्धालवः शुद्धभक्त्यधिकारिण इत्यायातम्। तत्र ते त्रैवर्णिका एव किम्वा सर्वे? तत्राह— किञ्चेति॥ ६०, ६१॥

## अनुवाद

शुद्धभक्ति के लक्षण से यह ज्ञात होता है कि भुक्ति, मुक्ति स्पृहा रहित श्रद्धालुजन शुद्ध भक्ति का अधिकारी है। क्या तीनों वर्णों के व्यक्ति यानि कि ब्राह्मण, क्षत्रिय और वैश्य ही शुद्ध भक्ति के अधिकारी हैं या समस्त मानव? इसके उत्तर में कहते हैं— मनुष्यमात्र भक्ति में अधिकारी है॥ ६०, ६१॥

## अर्थरत्नाल्प-दीपिका

ननु एवं भुक्तिमुक्तिस्पृहारहिताः श्रद्धालवः शुद्धभक्त्यधिकारिण इत्यायातम्, तत्र ते त्रैवर्णिका एव, किम्वा सर्वे? तत्राह— किञ्चेति। माघस्नानस्य सर्वधिकारितां ब्रुवता वशिष्ठेन नृपं प्रति हरिभक्तिर्दृष्टान्तिता। वशिष्ठवाक्यमेवाह— यथेति। अत्र माघस्नाने॥ ६०, ६१॥

## अनुवाद

शुद्धभक्ति के लक्षण से यह ज्ञात होता है कि भुक्ति, मुक्ति स्पृहा रहित श्रद्धालुजन शुद्ध भक्ति का अधिकारी है। क्या तीनों वर्णों के व्यक्ति यानि कि ब्राह्मण, क्षत्रिय और वैश्य ही शुद्ध भक्ति के अधिकारी हैं या समस्त मानव? इसके उत्तर में कहते हैं— किञ्च इत्यादि। माघ स्नान की सर्वाधिकारिता निर्णय प्रसङ्ग में राजा के पास वशिष्ठ मुनि ने हरिभक्ति का दृष्टान्त रूप में उल्लेख किया है। श्रीवशिष्ठ का वाक्य है— हरिभक्ति में जिस प्रकार सबका अधिकार है उसी प्रकार माघ स्नान में भी सबका अधिकार है। श्लोकोक्त अत्र शब्द का अभिप्राय है— माघस्नान में॥ ६०, ६१॥

## भक्तिसार-प्रदर्शिनी

ननु एवं भुक्तिमुक्तिस्पृहारहिताः श्रद्धालवः शुद्धभक्त्यधिकारिण इत्यायातम्, तत्र त्रैवर्णिका एव

किम्वा सर्वे? तत्राह— किञ्चेति। माघस्नानस्य सर्वधिकारितां ब्रुवता वशिष्ठेन नृपं प्रति हरिभक्तिर्दृष्टान्तिता। वशिष्ठवाक्यमेवाह— यथेति। अत्र माघस्नाने॥ ६०-६१॥

## अनुवाद

शुद्धभक्ति के लक्षण से यह ज्ञात होता है कि भुक्ति, मुक्ति स्पृहा रहित श्रद्धालुजन शुद्ध भक्ति का अधिकारी है। क्या तीनों वर्णों के व्यक्ति यानि कि ब्राह्मण, क्षत्रिय और वैश्य ही शुद्ध भक्ति के अधिकारी हैं या समस्त मानव? इसके उत्तर में कहते हैं— किञ्च इत्यादि। माघ स्नान की सर्वाधिकारिता निर्णय प्रसङ्ग में राजा के पास वशिष्ठ मुनि ने हरिभक्ति का दृष्टान्त रूप में उल्लेख किया है। श्रीवशिष्ठ का वाक्य है— हरिभक्ति में जिस प्रकार सबका अधिकार है उसी प्रकार माघ स्नान में भी सबका अधिकार है। वशिष्ठोक्त श्लोक में अत्र शब्द का अभिप्राय है— माघस्नान में॥ ६०-६१॥

**काशीखण्डे च तथा—**

**अन्त्यजा अपि तद्राष्ट्रे शङ्खचक्राङ्कधारिणः।**
**संप्राप्य वैष्णवीं दीक्षां दीक्षिता इव संबभुः॥ इति।** (६२)

## अनुवाद

काशीखण्ड में लिखित है—

उनके राष्ट्र में चाण्डालगण भी वैष्णवी दीक्षा प्राप्त करके शङ्ख चक्र आदि चिह्न धारण करके याज्ञिक ब्राह्मणगणों की भाँति शोभित हुये थे॥ ६२॥

## दुर्गमसङ्गमनी

काशीखण्डे च भक्तौ नृमात्रस्याधिकारिता श्रूयते, इत्येतन्मात्रांशेनान्वयः। दीक्षिताः याज्ञिकाः॥ ६२॥

## अनुवाद

भक्ति में मनुष्यमात्र अधिकारी है, इस अंश के साथ अन्वय होगा। दीक्षित शब्द का अर्थ है— याज्ञिक अर्थात् यज्ञ कराने वाले॥ ६३॥

## अर्थरत्नाल्प-दीपिका

अन्त्यजा भगवत्सेवायां जातश्रद्धश्चाण्डाला अपि तद्राष्ट्रे तस्य मयूरध्वजस्य विषये वैष्णवीं दीक्षां संप्राप्य शङ्खचक्राङ्कधारिणः सन्तो दीक्षिता याज्ञिका इव संबभुः शोभिता बभूवुः॥ ६२॥

## अनुवाद

अन्त्यजा अर्थात् भगवत् सेवा में श्रद्धालु चाण्डालगण भी मयूरध्वज राजा के राज्य में वैष्णवी दीक्षा प्राप्त कर शङ्ख, चक्र चिह्न धारणकर दीक्षित याज्ञिक के तरह शोभित हुए थे॥ ६२॥

## भक्तिसार-प्रदर्शिनी

तस्य राज्ञो राष्ट्रे देशे। दीक्षिता याज्ञिका इव संबभुर्दीप्तिं चक्रुः॥ ६२॥

### अनुवाद

मयूरध्वज राजा के देश में शङ्ख, चक्रधारी वैष्णव दीक्षा प्राप्त चाण्डालगण भी दीक्षित अर्थात् याज्ञिक ब्राह्मण की भाँति दीप्तिशील हुए थे॥ ६२॥

**अपि च —**

**अननुष्ठानतो दोषो भक्त्यङ्गानां प्रजायते।**
**न कर्म्मणामकरणादेष भक्त्यधिकारिणाम्॥　　(६३)**

### अनुवाद

और भी—

भक्ति के अधिकारियों का भक्ति के अङ्गों का अनुष्ठान न करने से दोष होता है। किन्तु वर्णाश्रमोचित कर्माचरण न करने से दोष नहीं होता है॥ ६३॥

### दुर्गमसङ्गमनी

तदेवमन्याभिलाषिताशून्यमिति स्थापितं, तत्प्रसङ्गसङ्गत्या सर्वेषामप्यधिकारित्वं दर्शितम्। तत्र शङ्कते— ननु भवन्तु सर्व एवाधिकारिण:, किन्तु स्वस्वधर्मयुक्ता एवेति युज्यते, तं विना प्रत्यवायश्रवणात्। तथा सर्वेषां प्रायो निषिद्धकर्म्म आपतत्येव। सति च तेन दुष्टत्वे कथं शुद्धत्वं स्यात्, कृते च प्रायश्चित्ते कर्मावृतत्वमापद्येत? तत्राह— अपि चेति। भक्त्यङ्गानां नित्यानामिति ज्ञेयम्॥ ६३॥

### अनुवाद

भक्ति अन्याभिलाषिता शून्य होनी चाहिये; इसका प्रतिपादन हुआ। इसी प्रसङ्ग में मानव मात्र की अधिकारिता भी स्थापित हुयी।

यहाँ पर शङ्का है— मानव मात्र इस उत्तमा भक्ति के अधिकारी हैं, किन्तु स्व स्व धर्म युक्त भी होंगे; क्योंकि ऐसा न होने पर प्रत्यवाय होगा। तथा सबको प्राय: करके निषिद्ध कर्म होने की सम्भावना होगी ही। ऐसा होने से दुष्ट (पाप) हो जाने पर शुद्धता कैसे हो सकती है? यदि निषिद्ध कर्म के लिए प्रायश्चित्त करेंगे तो शुद्ध भक्ति लक्षण में 'ज्ञान कर्म आदि से अनावृत होना आवश्यक है', यहाँ पर भक्ति कर्मावृत हो जाने पर वह शुद्ध कैसे होगी? इसके समाधान के लिए कहते हैं— अपि च इत्यादि। यहाँ भक्त्यङ्गानाम् से भक्ति के नित्य अङ्गो को जानना चाहिये॥ ६३॥

### भक्तिसार-प्रदर्शिनी

भक्त्यधिकारिणां जनानां भक्त्यङ्गानामेकादशीव्रतजन्माष्टम्यादिनित्याङ्गानामकरणे दोष:। न कर्मणामकरणात्॥ ६३॥

### अनुवाद

भक्ति अधिकारी व्यक्तियों का भक्ति के अङ्ग समूह एकादशी व्रत, जन्माष्टमी व्रत रूप आदि नित्य अङ्गों का न करने से दोष होता है। परन्तु वर्णाश्रमोचित कर्मों को न करने से दोष नहीं होता है॥ ६३॥

निषिद्धाचारतो दैवात् प्रायश्चितन्तु नोचितम्।
इति वैष्णवशास्त्राणां रहस्यं तद्विदां मतम्॥ (६४)

### अनुवाद

किन्तु दैवात् निषिद्धाचार होने पर भी उसका प्रायश्चित्त करना उचित नहीं है। यही वैष्णव शास्त्र समूह का तात्पर्य निर्णय है तथा इन शास्त्रों को जानने वालों का भी मत है॥ ६४॥

### दुर्गमसङ्गमनी

दैवादिति– यस्य भक्तौ तादृशी रुचिः श्रद्धा वा जाता, तस्य तु विकर्म्मणि स्वतः प्रवृत्तिर्न सम्भवत्येवेति भावः। प्रायश्चित्तन्तु नोचितमिति भक्तिप्रभाव एव तत्प्रायश्चित्ताय कल्पत इति भावः॥ ६४॥

### अनुवाद

जिसकी भक्ति में उस प्रकार रुचि वा श्रद्धा हुयी है, उसकी स्वतः पाप कार्य में प्रवृत्ति सम्भव नहीं होती है। इसके लिए प्रायश्चित करना ठीक नहीं है; भक्ति के प्रभाव से ही उसका प्रायश्चित्त हो जाता है॥ ६४॥

### अर्थरत्नाल्प-दीपिका

ननु भवन्त सर्वेऽधिकारिणः, किन्तु तेषां स्वस्वधर्मो निषिद्धाचरणे प्रायश्चित्तञ्च दोषनिवर्त्तकत्वात् कर्त्तव्यमेव तत्राह– नोचितमिति। दैवादिति भक्त्यधिकारिणां विकर्मणि स्वतः प्रवृत्तिर्न जायत इति भावः। प्रायश्चित्तस्तु नोचितमिति तेषां भक्तिप्रभावादेव विकर्मपापास्पर्शश्चेति भावः, यथेतिहाससमुच्चये– 'लिप्यन्ते न हि पापेन वैष्णवा विष्णुतत्पराः' इति॥ ६४॥

### अनुवाद

समस्त मानव शुद्ध भक्ति में आधिकारी हों, किन्तु उन सबों को अपने अपने धर्म के निषिद्ध आचरण से पाप हारक प्रायश्चित्त करना आवश्यक है। इसके लिये कहते हैं– प्रायश्चित्त करना उचित नहीं है। दैवात् का अभिप्राय यह है कि भक्ति अधिकारी के लिए विकर्म में स्वतः प्रवृत्ति नहीं होती है। इसका प्रायश्चित्त करना उचित नहीं है क्योंकि भक्ति के प्रभाव से ही विकर्म अर्थात् पाप का स्पर्श नहीं होगा।

इतिहास समुच्चय ग्रन्थ में लिखा है–
विष्णु परायण वैष्णवगण पाप से लिप्त नहीं होते हैं॥ ६४॥

### भक्तिसार-प्रदर्शिनी

दैवात् प्राचीन वैष्णवापराधदोषवशात्। न तु शुद्धभक्तानां विकर्मणि स्वतः प्रवृत्तिः सम्भवतीति प्रायश्चित्तं नोचितमिति भक्तिस्वभाव एव तत्प्रायश्चित्ताय कल्पते इति भावः, इति वैष्णवशास्त्राणां तात्पर्यार्थविनिर्णयः॥ ६४॥

### अनुवाद

दैवात् अर्थात् प्राचीन वैष्णवापराध दोषवश ही निषिद्ध आचरण होता है। शुद्ध भक्तों की विकर्म

में स्वतः प्रवृत्ति सम्भव नहीं होती है अतः प्रयश्चित्त उचित नहीं है। भक्ति स्वभाव अर्थात् प्रभाव से ही प्रायश्चित्त हो जाता है। यही वैष्णव शास्त्र समूह का तात्पर्य निर्णय है॥ ६४॥

**यथैकादशे (११/२१/२)—**

**स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः॥　　(६५)**

## अनुवाद

जैसाकि एकादश स्कन्ध (भा. ११/२१/२) में उक्त है—

अपने-अपने अधिकार में जो निष्ठा है वही गुण रूप में परिकीर्त्तित है। इसका विपर्य्यय अर्थात् निज अधिकार में निष्ठा हीनता तथा दूसरे के अधिकार में निष्ठा होना दोष है। गुण और दोष का निर्द्धारण इस प्रकार है॥ ६५॥

## दुर्गमसङ्गमनी

तदेतदेव ''स्वपादमूलं भजतः प्रियस्य'' इत्यन्तेन ग्रन्थेन (१/२/७१) आह— स्वे स्वे इति। स्वे स्वे अधिकार इति पूर्वोक्त केवलकर्म्मज्ञानभक्तिविषयतया पृथक् पृथक् निर्दिष्ट इत्यर्थः। उभयोर्गुणदोषयोः। तत्र शुद्धभक्त्यधिकारिण इतरद्वयकरणे दोष एव। (भा. ११/२०/३१)— 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इति तत्रैवोक्तेः। (भा. ११/२०/९)— 'तावत्कर्माणि कुर्वीत' इत्यादेश्च। कर्मज्ञानाधिकारिणोस्तु तादृशश्रद्धारहितयोः सङ्गादिवशात्तादृशशुद्धभक्तौ प्रवृत्तयोरप्यनादरदोषेण झटित्यसिद्धेर्दोषप्राय एवेति ज्ञेयम्। विपर्य्ययः स्वाधिकारानिष्ठा तदितरनिष्ठा च॥ ६५॥

## अनुवाद

इसी प्रकार श्रीमद्भागवतम् ११/५/४२ में भी निम्न प्रकार कहा गया है—

"स्वपादमूलं भजतः प्रियस्य, त्यक्तान्यभावस्य हरिः परेशः।
विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्टः॥

"अन्य देवता में उपास्य बुद्धि रहित होकर जो श्रीहरि के चरण युगल का भजन कर रहे हैं, उन प्रिय भक्त के हृदय में यदि कभी दैवात् कर्म विकर्म हो भी जाता है, तो हरि उनके हृदय में प्रवेश करके विकर्म हेतु भोग को विनष्ट कर देते हैं।" इस श्लोक को इस ग्रन्थ के १/२/७१ में भी उद्धृत किया गया है।

अपना-अपना अधिकार इत्यादि कथन से पूर्वोक्त केवल कर्म, ज्ञान एवं भक्ति के विषय में अलग-अलग रूप निर्देश किया गया है। उभयोः शब्द गुण एवं दोष दोनों को सूचित करता है। शुद्ध भक्ति के अधिकारी को ज्ञान एवं कर्म का आचरण नहीं करना चाहिये, इससे दोष होता है।

भा. ११/२०/३१ में उक्त है—

"तस्मान्मद्‌भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥"

"इसलिये जो योगी मेरी भक्ति से युक्त और मेरे चिन्तन में मग्न रहता है, उसके लिए ज्ञान अथवा वैराग्य प्रायः श्रेयस्कर नहीं होता है।"

भा. ११/२०/९ में उक्त है–

"तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥"

"ज्ञानी तावत् पर्यन्त नित्यनैमित्तिक कर्मानुष्ठान करे, यावत् पर्यन्त ऐहिक पारलौकिक सुखभोग में निर्वेद उपस्थित नहीं होता है। भक्त भी तब तक नित्यनैमित्तिक कर्मानुष्ठान करे, जब तक मदीय कथा श्रवण कीर्त्तनादि में श्रद्धा नहीं होती है।"

कर्म व ज्ञान में अधिकारी व्यक्ति की, जिसकी शुद्धा भक्ति में निष्ठा नहीं है, यदि किसी के संग से शुद्धा भक्ति में प्रवृत्ति हो भी जाती है तो भी अनादर दोष के कारण उनकी शीघ्र ही असिद्धि होगी और प्रायः दोष ही होगा। ऐसा समझना चाहिए।

विपर्यय शब्द का अर्थ है– अपने अधिकार में निष्ठा न होना और दूसरे के अधिकार में निष्ठा होना॥ ६५॥

## अर्थरत्नाल्प-दीपिका

तत्र भक्त्यधिकारिणां भक्त्यङ्गानुष्ठानकर्माकरणं चाह– स्वे स्वे इत्यादि पञ्चभिः। स्वे स्वेधिकारे (भा. ११/२०/७-८)– ''निर्व्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु। तेष्वनिर्व्विण्णचित्तानां कर्मयोगस्तु कामिनाम्॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्। न निर्विण्णो नातिसक्तोभक्तियागोऽस्य सिद्धिदः॥'' इति क्रमेण ज्ञाने कर्मणि भक्तौ या निष्ठा ज्ञानिकर्मिभक्तानां स्थितिः स गुणः स्वाभीष्टप्राप्तिलक्षण:; विपर्य्ययः स्वाधिकारानिष्ठा पराधिकारनिष्ठा च दोषः स्वाभीष्टप्राप्तिप्रतिबन्धकरूपः। भक्त्यधिकाररहितयोः कर्मज्ञानाधिकारिणोः सङ्गादिवशाच्छुद्धभक्तौ प्रवृत्तयोरपि कस्यचिद् वचनेन तस्यास्त्यागाज्जातापराधेन स्वाभीष्टप्राप्तिप्रतिबन्धकरूपो दोष एव॥ ६५॥

## अनुवाद

भक्ति के अधिकारी को भक्ति के अंगों का अनुष्ठान करना चाहिए तथा कर्म का अनुष्ठान नहीं करना चाहिए। इसको स्वे स्वे इत्यादि पाँच श्लोकों के द्वारा कहते हैं।

भागवत के ११/२०/७-८ में लिखा है–

"निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥"

"उद्धव जी! जो लोक कर्मों तथा उनके फलों से विरक्त हो गये हैं, और उनका त्याग कर चुके हैं, वे ज्ञानयोग के अधिकारी हैं, इसके विपरीत जिनके चित्त में कर्मों और उनके फलों से वैराग्य नहीं हुआ है,

उनमें दु:ख बुद्धि नहीं हुई है, वे सकाम व्यक्ति कर्मयोग के अधिकारी हैं। जो व्यक्ति न तो अत्यन्त विरक्त है, और न अत्यन्त आसक्त ही है, तथा यदृच्छा क्रम से सौभाग्यवश मेरी लीला कथा आदि में उसकी श्रद्धा हो गयी है, वह भक्तियोग का अधिकारी है। उसके लिये भक्तियोग सिद्धिप्रद है।"

इस प्रकार क्रमशः ज्ञान, कर्म एवं भक्ति में ज्ञानी, कर्मी और भक्तों की जो निष्ठा है वह गुण है, अर्थात् स्वाभीष्ट प्राप्ति का लक्षण है। विपर्यय है— निज अधिकार में अनिष्ठा और दूसरे के अधिकार में निष्ठा। यह दोष है, स्वाभीष्ट प्राप्ति का प्रतिबन्धक रूप है।

भक्ति में अधिकार नहीं होने पर ऐसे कर्म ज्ञान के अधिकारी की किसी के सङ्ग से शुद्ध भक्ति में प्रवृत्ति होने पर भी किसी के कहने पर भक्ति मार्ग को परित्याग करने से अपराध होता है। यह अपराध स्वाभीष्ट प्राप्ति प्रतिबन्धक रूप दोष होता है॥ ६५॥

## भक्तिसार-प्रदर्शिनी

स्वे स्वे इति पूर्वोक्तकेवलतत्वज्ञानयोगभक्तिविषयतया पृथक् पृथक् निर्दिष्ट इत्यर्थः। उभयोर्गुणदोषयोः। तत्र शुद्धभक्त्यधिकारिण इतरद्वयकरणे दोष एव। (भा. ११/२०/३१)— 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इति तत्रैवोक्तेः। (भा. ११/२०/९)— 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता' इत्यादेश्च। विपर्ययः स्वाधिकारस्यानिष्ठा तदितरस्य निष्ठा च॥ ६५॥

## अनुवाद

अपना-अपना अधिकार इत्यादि कथन से पूर्वोक्त केवल कर्म, ज्ञान एवं भक्ति के विषय में अलग-अलग रूप निर्देश किया गया है। उभयोः शब्द गुण एवं दोष दोनों को सूचित करता है। शुद्ध भक्ति के अधिकारी को ज्ञान एवं कर्म का आचरण नहीं करना चाहिये, इससे केवल दोष होता है।

भा. ११/२०/३१ में उक्त है—

"तस्मात् मद्भक्ति युक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥"

"इसलिये जो योगी मेरी भक्ति से युक्त और मेरे चिन्तन में मग्न रहता है, उसके लिए ज्ञान अथवा वैराग्य प्रायः श्रेयस्कर नहीं होता है।"

भा. ११/२०/९ में उक्त है—

"तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायते॥"

"ज्ञानी तावत् पर्यन्त नित्यनैमित्तिक कर्मानुष्ठान करे, यावत् पर्यन्त ऐहिक पारलौकिक सुखभोग में निर्वेद उपस्थित नहीं होता है। भक्त भी तब तक नित्यनैमित्तिक कर्मानुष्ठान करे, जब तक मदीय कथा श्रवण कीर्त्तनादि में श्रद्धा नहीं होती है।"

विपर्यय शब्द का अर्थ है— अपने अधिकार में निष्ठा हीनता, और दूसरे के अधिकार में निष्ठा होना॥ ६५॥

**प्रथमे (१/५/१७)—**

**त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि।**
**यत्र क्व वाभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः?॥ (६६)**

## अनुवाद

प्रथम स्कन्ध (१/५/१७) में कहा गया है—

जो मनुष्य अपने स्वधर्म का परित्याग करके भगवान् के चरण कमलों का भजन करता है, भजन परिपक्व होने के पहले ही उसका भजन छूट जाय, वह पतित हो जाय तो क्या कहीं भी उसका कोई अमङ्गल हो सकता है? परन्तु जो भगवान् का भजन नहीं करते और केवल स्वधर्म का पालन करते हैं, उन्हें कौन सा लाभ मिलता है?॥ ६६॥

## दुर्गमसङ्गमनी

यत्र क्व वा नीचयोनावपि, अमुष्य भक्तौ प्रवृत्तस्य अभद्रं किमभूत् किं स्यात्? अपि तु नेत्यर्थः, भक्तिवासनाया अपरिच्छेदादिति भावः। अभजतामभजद्भिस्तु स्वधर्मतः को वा अर्थ आप्तो? न कोऽपीत्यर्थः॥ ६६॥

## अनुवाद

'यत्र क्व वा' का अभिप्राय है— नीच योनि में जन्म होने पर भी; 'अमुष्य' अर्थात् भक्ति में प्रवृत्त जन का क्या अमंगल हो सकता है? नहीं, कभी भी अमंगल नहीं होगा क्योंकि भक्तिवासना अविनाशी रूप में रह जाती है। भजन न करने वालों को स्वधर्म पालन से कौन सा अर्थ प्राप्त होता है? कोई भी प्रयोजन सिद्ध नहीं होता है॥६६॥

## अर्थरत्नाल्प-दीपिका

यद्यपि भक्तिज्ञानाधिकारी स्वधर्मं त्यक्त्वा भजन् वर्त्तते, तदापि न कापि चिन्ता। यदि भजनात् पूर्व्वमेव विषयिणां सङ्गात्तदकुर्वन् विषयनिष्ठः स्यात्, म्रियते वा, तदा स्वधर्मत्यागनिमित्तोऽनर्थः स्यादेवेत्यत्राह,— त्यक्त्वेति। हरेश्चरणाम्बुजं भजन् भक्तुं स्वधर्मं त्यक्त्वापक्वः कीर्त्तनादिलक्षणं किञ्चिन्मात्रमपि पाकमप्राप्तस्ततो निश्चितमात्राच्चरणाम्बुजभजनाद् यदि यत्र क्व वा विषयिसङ्गे नीचयोनौ वा पतेत्, तदा किममुष्याभद्रमभूत्? अपि तु नेत्यर्थः। भक्तौ विश्वासिनो विषयनिष्ठा नीचयोनिर्वा न स्यादेव, तथापि तवातीवाग्रहो दृश्यते, तस्यां सत्यामपीति वा-शब्दार्थः। येन भाग्येन भक्तौ विश्वासस्तस्यापरिच्छेदात् पुनर्भक्तेरुत्पत्तिरेवेति भावः॥ ६६॥

## अनुवाद

भक्ति ज्ञानाधिकारी स्वधर्म को छोड़कर भजन करता रहता है, तब तो कुछ भी चिन्ता नहीं है। किन्तु यदि भजन करने के पहले ही विषयी के सङ्ग से भजन न करके विषयनिष्ठ हो जाता है, अथवा मर जाता है, तब तो स्वधर्मत्याग निमित्त दोष होगा ही। इसके लिए कहते हैं— त्यक्त्वेति। हरि के चरणाम्बुज

का भजन के लिए स्वधर्म-वर्णाश्रमादि धर्म को छोड़कर कीर्त्तनादि भक्ति की थोड़ी भी निष्ठा न प्राप्त कर उससे गिर जाता है तो क्या अनर्थ होगा? कुछ भी नहीं होगा। अथवा निश्चित रूप से चरणारविन्द युगल का भजन करते-करते यदि विषयिजन का सङ्ग होता है, और मृत्यु हो जाती है, और फिर नीच योनि में जन्म हो जाता है, तो क्या अभद्र होगा? कुछ भी अभद्र नहीं होगा।

भक्ति में विश्वासी व्यक्ति की विषय निष्ठा और नीच योनि में जन्म नहीं होता है। तथापि कर्म प्रधान वादीगण के इससे सन्तुष्ट नहीं होने पर, उनको सन्तुष्ट करने के लिए कहते हैं। ऐसी घटना होने पर भी अधोगति नहीं होगी। कारण, जिस भाग्य से भक्ति में एक बार विश्वास होता है उसका परिच्छेद अर्थात् विनाश कभी भी नहीं होने से पुनर्वार उसमें भक्ति की उत्पत्ति होती है॥ ६६ ॥

## भक्तिसार-प्रदर्शिनी

त्यक्त्वा स्वधर्ममित्यत्र श्रीस्वामिचरणानां व्याख्या यथा— एवं तावत् काम्यकर्मादेरनर्थहेतुत्वे तं विहाय हरेर्लीलैव वर्णनीयेत्युक्तम्। इदानीन्तु नित्यनैमित्तिकस्वधर्मनिष्ठामपि अनादृत्य केवलं हरिभक्तिरेव उपदेष्टव्येत्याशयेनाह— त्यक्त्वेति। ननु स्वधर्मत्यागेन भजनभक्तिपरिपाकेन यदि कृतार्थो भवेत्तदा न काचिच्चिन्ता। यदि पुनरपक्व एव म्रियते ततो भ्रश्येद्वा, तदा स्वधर्मत्यागनिमित्तोऽनर्थः स्यादित्याशङ्क्याह— ततो भजनात् कथञ्चित् पतेत् भ्रश्येत म्रियेत वा, तदापि भक्तिरसिकस्य कर्मानधिकारान्नानर्थशङ्का। अङ्गीकृत्याप्याह— वा शब्दः कटाक्षे, यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्याभद्रमभूत् किं, नाभूदेवेत्यर्थः। भक्तिवासनासद्भावादिति भावः। अभजद्भिस्तु केवलं स्वधर्मतः को वार्थ आप्तः प्राप्तः न कोऽपीत्यर्थः॥ ६६ ॥

## अनुवाद

त्यक्त्वा स्वधर्म— अपने धर्म को छोड़कर; इस श्लोक की श्रीस्वामिचरण (श्रीधर स्वामी) की व्याख्या इस प्रकार है— काम्य कर्म करना अनर्थ का कारण है, इसको जानकर उसको छोड़कर श्रीहरि की लीला का ही वर्णन करना कर्त्तव्य है, यह कहा गया है। अब तो नित्य-नैमित्तिक स्वधर्मनिष्ठा को भी आदर न करके केवल हरि भक्ति का ही उपदेश करना आवश्यक है; इसी आशय से कहते हैं— त्यक्त्वेति।

स्वधर्म त्यागकर श्रीहरि भजन परिपाक से यदि कृतार्थ होता है, तब तो कोई चिन्ता नहीं है। यदि अपक्व अवस्था में मृत्यु हो जाती है, अथवा भ्रष्ट हो जाता है, तब स्वधर्म त्याग से अनर्थ होगा, इस प्रकार आशंका का निरास करने के लिए कहते हैं— किसी भी प्रकार से श्रीहरिभजन से भ्रष्ट हो जाय, अथवा मृत्यु हो जाय, तथापि भक्ति रसिक का कर्म में अनधिकार हेतु अनर्थ होने की कोई आशङ्का नहीं है।

श्लोक में वा शब्द द्वारा कटाक्ष करके कहते हैं— नीच योनि में जन्म होने पर भी भक्ति रसिक का क्या अशुभ होगा? कुछ भी अशुभ नहीं होगा। कारण, उसमें भक्ति वासना रह जाती है। श्रीहरि भजन न करके केवल नित्य, नैमित्तिक कर्मादि रूप स्वधर्म पालन से क्या लाभ होगा? कुछ भी लाभ नहीं होगा॥ ६६ ॥

एकादशे (११/११/३२)—

आज्ञायैवं गुणान् दोषान्मयादिष्टानपि स्वकान्।
धर्मान् सन्त्यज्य यः सर्वान्मां भजेत्स च सत्तमः॥ (६७)

## अनुवाद

मत् कर्तृक आदिष्ट वेदोक्त धर्म समूह को विसर्जन कर धर्माधर्म के गुण दोष को जानकर जो व्यक्ति मेरी आराधना करता है, पूर्वोक्त व्यक्ति के समान यह व्यक्ति भी साधुवृन्द के मध्य में श्रेष्ठ होता है॥ ६७॥

## दुर्गमसङ्गमनी

(भा. ११/११/२९)— ''कृपालुरकृतद्रोह'' इत्यादौ स्थिरः स्वधर्मे, कविः सम्यग्ज्ञानीति टीकानुसारेण कर्मज्ञानमिश्रा भगवच्छरणलक्षणा भक्तिर्दर्शिता। तदनन्तरञ्चाह,— आज्ञायैवमिति— यदि च स्वात्मनि तत्तद्गुणयोगाभावः, तथाप्येवं पूर्वोक्तप्रकारेण गुणान् कृपालुत्वादीन्, दोषान् तद्विपरीतांश्च आज्ञाय हेयोपादेयत्वेन निश्चित्यापि यो मया तेषु गुणेषु मध्ये तत्रादिष्टानपि स्वकान् नित्यनैमित्तिकलक्षणान् सर्वानेव वर्णाश्रमविहितान् धर्मान् तदुपलक्षकं ज्ञानमपि मदनन्यभक्तिविघातकतया सन्त्यज्य मां भजेत्, स च सत्तमः। चकारात् पूर्वोक्तोऽपि सत्तम इत्युत्तरस्य तत्तद्गुणाभावेऽपि पूर्वसाम्यमिति बोधयति॥ ६७॥

## अनुवाद

"कृपालुरकृतद्रोह" (भा. ११/११/२९) इत्यादि श्लोक में 'स्थिर' शब्द का अभिप्राय है— स्वधर्म में स्थिर; एवं 'कविः' का अभिप्राय है— सम्यक् ज्ञानी। इस प्रकार टीकानुसार कर्म-ज्ञान-मिश्र भगवत् शरण लक्षणा भक्ति का प्रदर्शन हुआ है।

इसके बाद में कहते हैं— आज्ञायैवमित्यादि श्लोक। इसका अभिप्राय है— यद्यपि अपने में वे सभी गुण नहीं है, तथापि पूर्व कथन के अनुसार के कृपालु, अद्रोह, सहनशीलता, सत्यसार, अनिन्दनीय जीवन, सबके लिए सम, एवं सबके उपकारी ये सब गुण हैं इनको जानकर; और इनके विपरीत दोष हैं इसको भी जानकर हेय उपादेय रूप से निश्चयकर; और गुणों के मध्य में मैंने जो कुछ कहा है, नित्य-नैमित्तिक लक्षणा समस्त वर्णाश्रम विहित धर्मों को, और उसका उपलक्षक मुक्तिदायक ज्ञान को भी भक्ति का विघातक जानकर सम्यग्रूप से त्यागकर मुझको भजता है, वह भी सत्तम है।

चकार से सूचित होता है कि पूर्वोक्त गुणशाली व्यक्ति श्रेष्ठ होता है, किन्तु बाद में वर्णित व्यक्ति में उन उन गुणों के अभाव होने पर भी समस्त धर्मों का त्यागकर मेरा भजन करने के कारण वह व्यक्ति भी भजन के कारण पूर्व वर्णित गुणशाली व्यक्ति के साथ समानता का बोध होता है॥ ६७॥

## अर्थरत्नाल्प-दीपिका

स्वधर्मनित्यनैमित्तिके कृते गुणान् चित्तशुद्धिज्ञानोत्पत्यादीन्, अकृते दोषान् नरकप्राप्त्यादीन्, एवमाज्ञाय सम्यग् ज्ञात्वा यो धर्मान् सन्त्यज्य। स चेति च-शब्दस्त्वर्थे, स तु सत्तमः॥ ६७॥

## अनुवाद

चित्त शुद्धि, ज्ञानोत्पत्ति आदि के लिए स्वधर्म अर्थात् नित्यनैमित्तिक कर्म करने से गुण होगा, न करने से नरक प्राप्ति रूप दोष होगा; इसको अच्छी तरह जानकर, जो वर्णाश्रम धर्म कर्म को छोड़कर मेरा ही भजन करता है, वह भी सत्तम है॥ ६७॥

## भक्तिसार-प्रदर्शिनी

(भा. ११/११/२९)— ''कृपालुरकृतद्रोह'' इत्यादौ स्थिरः स्वधर्मे, कविः सम्यग्ज्ञानीति टीकानुसारेण कर्मज्ञानमिश्रा भगवच्छरणलक्षणा भक्तिर्दर्शिता। तदनन्तरं त्वाह,— आज्ञायैवेति। यदि च स्वात्मनि तत्तद्गुणयोगाभावः, तदप्येवं पूर्वोक्तप्रकारेण गुणान् कृपालुत्वादीन्, दोषान् तद्विपरीतांश्च हेयोपादेयत्वेन निश्चित्यापि यो मया तेषु गुणेषु मध्ये तत्रादिष्टानपि स्वकान् नित्यनैमित्तिकलक्षणान् सर्वानेव वर्णाश्रमविहितान् धर्मान् तदुपलक्षकं ज्ञानमपि मदनन्यभक्तिविघातकतया सन्त्यज्य मां भजेत्, स च सत्तमः। चकारात् पूर्वोक्तोऽपि सत्तम इत्युत्तरस्य तत्तद्गुणानामभावेऽपि पूर्वसाम्यमिति बोधयति॥ ६७॥

## अनुवाद

"कृपालुरकृतद्रोह" (भा. ११/११/२९) इत्यादि श्लोक में 'स्थिर' शब्द का अभिप्राय है— स्वधर्म में स्थिर; एवं 'कविः' का अभिप्राय है— सम्यक् ज्ञानी। इस प्रकार टीकानुसार कर्म-ज्ञान-मिश्र भगवत् शरण लक्षणा भक्ति का प्रदर्शन हुआ है।

इसके बाद में कहते हैं— आज्ञायैवमित्यादि श्लोक। इसका अभिप्राय है— यद्यपि अपने में वे सभी गुण नहीं है, तथापि पूर्व कथन के अनुसार कृपालु, अद्रोह, सहनशीलता, सत्यसार, अनिन्दनीय जीवन, सबके लिए सम, एवं सबके उपकारी ये सब गुण हैं इनको जानकर; और इनके विपरीत दोष हैं इसको भी जानकर हेय उपादेय रूप से निश्चयकर; और गुणों के मध्य में मैंने जो कुछ कहा है, नित्य-नैमित्तिक लक्षणा समस्त वर्णाश्रम विहित धर्मों को, और उसका उपलक्षक मुक्तिदायक ज्ञान को भी भक्ति का विघातक जानकर सम्यग्रूप से त्यागकर मुझको भजता है, वह भी सत्तम है।

चकार से सूचित होता है कि पूर्वोक्त गुणशाली व्यक्ति श्रेष्ठ होता है, किन्तु बाद में वर्णित व्यक्ति में उन उन गुणों के अभाव होने पर भी समस्त धर्मों का त्यागकर मेरा भजन करने के कारण वह व्यक्ति भी भजन के कारण पूर्व वर्णित गुणशाली व्यक्ति के साथ समानता का बोध होता है॥ ६७॥

**तत्रैव (भा. ११/५/४१)—**

**देवर्षिभूताप्तनृणां पितॄणां, न किङ्करो नायमृणी च राजन्!।**
**सर्वात्मना यः शरणं शरण्यं, गतो मुकुन्दं परिहृत्य कर्त्तम्॥** (६८)

## अनुवाद

हे राजन्! जो मनुष्य शास्त्र निर्दिष्ट कृत्यादि परित्याग करके सर्वात्मभाव से शरणागत वत्सल, प्रेम के वरदानी भगवान् मुकुन्द की शरण में आ गया है, वह देवताओं, ऋषियों, पितरों, प्राणियों और कुटुम्बियों का न तो सेवक और न ही उनका ऋणी होता है॥ ६८॥

## दुर्गमसङ्गमनी

परिहृत्य कर्त्तमिति। अयमिन्द्रः सेव्यः, अयं चन्द्रः सेव्य इत्यादिलक्षणं भेदं, शरणमनेन प्रारब्धनाशात् वर्णाश्रमित्वनाशेन न नित्यकर्माधिकारः। कृत्यमिति पाठेऽपि स एवार्थः॥ ६८॥

## अनुवाद

इन्द्र सेव्य है, चन्द्र सेव्य है, इस प्रकार के भेद को छोड़कर श्रीकृष्ण की शरण में आ जाता है। शरणागत होने से उसके प्रारब्ध का नाश हो जाने से उसके वर्णाश्रमित्व का नाश हो जाता है। अतएव उसका नित्य कर्म में अधिकार समाप्त हो जाता है। कर्त्तम के स्थान पर कृत्यं, इस प्रकार भी पाठ है, उसका एक ही अर्थ है॥ ६८॥

## अर्थरत्नाल्प-दीपिका

सर्व्वात्मना कृष्ण एव सेव्यो, भक्तिरेव साधनं, प्रेमैव पुरुषार्थ इति बुद्ध्या कर्त्तमन्यदप्युपास्यादिकमस्तीति भेदम्; कृत्यमिति पाठेऽपि स एवार्थः ॥ ६८॥

## अनुवाद

सर्वात्मना अर्थात् कृष्ण ही सेव्य हैं, भक्ति ही साधन है, प्रेम ही पुरुषार्थ है, इस प्रकार बुद्धि से 'कर्त्तम्' अर्थात् अन्य उपास्यादि भी हैं, इस प्रकार के भेद को छोड़कर जो मुकुन्द की शरण में आता है, वह सबसे उऋण हो जाता है। यहाँ कृत्यम् पाठ भी है, अर्थ समान है॥६८

## भक्तिसार-प्रदर्शिनी

परिहृत्य कर्त्तमिति– अयमिन्द्रः सेव्यः, अयं चन्द्रः सेव्य इत्यादिलक्षणं भेदम्। कृत्यमिति पाठेऽपि स एवार्थः॥ ६८॥

## अनुवाद

यह इन्द्र सेव्य है, यह चन्द्र सेव्य है, इस प्रकार भेद को हटाकर जो मुकुन्द की शरण में आता है, वह समस्त कर्त्तव्यों से उऋण हो जाता है, श्रीकृष्ण शरणागति से समस्त सम्पन्न होता है। यहाँ कृत्यम् पाठ का भी समान अर्थ है॥ ६८॥

**श्रीभगवद्गीतासु (१८/६६)—**

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ (६९)**

## अनुवाद

श्रीभगवद्गीता (१८/६६) में कहा गया है—

समस्त धर्मों का परित्याग करके एकमात्र मेरी शरण ग्रहण करो। मैं तुमको समस्त पापों से मुक्त कर दूँगा। शोक मत करो॥ ६९॥

### दुर्गमसङ्गमनी

सर्वधर्मान् परित्यज्येति। परिशब्दः स्वरूपतोऽपि त्यागं बोधयति। सर्वपापेभ्यः सर्वान्तरायेभ्य इत्येवार्थः। श्रीभगवदाज्ञया भक्तौ श्रद्धावतां तत्त्यागे पापानुत्पत्तेः॥ ६९ ॥

### अनुवाद

परित्यज्य— यहाँ परि शब्द से स्वरूप से भी अन्य धर्मों के परित्याग का बोध होता है। समस्त पापों से अर्थात् अन्तरायों से मुक्त करूँगा। श्रीभगवान् के आदेश से भक्ति में श्रद्धालु व्यक्तियों का कर्म त्याग से पाप उत्पन्न नहीं होता है॥ ६९ ॥

### अर्थरत्नाल्प-दीपिका

सर्व्वपापेभ्यो बहुजन्मसञ्चितेभ्योऽपि किमुतास्मिन् जन्मनि जातेभ्यः। मा शुच इति मय्याश्रितेभ्यः शोको नोचित इति भावः॥ ६९ ॥

### अनुवाद

बहु जन्म सञ्चित पापों से भी मैं तुझे मुक्त कर दूँगा, इस जन्म के पापों का तो फिर कहना ही क्या है। शोक मत करो अर्थात् मेरे आश्रित व्यक्तियों का शोक करना उचित नहीं है॥ ६९ ॥

### भक्तिसार-प्रदर्शिनी

सर्वपापेभ्यः सर्वान्तरायेभ्यः इत्येवार्थः। श्रीभगवदाज्ञया भक्तौ श्रद्धावतां कर्मत्यागे पापानुत्पत्तेः॥ ६९ ॥

### अनुवाद

समस्त पापों से अर्थात् समस्त अन्तरायों से मुक्त कर दूँगा। श्रीभगवदाज्ञा से भक्ति में श्रद्धालुजन का कर्मत्याग से पाप नहीं होता है॥ ६९ ॥

**अगस्त्यसंहितायाम्—**

**यथा विधिनिषेधौ तु मुक्तं नैवोपसर्पतः।**
**तथा न स्पृशतो रामोपासकं विधिपूर्वकम्॥ (७०)**

### अनुवाद

अगस्त्य संहिता में उक्त है—

स्मृति एवं श्रुति में लिखित विधि-निषेध जिस प्रकार मुक्त व्यक्ति को स्पर्श नहीं कर सकते हैं, उसी प्रकार विधि पूर्वक उपासना करने वाले रामोपासकों को विधि-निषेध स्पर्श नहीं कर सकते हैं॥ ७० ॥

### दुर्गमसङ्गमनी

विधिनिषेधौ स्मार्तौ, विधिपूर्वकं वैदिकतान्त्रिकपूजाविधिसहितम्॥ ७० ॥

### अनुवाद

विधि-निषेध शब्द से यहाँ पर स्मार्त-स्मृति शास्त्रों में वर्णित विधि-निषेध को जानना होगा।

विधिपूर्वकम् अर्थात् वैदिक, तान्त्रिक पूजा विधि के सहित राम की उपासना करने वाले को विधि निषेध स्पर्श नहीं कर सकते हैं॥ ७०॥

## अर्थरत्नाल्प-दीपिका

दैवान्निषिद्धाचरणे प्रायश्चित्ताभावमाह— यथेत्यादि द्वाभ्याम्। विधिः प्रायश्चित्तलक्षणो निषेधः पापाचरणरूपस्तौ; विधिपूर्व्वकः विधिपुरस्कं वैधीभक्तिपरं, जीवन्मुक्तदशातुल्यता चास्यायाता॥ ७०॥

## अनुवाद

दैवात् निषिद्ध आचरण होने पर प्रायश्चित्त नहीं करना पड़ेगा। इसको यथा इत्यादि दो श्लोकों के द्वारा कहते हैं। विधि है— प्रायश्चित्त करने का विधान; निषेध है— पापाचरण करने के लिए मना। विधिपूर्वकः अर्थात् विधिसहित यह वैधी भक्ति पर है। विधिपूर्वक रामोपासना करने वाले को वेदोक्त एवं स्मृति शास्त्रोक्त विधि-निषेध लागू नहीं होते हैं। यह अवस्था जीवन्मुक्तजन के तुल्य होती है॥ ७०॥

## भक्तिसार-प्रदर्शिनी

विधिनिषेधौ स्मार्त्तौ श्रुतौ च। विधिपूर्वकं वैदिकतान्त्रिकपूजाविधिसहितम्॥ ७०॥

## अनुवाद

स्मार्त्त एवं श्रुत विधि-निषेध मुक्तगणों पर जैसे लागू नहीं होते हैं, उसी प्रकार विधिपूर्वक अर्थात् वैदिक तान्त्रिक पूजा विधि के साथ रामोपासनाकारी व्यक्ति को वेद एवं स्मृति में कथित विधि निषेध लागू नहीं होते हैं॥ ७०॥

**एकादश एव (११/५/४२)—**

**स्वपादमूलं भजतः प्रियस्य, त्यक्ताऽन्यभावस्य हरिः परेशः।**
**विकर्म यच्चोत्पतितं कथञ्चिद्, धुनोति सर्वं हृदि सन्निविष्टः॥ इति। (७१)**

## अनुवाद

एकादश स्कन्ध में भी उक्त है—

अन्य देवता में उपास्य बुद्धि रहित होकर जो श्रीहरि के चरण युगल का भजन कर रहे हैं, उन प्रिय भक्त के हृदय में यदि कभी दैवात् कर्म विकर्म हो भी जाता है, तो हरि उनके हृदय में प्रवेश करके विकर्म हेतु भोग को विनष्ट कर देते हैं॥ ७१॥

## दुर्गमसङ्गमनी

त्यक्तोऽन्यत्र भाव उपास्यबुद्धिर्येन तस्य कथञ्चिद्दैवादुत्पतितमुत्पातरूपेण जातम्॥ ७१॥

## अनुवाद

जिन्होंने अन्य देवता में उपास्य बुद्धि त्याग दी है उसका यदि कथञ्चित् अर्थात् दैवात् कभी कोई उत्पातरूप विकर्म हो भी जाता है तो हरि उसके हृदय में प्रवेश करके उसके विकर्म हेतु भोग को विनष्ट कर देते हैं॥ ७१॥

### अर्थरत्नाल्प-दीपिका

कथञ्चिद्दैवात् सन्निविष्टः श्रवणादिना हृदि स्फुरितः॥ ७१ ॥

### अनुवाद

यदि अनन्य भक्त का कभी दैवात् विकर्म हो जाता है तो प्रभु उसके हृदय में प्रवेश करके अर्थात् शास्त्र श्रवणादि से उसके हृदय में प्रवेश स्फुरित हो करके विकर्म हेतु भोग को विनष्ट कर देते हैं॥ ७१ ॥

### भक्तिसार-प्रदर्शिनी

त्यक्तोऽन्यत्र भाव उपास्यबुद्धिर्येन तस्य कथञ्चिद् दैवादुत्पतितमुत्पातरूपेण जातं विकर्म॥ ७१ ॥

### अनुवाद

जिसने अन्य देवताओं में उपास्य बुद्धि त्याग दी है उसका यदि दैववश कोई उत्पातकरूप निषिद्धाचरण हो भी जाये तो भगवान् उसके हृदय में प्रवेश कर उस विकर्म हेतु भोग को नष्ट कर देते हैं॥ ७१ ॥

**हरिभक्तिविलासेऽस्या भक्तेरङ्गानि लक्षशः।**
**किन्तु तानि प्रसिद्धानि निर्दिश्यन्ते यथा मतिः॥ (७२)**

श्रीहरि भक्ति विलास में इस वैधी भक्ति के बहुत सारे अङ्गों का वर्णन हुआ है। किन्तु यहाँ पर उनमें से प्रसिद्ध अङ्गों का वर्णन यथामति कर रहे हैं॥ ७२ ॥

### अर्थरत्नाल्प-दीपिका

लक्षशो बहूनि निर्दिष्टानीति शेषः॥ ७२ ॥

### अनुवाद

यहाँ लक्षशः शब्द से बहुत को जानना होगा ॥ ७२ ॥

**तत्र अङ्गलक्षणम्—**

**आश्रितावान्तरानेकभेदं केवलमेव वा।**
**एकं कर्मात्र विद्वद्भिरेकं भक्त्यङ्गमुच्यते॥ (७३)**

### अनुवाद

यहाँ पर भक्ति के अङ्ग का लक्षण कहते हैं—

आश्रित अवान्तर अनेक भेद युक्त, केवल अर्थात् अस्पष्ट स्वगत भेद युक्त एक-एक कर्म को ही विद्वानगण एक-एक भक्त्यङ्ग कहते हैं॥ ७३ ॥

### दुर्गमसङ्गमनी

आश्रितेति यथार्चनादिकम्। केवलमत्रास्पष्टस्वगतभेदं, यथा गुरुपादाश्रयो, यथा अभ्युत्थानादि च, अत्र भक्तौ॥ ७३ ॥

### अनुवाद

'आश्रित अवान्तर अनेक भेद युक्त' भक्त्यङ्ग का उदाहरण है— अर्चनादि भक्त्यङ्ग। इनके बीच

में अनेक भेद होने पर भी यह एक ही अङ्ग होता है। जहाँ पर स्वगत भेद स्पष्ट नहीं होता है वह केवल है; जैसे गुरु पादाश्रय, अभ्युत्थान आदि। श्लोकोक्त अत्र का अर्थ है— भक्ति के ॥ ७३ ॥

## अर्थरत्नाल्प-दीपिका

आश्रितेति; यथार्चनादि, केवलं यथा गुरुपादाश्रयादि ॥ ७३ ॥

## अनुवाद

आश्रित— अनेक अङ्ग होने पर भी एक ही अङ्ग कहा जाता है; जैसे अर्चनादि। केवल का उदाहरण गुरुपादाश्रयादि हैं ॥ ७३ ॥

## भक्तिसार-प्रदर्शिनी

आश्रितोऽवान्तरानेकभेदो येन, यथार्चनादिः। एवं कीर्त्तनानां भेदो गुणकीर्त्तननामकीर्त्तनादिः। केवलमत्रास्पष्टस्वगतभेदं यथा गुरुपादाश्रयो यथा अभ्युत्थानादिः ॥ ७३ ॥

## अनुवाद

जिसमें अवान्तर अनेक भेद हैं वे भी एक भक्त्यङ्ग कहलाते हैं; जैसे— अर्चन आदि। इसी प्रकार कीर्त्तन के भी कई भेद हैं; जैसे— गुण कीर्त्तन, नाम कीर्त्तनादि। इस प्रकार कीर्त्तन के अवान्तर अनेक भेद होने पर भी यह भक्ति का केवल एक अङ्ग है। केवल उसको कहते हैं— जहाँ पर स्वगत भेद अस्पष्ट है, जैसे— गुरु पादाश्रय, अभ्युत्थान आदि ॥ ७३ ॥

**अथ अङ्गानि —**

**गुरुपादाश्रयस्तस्मात् कृष्णदीक्षादिशिक्षणम्।**
**विस्रम्भेण गुरोः सेवा साधुवर्त्मानुवर्त्तनम् ॥ (७४)**

## अनुवाद

अब भक्ति के अङ्ग समूह को कहते हैं—

नित्य कल्याण को जानने के लिये मानव श्री गुरुदेव के चरणाश्रय करें, एवं उनसे कृष्ण दीक्षा ग्रहण पूर्वक भक्ति धर्म का शिक्षण करें। विश्वास के साथ श्री गुरुदेव के आनुकूल्य रूप सेवा करें। और साधु मार्ग का अनुसरण करें ॥ ७४ ॥

## दुर्गमसङ्गमनी

गुरुपादाश्रय इति। अस्मिन् ग्रन्थे अङ्गा द्विविधाः— औत्पत्तिकाः, टीकाक्रमलाभार्थंकल्पिताश्च। तत्र पूर्वा द्विबिन्दुमस्तकाः। उत्तरास्तु तच्छून्या इति भेदो ज्ञेयः। कृष्णदीक्षादीति दीक्षापूर्वकशिक्षणमित्यर्थः। साधुवर्त्मानुवर्त्तनं सदाचरितश्रुत्यादिविधिसेवित्वम् ॥ ७४ ॥

## अनुवाद

इस ग्रन्थ में अङ्ग द्विविध हैं। प्रथम— औत्पत्तिकाः अर्थात् क्रम से स्वाभाविक, तथा द्वितीय—

टीका क्रम के लिये कल्पित। प्रथम औत्पत्तिक अङ्कों के शिर पर दो बिन्दु हैं, तथा कल्पित अंक समूह बिन्दु शून्य हैं। इस प्रकार दोनों का भेद जानना चाहिए। कृष्णदीक्षादिशिक्षणम्— यहाँ आदि शब्द से सूचित होता है कि दीक्षा ग्रहण के बाद ही शिक्षा ग्रहण करें। साधुवर्त्मानुवर्त्तनम् अर्थात् सत्गणों के द्वारा आचरित श्रुति आदि शास्त्रों के विधि के अनुकूल चलें॥ ७४॥

**अर्थरत्नाल्प-दीपिका**

कृष्णदीक्षा आदिर्येषां ते कृष्णदीक्षादयो भागवतधर्मास्तेषां शिक्षणम्॥ ७४॥

**अनुवाद**

कृष्ण दीक्षा जिनके आदि में है वे कृष्ण दीक्षादि भागवत धर्म हैं, इनकी शिक्षा ग्रहण श्रीगुरुदेवजी से करें॥ ७४॥

**भक्तिसार-प्रदर्शिनी**

दीक्षापूर्वकशिक्षणमित्यर्थः॥ ७४॥

**अनुवाद**

दीक्षाग्रहण पूर्वक शिक्षा ग्रहण करे॥ ७४॥

**सद्धर्मपृच्छा भोगादित्यागः कृष्णस्य हेतवे।**
**निवासो द्वारकादौ च गङ्गादेरपि सन्निधौ॥　　(७५)**

**अनुवाद**

सद्धर्म को जानने के लिए प्रश्न करना, श्रीकृष्ण के अनुग्रह प्राप्ति के लिए भोग-लोक-वित्त पुत्रादि के प्रति आसक्ति परित्याग, द्वारकादि तीर्थ में एवं गङ्गादि के समीप निवास करना भक्ति है॥ ७५॥

**दुर्गमसङ्गमनी**

कृष्णस्येति। कृष्णप्राप्तेर्यो हेतुस्तत्प्रसादस्तदर्थमित्यर्थः। अतो वैयधिकरण्यात्तादर्थ्ये चतुर्थ्येव। ''अन्नस्य हेतोर्वसति'' इत्यत्र 'षष्ठी हेतुप्रयोगे' इति त्वन्नहेत्वोः सामानाधिकरण्य एव प्रवृत्तम्। कृष्णार्थे भोगादित्याग इत्यस्यानुवदिष्यमाणस्यापि कृष्णप्रापकतत्प्रसादार्थ इत्येवार्थः। आदिग्रहणाल्लोकवित्तपुत्रा गृह्यन्ते॥ ७५॥

**अनुवाद**

कृष्ण प्राप्ति के लिए जो हेतु अर्थात् उनका प्रसाद है, उसके लिए भोगादि का परित्याग करना। यहाँ पर व्यधिकरण होने के कारण तादर्थ्य में चतुर्थी हुयी है। "अन्नस्य हेतोर्वसति" यहाँ पर षष्ठी विभक्ति का प्रयोग अन्न शब्द के उत्तर में जो हुआ, वह हेतु शब्द प्रयोग के कारण हुआ है। "अन्न के लिए" सामानाधिकरण्य में प्रवृत्त, प्रयोग हुआ है। आगे कहेंगे— कृष्णार्थे भोगादि त्यागः। इसका अर्थ है— कृष्ण को पाने के लिए जो कारण है, श्रीकृष्ण का प्रसाद- प्रसन्नता, उसके लिए भोगादि त्याग

करना आवश्यक है। भोगादि- यहाँ पर जो आदि शब्द का प्रयोग हुआ है, उससे लोक, वित्त, पुत्र को ग्रहण करना है॥ ७५॥

## अर्थरत्नाल्प-दीपिका

सतां धर्मस्य पृच्छा सद्धर्मपृच्छा, कृष्णस्य यो हेतुः प्राप्तिकारणं प्रसादस्तदर्थम्। कृष्णार्थे भोगादित्याग इत्यनुवादिष्यमाणस्याप्ययमेवार्थः; आदिशब्दाद् वित्तपुत्रादीनामपि॥ ७५॥

## अनुवाद

सद्धर्म पृच्छा का अर्थ है— भक्तों के आचरण के विषय में प्रश्न। कृष्ण प्राप्ति का जो कारण है वह है उनका प्रसाद अर्थात् प्रसन्नता; उसके लिए भोगादि का परित्याग करे। 'कृष्णार्थे भोगादि त्याग' आगे जो कहा जायेगा उसका भी यही अर्थ है। आदि शब्द से वित्त, पुत्र आदि को भी ग्रहण करना है॥ ७५॥

## भक्तिसार-प्रदर्शिनी

कृष्णस्येति कृष्णप्राप्तेर्यो हेतुः कृष्णस्य प्रसादस्तदर्थमित्यर्थः, आदि ग्रहणात् लोकवित्तपुत्रा गृह्यन्ते॥ ७५॥

## अनुवाद

कृष्ण प्राप्ति का जो कारण है वह है उनका प्रसाद अर्थात् प्रसन्नता; उसके लिए भोगादि का परित्याग करे। आदि शब्द से लोक-वित्त-पुत्र को ग्रहण करना है॥ ७५॥

**व्यवहारेषु सर्वेषु यावदर्थानुवर्त्तिता।**
**हरिवासरसम्मानो धात्र्यश्वत्थादिगौरवम्॥ (७६)**

## अनुवाद

समस्त व्यवहारों में जितना आवश्यक है भक्ति के अनुकूल से उतना करना आवश्यक है। एकादशी, जन्माष्टमी प्रभृति का सम्मान करना, आमला, अश्वत्थ वृक्ष आदि का गुरुत्व स्वीकार करना भक्ति के अङ्ग हैं॥ ७६॥

## अर्थरत्नाल्प-दीपिका

हरिवासर एकादशीजन्माष्टम्यादिश्च तस्य सम्मानो यथाशक्तिकरणम्॥ ७६॥

## अनुवाद

हरिवासर अर्थात् एकादशी, जन्माष्टमी आदि का शक्ति के अनुसार पालन करना भक्ति का अङ्ग है॥ ७६॥

**एषामत्र दशाङ्गानां भवेत् प्रारम्भरूपता॥ (७७)**

## अनुवाद

१. श्री गुरु पादाश्रय, २. श्रीकृष्ण मन्त्र में दीक्षित होकर श्रीगुरु से भागवत धर्म शिक्षा ग्रहण

करना, ३. प्रीतिपूर्वक श्री गुरुदेव की सेवा करना, ४. साधुमार्ग का अनुसरण करना, ५. भजन की रीति आदि विषयों का प्रश्न करना, ६. श्रीकृष्ण का अनुग्रह प्राप्त करने के लिए भोग, लोक, वित्त, पुत्रादि का त्याग करना, ७. द्वारकादि तीर्थों में एवं गङ्गादि के समीप में वास करना, ८. समस्त व्यवहार भक्ति के प्रयोजन के अनुसार करना, ९. एकादशी, जन्माष्टमी प्रभृति का सम्मान करना, १०. आमलकी एवं अश्वत्थादि वृक्षों का पूज्यत्व स्वीकार करना। ये दश अङ्ग समूह भक्ति के प्रारम्भ रूप हैं॥ ७७॥

**सङ्गत्यागो विदूरेण भगवद्विमुखैर्जनैः।**
**शिष्याद्यननुबन्धित्वं महारम्भाद्यनुद्यमः॥ (७८)**

### अनुवाद

भगवद् बर्हिमुख जनों का सङ्ग दूर से परित्याग करना, बहुत शिष्य न करना अर्थात् अनधिकारी शिष्य न करना एवं आडम्बर त्याग करना भक्ति के अङ्ग हैं॥ ७८॥

**बहुग्रन्थकलाभ्यासव्याख्यावादविवर्जनम्॥ (७९)**

### अनुवाद

अनेक ग्रन्थों एवं कलाओं का अभ्यास करना, व्याख्या-वाद- विवादादि करना भक्ति में निषिद्ध है॥ ७९॥

**व्यवहारेऽप्यकार्पण्यं शोकाद्यवशवर्त्तिता॥ (८०)**

### अनुवाद

व्यवहार में कृपणता का त्याग करना तथा शोकादि के वशीभूत नहीं होना है॥ ८०॥

### अर्थरत्नाल्प-दीपिका

व्यवहारे 'व्यवहारेषु सर्व्वेष्विति' पूर्व्वोक्तदेहायावश्यकव्यवहारे॥ ८०॥

### अनुवाद

देहादि आवश्यक व्यवहार में कृपणता का त्याग करना भक्ति का अङ्ग है॥ ८०॥

**अन्यदेवानवज्ञा च भूतानुद्वेगदायिता।**
**सेवानामापराधानामुद्भवाभावकारिता॥ (८१)**

### अनुवाद

अन्य देवताओं की अवज्ञा-अनादर न करना, प्राणिमात्र को उद्वेग न देना साधक देह में सेवापराध एवं नामापराध समूह जिससे उद्भव न हों इस प्रकार चेष्टा करना भक्ति के अङ्ग है॥ ८१॥

### भक्तिसार-प्रदर्शिनी

सेवानामापराधानामुद्भवः साधकस्य प्रायो भवत्येव, किन्तु पश्चात् यत्नेन तेषामभावकारिता॥८१॥

### अनुवाद

साधक शरीर में सेवापराध एवं नामापराध का उद्भव हो ही जाता है, किन्तु पीछे यत्न से उसको मिटाने के लिए प्रयत्न करना भक्ति का अङ्ग है॥ ८१॥

**कृष्णतद्भक्तविद्वेषविनिन्दाद्यसहिष्णुता।**
**व्यतिरेकतयामीषां दशानां स्यादनुष्ठितिः॥ (८२)**
**अस्यास्तत्र प्रवेशाय द्वारत्वेऽप्यङ्गविंशतेः।**
**त्रयं प्रधानमेवोक्तं गुरुपादाश्रयादिकम्॥ (८३)**

### अनुवाद

श्रीकृष्ण एवं उनके भक्त से विद्वेष और निन्दादि को सहन न करना भक्ति का अङ्ग है। निषेध रूप से इन दस अङ्गों का अनुष्ठान करना पड़ता है॥ ८२॥

इस उत्तमा भक्ति मार्ग में प्रवेश के लिए ये बीस अङ्ग द्वार स्वरूप होने पर भी किन्तु श्री गुरु पदाश्रयादि तीन अंग प्रधान हैं॥ ८३॥

### भक्तिसार-प्रदर्शिनी

अस्याः भक्तेः प्रवेशाय विंशत्यङ्गानां द्वारत्वेऽपि गुरुपादाश्रयादित्रयं प्रधानम् इति॥ ८३॥

### अनुवाद

उत्तमा भक्ति में प्रवेश के लिए इन बीस अंगों का द्वार स्वरूप होने पर भी गुरुपादाश्रय, कृष्णदीक्षापूर्वक उनसे शिक्षा ग्रहण करना, एवं विश्वास के साथ उनकी सेवा करना, ये तीन प्रधान अङ्ग हैं॥ ८३॥

**धृतिर्वैष्णवचिह्नानां हरेर्नामाक्षरस्य च।**
**निर्माल्यादेश्च तस्याग्रे ताण्डवं दण्डवन्नतिः॥ (८४)**

### अनुवाद

वैष्णव चिह्न धारण करना, हरिनामाक्षर धारण करना, निर्माल्य आदि धारण करना, भगवान् के सन्मुख में ताण्डव नृत्य करना एवं दण्डवत् प्रणाम करना भक्ति के अङ्ग हैं॥ ८४॥

### अर्थरत्नाल्प-दीपिका

वैष्णवानां यानि चिह्नानि तुलसीकाष्ठधात्रीफलनलिनाक्षमालोद्ध्र्वपुण्ड्रशङ्खचक्रादीनि तेषाम्॥ ८४॥

### अनुवाद

तुलसी काष्ठ, धात्री फल की माला एवं फ्द्म बीज की माला, उद्ध्र्व पुण्ड्र तिलक धारण करना, शङ्ख चक्रादि चिह्न वैष्णव चिह्न हैं, इनका धारण करना भक्ति का अङ्ग है॥ ८४॥

**अभ्युत्थानमनुव्रज्या गतिः स्थाने परिक्रमः।**
**अर्च्चनं परिचर्या च गीतं सङ्कीर्तनं जपः॥ (८५)**

विज्ञप्तिः स्तवपाठश्च स्वादो नैवेद्यपाद्ययोः।
धूपमाल्यादिसौरभ्यं श्रीमूर्त्तेः स्पृष्टिरीक्षणम्॥ (८६)
आरात्रिकोत्सवादेश्च श्रवणं तत्कृपेक्षणम्।
स्मृतिर्ध्यानं तथा दास्यं सख्यमात्मनिवेदनम्॥ (८७)
निजप्रियोपहरणं तदर्थेऽखिलचेष्टितम्।
सर्वथा शरणापत्तिस्तदीयानाञ्च सेवनम्॥ (८८)

### अनुवाद

अभ्युत्थान अर्थात् उठकर खड़ा होना, अनुव्रज्या अर्थात् पीछे-पीछे चलना, मन्दिर आदि को गमन करना, परिक्रमा, अर्चन करना, परिचर्या करना, गीत, संकीर्त्तन एवं जप करना ये सब भक्ति के अङ्ग हैं॥ ८५॥

विज्ञप्ति, स्तवपाठ, नैवेद्य एवं पाद्यास्वादन, धूप माला आदि का सौरभ ग्रहण करना, श्री मूर्त्ति को स्पर्श करना, श्री मूर्त्ति का दर्शन करना, ये सभी भक्ति के अङ्ग हैं॥ ८६॥

आरती, उत्सवादि का दर्शन करना, हरि कथा श्रवण करना, उनकी कृपा का अवलोकन करना, स्मृति, रूप गुण क्रीड़ादि का ध्यान करना, दास्य, सख्य, एवं आत्मनिवेदन करना ये सब भक्ति के अङ्ग हैं॥ ८७॥

निज प्रिय वस्तु को दान करना, कृष्ण के लिए समस्त चेष्टा करना, सर्वथा शरणापत्ति करना, श्री भगवान् की तुलसी आदि की सेवा करना भक्ति के अङ्ग हैं॥ ८८॥

तदीयास्तुलसीशास्त्रमथुरावैष्णवादयः।
यथावैभवसामग्रीसद्गोष्ठीभिर्महोत्सवः॥ (८९)

### अनुवाद

श्री भगवान् की प्रिया तुलसी की सेवा करना, शास्त्र की सेवा करना, मथुरा की सेवा करना, वैष्णवों आदि की सेवा करना, यथाशक्ति सामग्री एकत्र करके साधुजनों के साथ महोत्सव करना ये भक्ति के अङ्ग हैं॥ ८९॥

### अर्थरत्नाल्प-दीपिका

वैष्णवादयः इति आदिशब्दाद् यमुनादिः, यथावैभवसामग्र्यश्च सद्गोष्ठी च यथावैभवसामग्रीसद्गोष्ठ्यस्ताभिः॥ ८९॥

### अनुवाद

वैष्णव आदि की सेवा करना, यहाँ आदि शब्द से यमुनादि की सेवा करना जानना चाहिये। यथा वैभव सामग्री के द्वारा सद्गोष्ठी के साथ महोत्सव करना उत्तमा भक्ति के अङ्ग हैं॥ ८९॥

ऊर्जादरो विशेषेण यात्रा जन्मदिनादिषु।
श्रद्धाविशेषतः प्रीतिः श्रीमूर्तेरङ्घ्रिसेवने॥ (९०)

### अनुवाद

नियम पूर्वक कार्त्तिक मास में व्रत करना, जन्मदिन आदि में यात्रा करना, श्री मूर्त्ति की चरण सेवा में प्रीति करना, ये उत्तमा भक्ति के अङ्ग हैं॥ ९०॥

### अर्थरत्नाल्प-दीपिका

विशेषपदस्वारस्यान्माघाद्या गृहीताः; यात्रा उत्सवः; आदिशब्दाद् वसन्तदोलादिदिनानि॥ ९०॥

### अनुवाद

ऊर्जादरो विशेषेण—यहाँ पर विशेष पद देने के कारण माघ आदि मास को भी जानना होगा। माघ, वैशाख मास में भी नियमपूर्वक सेवा करना भक्ति का अङ्ग है। यात्रा शब्द से उत्सव को समझना होगा। आदि शब्द से वसन्तोत्सव, झूलनोत्सव प्रभृति को जानना है॥ ९०॥

**श्रीमद्भागवतार्थानामास्वादो रसिकैः सह।**
**सजातीयाशये स्निग्धे साधौ सङ्गः स्वतो वरे॥ (९१)**

### अनुवाद

रसिकों के साथ श्रीमद्‌भागवत के अर्थों का आस्वादन करना, सजातीय आशय, स्निग्ध एवं स्वयं से श्रेष्ठ साधु का सङ्ग करना भक्ति का अङ्ग है॥ ९१॥

### अर्थरत्नाल्प-दीपिका

श्रीमदिति; आस्वाद आसक्त्यानुमोदनम्, स्निग्धे स्नेहकर्त्तरि साधौ सदाचारे॥ ९१॥

### अनुवाद

आस्वाद का अर्थ है— आसक्ति पूर्वक अनुमोदन करना। स्निग्ध का अर्थ है— स्नेह करने वाला। साधु का अर्थ है— सदाचार सम्पन्न व्यक्ति ॥ ९१॥

**नामसङ्कीर्त्तनं श्रीमन्मथुरामण्डले स्थितिः॥ (९२)**

### अनुवाद

भगवन्नाम का संकीर्त्तन करना एवं श्रीमन् मथुरा मण्डल में वास करना भक्ति का अङ्ग है॥ ९२॥

**अङ्गानां पञ्चकस्यास्य पूर्वं विलिखितस्य च।**
**निखिलश्रैष्ठ्यबोधाय पुनरप्यत्र कीर्त्तनम्॥ (९३)**

इन पाँचों अङ्गों का उल्लेख पहले होने पर भी इनकी सर्वश्रेष्ठता प्रतिपादन करने के लिए यहाँ पुनर्वार लिखा गया है॥ ९३॥

**इति कायहृषीकान्तःकरणानामुपासनाः॥ (९४)**
**चतुःषष्टिः पृथक् साङ्घातिकभेदात् क्रमादिमाः॥ (९५)**

### अनुवाद

इस प्रकार, शरीर, इन्द्रिय और अन्तःकरण की उपासना लिखी गयी॥ ९४॥

इन सबमें कुछ पृथक अङ्ग हैं। और कुछ अङ्ग अपने समस्त भेदों को लेकर समष्टि रूप से एक अंग है। यहाँ पर इन सबको क्रमपूर्वक लिखा गया है। कहने का अभिप्राय यह है कि चौसठ प्रकार के अंगों में कुछ पृथक अर्थात् एकक हैं और कुछ समुदाय रूप में अनेक भेद युक्त हैं। अनेक भेद युक्त अंग को समष्टि रूप में एक अंग कहा गया है। इस प्रकार भक्ति के चौसठ अंगों को क्रम पूर्वक लिखा गया है॥ ९५॥

### भक्तिसार-प्रदर्शिनी

इति कायेन्द्रियान्तःकरणानामिमाः चतुःषष्टिरुपासनाः। गुरुपादाश्रयादीनां पृथक् तत्तद्रूपेणैव भेदो ज्ञेयः। अर्चनकीर्त्तनादीनां यावन्तो भेदा वर्त्तन्ते, तेषां सङ्घातिकत्वेन समुदायत्वेन भेदो ज्ञेयः। अतएवार्चनाद्यङ्गानामवान्तरभेदविवक्षयाऽनन्तत्वे सति समुदायत्वेन एकभेदविवक्षया न तु चतुःषष्टिगणनानुपपत्तिरिति॥ ९४-९५॥

### अनुवाद

इस प्रकार शरीर, इन्द्रिय और अन्तःकरण के द्वारा होने वाली ये चौषट प्रकार की उपासनायें हैं। गुरु पादाश्रयादि को पृथक अंग के रूप में जानना होगा। इनका कोई अवान्तर भेद नहीं होता है।

अर्चन, कीर्त्तन आदि के जितने भेद हैं वे समुदाय रूप से भेद हैं। अर्चनादि अङ्गों के भेद को पृथक्-पृथक् रूप से कहने से अनन्त हो जायेंगे इसलिए उन सबको समुदाय रूप में एक भेद मानने से चौषठ अङ्गों का समाधान हुआ है॥ ९४-९५॥

**अथार्षानुमतेनैषामुदाहरणमीर्य्यते॥ (९६)**

### अनुवाद

अब ऋषि वाक्यों के अनुसार इन सब अङ्गों के उदाहरण प्रस्तुत कर रहे हैं॥ ९६॥

**तत्र श्रीगुरुपादाश्रयो (१), यथा एकादशे (११/३/२१)—**

**तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।**
**शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्॥ (९७)**

### अनुवाद

श्रीगुरुपादाश्रय (१), एकादश स्कन्ध में कहा गया है—

इसलिए जो परम कल्याण का जिज्ञासु हो उसे शब्द ब्रह्म और परब्रह्म में परिनिष्ठित शान्तचित्त श्रीगुरुदेव की शरण लेनी चाहिये॥ ९७॥

### भक्तिसार-प्रदर्शिनी

शाब्दे भक्तिशास्त्रे। परे ब्रह्मणि भगवद्विषयकश्रवणकीर्त्तनादौ निष्णातं पारं गतम्॥ ९७॥

### अनुवाद

शाब्दे अर्थात् भक्ति शास्त्र में। परब्रह्मणि अर्थात् भगवद् विषयक श्रवण कीर्त्तनादि में निष्णात

अर्थात् पारंगत॥ ९७॥

**श्रीकृष्णदीक्षादिशिक्षणं (२), यथा तत्रैव (भा. ११/३/२२)—**

**तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः।**
**अमाययानुवृत्त्या यैस्तुष्येदात्मप्रदो हरिः॥ (९८)**

**अनुवाद**

श्रीकृष्णदीक्षापूर्वक शिक्षण (२)—वहीं पर ही एकादश स्कन्ध में कहा गया है—

जिज्ञासु को चाहिये कि वह श्री गुरुदेव को ही अपना परम प्रियतम आत्मा और इष्टदेव मानकर उनकी निष्कपट भाव से सेवा करे और उनके पास रहकर भागवत धर्म की-भगवान् को प्राप्त कराने वाले भक्ति भाव के साधनों की क्रियात्मक शिक्षा ग्रहण करे। इन्हीं साधनों से अपने को दान करने वाले भगवान् प्रसन्न होते हैं॥ ९८॥

**भक्तिसार-प्रदर्शिनी**

गुरुरेवात्मा आत्मवत् प्रियः, दैवतम् इष्टदेवश्च यस्य तथाभूतः। अनुवृत्त्या सेवया। यैर्धर्मैर्वस्तुत आत्मा आत्मप्रदश्चोपासकानां यथा— बलिप्रभृतीनां॥ ९८॥

**अनुवाद**

गुरु ही आत्मा हैं अर्थात् आत्मा जिस प्रकार प्रिय है उसी प्रकार गुरुदेव भी प्रिय हैं। दैवतम्— इष्टदेव उपास्य देवरूप श्रीगुरुदेव हैं। अनुवृत्त्या अर्थात् सेवा के द्वारा श्रीगुरुदेव को सन्तुष्ट करना आवश्यक है। इस धर्म के द्वारा आत्मप्रद हरि उपासक के प्रति उसी प्रकार सन्तुष्ट होते हैं जिस प्रकार बलि प्रभृति के प्रति श्रीभगवान् सन्तुष्ट हुये थे॥ ९८॥

**विस्रम्भेण गुरोः सेवा (३), यथा तत्रैव (भा. ११/१७/२७)—**

**आचार्य्यं मां विजानीयान्नावमन्येत कर्हिचित्।**
**न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः॥ (९९)**

**अनुवाद**

विश्वास पूर्वक श्री गुरुदेव की सेवा (३)— इसका विधान श्रीमद्भागवत के ११।१७।२७ में इस प्रकार है—

आचार्य को मेरा ही स्वरूप समझे, कभी भी उनकी अवमानना न करे और उन्हें साधारण मनुष्य समझकर दोष दृष्टि न करे, क्योंकि गुरुदेव सर्वदेवमय होते हैं॥ ९९॥

**भक्तिसार-प्रदर्शिनी**

आचार्यं मां मदीयम्। अतएव 'गुरुवरं, मुकुन्दप्रेष्ठत्वेनस्मरे'त्याद्युक्तिरपि सङ्गच्छते। सामान्य मनुष्यबुद्ध्या नावमन्येत॥ ९९॥

**अनुवाद**

आचार्य को मां अर्थात् मेरा जन जाने। अतएव श्री गुरुदेव को "मुकुन्द के प्रिय रूप से स्मरण

करो" श्री रघुनाथ दास गोस्वामिपाद की यह उक्ति सुसंगत है। श्री गुरुदेव की सामान्य मनुष्य बुद्धि से अवमानना न करे ॥ ९९ ॥

**साधुवर्त्मानुवर्त्तनं (४), यथा स्कान्दे—**

**स मृग्यः श्रेयसां हेतुः पन्थाः सन्तापवर्जितः।**
**अनवाप्तश्रमं पूर्वे येन सन्तः प्रतस्थिरे॥ (१००)**

### अनुवाद

साधुपथ का अनुवर्त्तन (४)— स्कन्द पुराण में कहा गया है—

बिना परिश्रम से पूर्व में सज्जनगण जिस पथ को अवलम्बन करके भगवत् प्राप्ति किये थे सन्ताप वर्जित मङ्गल का एकमात्र कारण उस पथ का ही अवलम्बन करना चाहिये॥ १००॥

### दुर्गमसङ्गमनी

तच्च साधुवर्त्म श्रुत्यादिविध्यात्मकमेव॥ १००॥

### अनुवाद

यह साधु मार्ग श्रुति आदि शास्त्रों में वर्णित विधिरूप है॥ १००॥

### भक्तिसार-प्रदर्शिनी

अनवाप्तश्रमं यथा स्यात् तथा येन पथा सन्तः प्रतस्थिरे॥ १००॥

### अनुवाद

पहले के महाजनगण बिना क्लेश से जिस पथ से भगवत् प्राप्ति किये हैं, उसी पथ का अनुसरण करना चाहिये॥ १००॥

**ब्रह्मयामले च—**

**श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिं विना।**
**ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते॥ इति। (१०१)**

### अनुवाद

ब्रह्मयामल में उक्त है—

श्रुति, स्मृति, पुराण, पञ्चरात्र प्रभृति के विधि से रहित ऐकान्तिकी हरिभक्ति करने से उत्पात ही होता है॥ १०१॥

### दुर्गमसङ्गमनी

ततस्तदकरणे दोषमाह— श्रुतीति। श्रुत्यादयोऽप्यत्र वैष्णवानां स्वाधिकारप्राप्तास्तद्भागा एव ज्ञेयाः। (भा. ११/२१/२)— 'स्वे स्वेऽधिकार' इत्युक्तेः। श्रुत्यादिविधिं विनेति नास्तिकतया तं न मत्वेत्यर्थः। न त्वज्ञानेन, आलस्येन वा त्यक्त्वेत्यर्थः। (भा. ११/२/३५)—'धावन्निमील्य वा नेत्रे'

इत्यादेः, ऐकान्तिकनिष्ठां प्राप्तापि॥ १०१॥

## अनुवाद

साधु मार्ग श्रुति आदि के द्वारा विध्यात्मक है। अतएव उसका पालन न करने से दोष होता है। इसके लिये कहते हैं श्रुति इत्यादि श्लोक।

समस्त श्रुतियों को ग्रहण नहीं करना पड़ेगा किन्तु वैष्णवों के लिए जो निज अधिकार में आता है, उसी अंश को लेना पड़ेगा। श्रीमद्‌भागवत के ११/२१/२ में लिखित है–

"स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः,
विपर्य्ययस्तु दोषः स्यादुमयोरेष निश्चियः॥"

अर्थात् अपने-अपने अधिकार में जो निष्ठा है वही गुण रूप में परिकीर्त्तित है। इसका विपर्य्यय अर्थात् निज अधिकार में निष्ठा हीनता तथा दूसरे के अधिकार में निष्ठा होना दोष है। गुण और दोष का निर्द्धारण इस प्रकार है।

श्रुत्यादि विधि के बिना का अर्थ है– श्रुतियों में विश्वास न होने से उनमें वर्णित विधियों को न मानकर जो ऐकान्तिकी भक्ति होती है उससे उत्पात होता है। किन्तु अज्ञान अथवा आलस्य से श्रुत्यादि विधि का परित्याग होने पर उत्पात नहीं होता है। श्री भागवत ११/२/३५ में उक्त है–

यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्।
धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह॥

हे राजन्! इन मार्ग व धर्म का अवलम्बन करके मनुष्य कभी विघ्नों से पीड़ित नहीं होता है। और नेत्र बंद करके दौड़ने पर अर्थात् विधि-विधान में त्रुटि हो जाने पर भी न तो मार्ग से स्खलित होता है, और न ही पतित अर्थात् फल से वञ्चित होता है।

ऐकान्तिक निष्ठा प्राप्त होने पर भी श्रुति स्मृति का अनादर करने से उत्पात ही होता है॥ १०१॥

## अर्थरत्नाल्प-दीपिका

तच्च साधुवर्त्म श्रुत्यादिविध्यात्मकमेव; ततस्तदकरणे दोषमाह– श्रुतिस्मृतीति॥ १०१॥

## अनुवाद

श्रुति प्रभृति के विधान अनुसार ही साधु मार्ग होता है। उसका आचरण न करने पर दोष होता है। इसके लिये कहते हैं– श्रुति, स्मृति, पुराणादि एवं पञ्चरात्र विधि को छोड़कर ऐकान्तिक हरि भक्ति उत्पात का कारण होती है॥ १०१॥

## भक्तिसार-प्रदर्शिनी

ननु साधुवर्त्म श्रुत्यादिर्विध्यात्मकमेव ततस्तदकरणे दोषमाह– श्रुतीति। श्रुत्यादिविधिं विनेति– नास्तिकतया तत् न मत्वेत्यर्थः। ऐकान्तिकीनिष्ठां प्राप्तापि॥ १०१॥

## अनुवाद

श्रुति प्रभृति के विधान अनुसार ही साधु मार्ग होता है। उसका आचरण न करने पर दोष होता है।

इसके लिये कहते हैं— श्रुति इत्यादि। श्रुत्यादिविधिं विना इत्यादि का भाव है नास्तिकता के कारण श्रुतियों को न मानना। नास्तिक बुद्धि से शास्त्रों को न मानकर भक्ति आचरण करने पर ऐकान्तिक निष्ठा प्राप्त होने पर भी वह आचरण उत्पात के लिए ही होता है॥ १०१॥

**भक्तिरैकान्तिकीवेयमविचारात्प्रतीयते।**
**वस्तुतस्तु तथा नैव यदशास्त्रीयतेक्ष्यते॥ (१०२)**

## अनुवाद

विचार न करने के कारण यह भक्ति ऐकान्तिकी के समान प्रतीत होती है। वस्तुतः इस प्रकार की भक्ति ऐकान्तिकी भक्ति नहीं है क्योंकि इसमें अशास्त्रीयता अर्थात् शास्त्र का अनादर दिखाई देता है॥ १०२॥

## दुर्गमसङ्गमनी

ननु तर्हि कथमैकान्तिकी स्यात्तद्रूपत्वे च कथमुत्पाताय कल्पते? तत्राह— भक्तिरिति। इयं नास्तिकतामयी बौद्धादीनां बुद्धदत्तात्रेयादिषु भक्तिर्यदैकान्तिकीव प्रतीयते तदप्यविचारादेवेत्यर्थः। तत्र हेतुः यद् यस्मादशास्त्रीयता शास्त्रावज्ञामयता तत्रेक्ष्यते; शास्त्रमत्र वेदस्तदङ्गादि। "शास्त्रयोनित्वादि"ति न्यायात्। तदा तत्तदवतारिभगवदाज्ञारूपानादिसत्परम्पराप्राप्तवेदवेदाङ्गावज्ञायां सत्यां कथमैकान्तिकी सा स्यादिति भण्यतां। किञ्च येनैव वेदादिप्रामाण्येन बुद्धादीनामवतारत्वं गम्यते, तेनैव बुद्धस्यासुरमोहनार्थं पाषण्डशास्त्रप्रपञ्चयितृत्वंञ्च श्रूयते, विष्णुधर्मादौ त्रियुगनामव्याख्याने। तत्र तु श्रीभगवदावेशमात्रत्वञ्चोपाख्यायते, तस्मात्तदाज्ञाऽपि न प्रमाणीकर्तव्येति॥ १०२॥

## अनुवाद

यहाँ शंका है कि शास्त्र अविहित भक्ति ऐकान्तिकी कैसे होगी? और ऐकान्तिकी होने पर इससे उत्पात कैसे होगा? इसके उत्तर में कहते हैं विचार न करने से यह भक्ति ऐकान्तिकी की तरह दिखाई देती है इत्यादि।

यह बौद्धादिकों की नास्तिकतामयी भक्ति है। बुद्ध, दत्तात्रेय आदि में ऐकान्तिकी के समान जो भक्ति प्रतीत होती है वह अविचार के कारण है। इसका कारण यह है कि यह अशास्त्रीय है, इसमें शास्त्रों की अवज्ञा है।

शास्त्र शब्द से वेद और उनके अङ्गों को जानना होगा। "शास्त्रयोनित्वात्" इस नियम से। इसलिए बुद्ध-दत्तात्रेय आदि के भी अवतारी भगवान् की आज्ञारूप अनादि सत्परम्परा से प्राप्त वेद-वेदाङ्ग की अवज्ञा करने के कारण वह भक्ति भला कैसे ऐकान्तिकी भक्ति हो सकती है?

और भी जिन वेदादि के प्रामाण्य से बुद्धादि का अवतारत्व जाना जाता है उसी शास्त्र से ज्ञात होता है कि असुरों को मोहित करने के लिए पाषण्ड शास्त्र का विस्तार करना ही उनका कार्य रहा। विष्णुधर्म शास्त्र के त्रियुग नाम व्याख्यान में इसका विवरण है। वहाँ पर श्रीभगवदावेश मात्र रूप में इन सबको कहा गया है। इसलिए इन सबकी आज्ञा को भी प्रमाण रूप में स्वीकार करना कर्त्तव्य नहीं है॥ १०२॥

## अर्थरत्नाल्प-दीपिका

ननु श्रुत्यादिविध्यभावे कथमैकान्तिकी स्यात्तद्रूपत्वे च कथमुत्पाताय कल्पते? तत्र श्लोकाभिप्रायं विवृणुते— भक्तिरिति। अशास्त्रीयत्वात् तावत् सा भक्तिर्वैधीरागानुगारूपा नास्ति, सन्मार्गानादरेण कल्पितत्वादुत्पातायैव कुमार्गगामित्वायैव कल्पत इति भावः॥ १०२॥

## अनुवाद

श्रुति आदि की विधि के अभाव से वह भक्ति ऐकान्तिकी कैसे हो सकती है? और ऐकान्तिकी होने पर उत्पात के लिए भी कैसे हो सकती? इसके लिए 'श्रुति स्मृति इत्यादि' श्लोक का अभिप्राय कहते हैं— भक्तिरिति कारिका के द्वारा। अशास्त्रीय आचरण होने के कारण वह भक्ति वैधी व रागानुगा रूपा नहीं है। और सन्मार्ग का अनादर होने से कल्पित होने के कारण उत्पात होगा अर्थात् इससे कुमार्गगामी होना पड़ेगा॥ १०२॥

## भक्तिसार-प्रदर्शिनी

ननु तर्हि कथमैकान्तिकी स्यात्तद्रूपत्वे च कथमुत्पाताय कल्पते? तत्राह— भक्तिरिति। इयं नास्तिकतामयी बौद्धादिपाषण्डानां बुद्धाद्यवतारेषु, एवमाधुनिकमतानुवर्त्तिनां श्रीकृष्णे भक्तिर्यदैकान्तिकीव प्रतीयते, तदविचारादेवेत्यर्थः। तत्र हेतुः— यद् यस्मादशास्त्रीयता शास्त्रावज्ञामयता तत्रेक्ष्यते॥ १०२॥

## अनुवाद

यहाँ शंका है कि शास्त्र अविहित भक्ति ऐकान्तिकी कैसे होगी? और ऐकान्तिकी होने पर इससे उत्पात कैसे होगा? इसके उत्तर में कहते हैं विचार न करने से यह भक्ति ऐकान्तिकी की तरह दिखाई देती है इत्यादि।

यह नास्तिकतामयी भक्ति है। बुद्धादि अवतारों में बौद्धादि पाषण्डियों की और आधुनिकमतानुवर्त्ति लोगों की श्रीकृष्ण में जो भक्ति ऐकान्तिकी के समान प्रतीत होती है वह अविचार के कारण है। इसका कारण यह है कि यह अशास्त्रीय है, इसमें शास्त्रों की अवज्ञा दिखायी देती है॥ १०२॥

**सद्धर्म्मपृच्छा (५), यथा नारदीये—**

**अचिरादेव सर्वार्थः सिद्ध्यत्येषामभीप्सितः।**
**सद्धर्मस्यावबोधाय येषां निर्बन्धिनी मतिः॥ (१०३)**

## अनुवाद

सद्धर्म विषयक प्रश्न (५), यथा नारदीय पुराण में कहा गया है—

सद्धर्म को जानने के लिए जिनकी मति अतिशय आग्रहशील होती है, स्वल्पकाल में ही उनका अभीष्ट सर्वार्थ सिद्ध होता है॥ १०३॥

**कृष्णार्थे भोगादित्यागो (६), यथा पाद्मे—**

**हरिमुद्दिश्य भोग्यानि काले त्यक्तवतस्तव।**
**विष्णुलोके स्थिता सम्पदलोला सा प्रतीक्षते॥ (१०४)**

### अनुवाद

कृष्ण के लिए भोगादि का त्याग (६), यथा पद्मपुराण में कहा गया है—

श्रीहरि के उद्देश्य से तुमने समय-समय पर भोगादि का त्याग किया है अत: तुमको वरण करने के लिए विष्णु लोक स्थित अचञ्चला सम्पद् तुम्हारी प्रतीक्षा कर रही है॥ १०४॥

### दुर्गमसङ्गमनी

त्यक्तेति त्यक्तवन्तं त्वामित्यर्थः॥ १०४॥

### अनुवाद

त्यक्तवतस्तव को त्यक्तवन्तं त्वाम् जानना है, ऐसा होने से श्लोक का अर्थ होगा— श्रीहरि के उद्देश्य में भोगादि त्याग करने वाले तुम्हारा विष्णुलोक स्थित अचञ्चला सम्पद् प्रतीक्षा कर रही है॥ १०४॥

### अर्थरत्नाल्प-दीपिका

हरिमुद्दिश्येति; त्यक्तवत इति शेषे षष्ठी,— 'भजे शम्भोश्चरणयोः' इतिवत् ॥ १०४॥

### अनुवाद

श्रीहरि के उद्देश्य से भोगादि का त्याग करने वाले तुम्हारा वरण करने के लिए विष्णुलोक स्थित अचञ्चला सम्पद् प्रतीक्षा कर रही है। यहाँ पर "त्यक्तवतस्तव" शेषेषष्ठी हुयी है, जैसे "भजे शम्भोश्चरणयोः" स्थल में हुयी है॥ १०४॥

### भक्तिसार-प्रदर्शिनी

त्यक्तेति— त्यक्तवन्तं त्वामित्यर्थः॥ १०४॥

### अनुवाद

त्यक्तवतस्तव को त्यक्तवन्तं त्वाम् जानना है, ऐसा होने से श्लोक का अर्थ होगा— श्रीहरि के उद्देश्य में भोगादि त्याग करने वाले तुम्हारा विष्णुलोक स्थित अचञ्चला सम्पद् प्रतीक्षा कर रही है॥ १०४॥

**द्वारकादिनिवासो (७), यथा स्कान्दे—**

**संवत्सरं वा षण्मासान् मासं मासार्द्धमेव वा।**
**द्वारकावासिनः सर्वे नरा नार्य्यश्चतुर्भुजाः॥ (१०५)**

### अनुवाद

द्वारकादि में निवास (७), स्कन्द पुराण में कहा गया है—

एक वर्ष, छै मास, एक मास या पन्द्रह दिन द्वारका में वास करने से सभी नर-नारी चतुर्भुज हो जाते हैं॥ १०५॥

### अर्थरत्नाल्प-दीपिका

मनोऽशुद्ध्यादिना सम्वत्सरादिक्रमः॥ १०५॥

### अनुवाद

मन की अशुद्धि आदि के कारण संवत्सरादि का क्रम कहा गया है॥ १०५॥

**आदिपदेन पुरुषोत्तमवासश्च, यथा ब्राह्मे—**

**अहो क्षेत्रस्य माहात्म्यं समन्ताद्दशयोजनम्।**
**दिविष्ठा यत्र पश्यन्ति सर्वानेव चतुर्भुजान्॥ (१०६)**

### अनुवाद

आदि पद से पुरुषोत्तमवास को जानना चाहिये, ब्रह्मपुराण में उक्त है—

अहो! क्षेत्र (पुरुषोत्तम क्षेत्र) का माहात्म्य कैसा है? इसके दशयोजन स्थान में रहने वाले समस्त प्राणियों को देवगण चतुर्भुज रूप में देखते हैं॥ १०६॥

**गङ्गादिवासो, यथा प्रथमे (भा. १/१९/६)—**

**या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेणवभ्यधिकाम्बुनेत्री।**
**पुनाति लोकानुभयत्र सेशान् कस्तां न सेवेत मरिष्यमाणः?॥ (१०७)**

### अनुवाद

गङ्गाजी का जल भगवान् श्रीकृष्ण के चरण कमलों का वह पराग लेकर प्रवाहित होता है, जो श्रीमती तुलसी की गन्ध से मिश्रित है। यही कारण है कि वे लोकपालों के सहित ऊपर नीचे के समस्त लोकों को पवित्र करती हैं। कौन ऐसा मरणासन्न पुरुष होगा, जो उनको सेवन न करेगा?॥१०७॥

### भक्तिसार-प्रदर्शिनी

या गङ्गा उभयत्र अस्मिन् लोके परत्र च ईशसहितान् लोकान् पुनाति। कथम्भूता लसन्ती या श्रीयुक्ता तुलसी तया विमिश्रो यः कृष्णाङ्घ्रिरेणुस्तेनैवाभ्यधिकं सर्वतोऽपि श्रेष्ठं यदम्बु तस्य नेत्री प्रापयित्री॥ १०७॥

### अनुवाद

जो गङ्गा इहलोक एवं परलोक दोनों जगह महादेव से लेकर समस्त लोकों को पवित्र करती रहती है, वह गङ्गा किस प्रकार की हैं? कहते हैं— श्रीकृष्ण के चरण रेणु तुलसी से मिश्रित व सौन्दर्य युक्त जल को प्राप्त करती रहती हैं। यह सभी जलों से श्रेष्ठ नेत्री प्रापयित्री हैं॥ १०७॥

**यावदर्थानुवर्त्तिता (८), यथा नारदीये—**

**यावता स्यात्स्वनिर्वाहः स्वीकुर्य्यात्तावदर्थवित्।**
**आधिक्ये न्यूनतायाञ्च च्यवते परमार्थतः॥ (१०८)**

## अनुवाद

यावदर्थानुवर्त्तिता (८), यथा नारदीय पुराण में उक्त है—

जिसके द्वारा स्व निर्वाह हो, प्रयोजन को जानने वाला व्यक्ति उतना ही स्वीकार करे। कम अथवा अधिक स्वीकार करने से परमार्थ से पतन हो जाता है॥ १०८॥

## दुर्गमसङ्गमनी

स्वनिर्वाह इति स्वस्वभक्तिनिर्वाह इत्यर्थः॥ १०८॥

## अनुवाद

स्वनिर्वाह अर्थात् जिससे निज भक्ति आचरण का निर्वाह हो उतना ही ग्रहण करना चाहिये॥ १०८॥

## अर्थरत्नाल्प-दीपिका

यावतेति; स्वनिर्वाहो देहादेरावश्यकनिर्वाहः। स्वभक्तिनिर्वाह इति व्याख्या तदर्थेऽखिलचेष्टितेन्तर्भवेत्॥ १०८॥

## अनुवाद

यहाँ स्वनिर्वाह का अभिप्राय है देहादि के आवश्यक निर्वाह। 'स्वभक्तिनिर्वाह' इस प्रकार की व्याख्या' तदर्थेऽखिलचेष्टितम्' (भ.र.सि. १/२/२००) के अन्तर्गत आता है॥ १०८॥

## भक्तिसार-प्रदर्शिनी

स्वनिर्वाह इति स्वस्य भक्तिनिर्वाह इत्यर्थः॥ १०८॥

## अनुवाद

स्वनिर्वाह अर्थात् जिससे निज भक्ति आचरण का निर्वाह हो उतना ही ग्रहण करना चाहिये॥ १०८॥

**हरिवासरसम्मानो (९), यथा ब्रह्मवैवर्त्ते—**

**सर्वपापप्रशमनं पुण्यमात्यन्तिकं तथा।**
**गोविन्दस्मारणं नृणामेकादश्यामुपोषणम्॥ (१०९)**

## अनुवाद

हरिवासर सम्मान (९), ब्रह्मवैवर्त्त में लिखा है—

एकादशी का उपवास करने से मानव का समस्त पाप नाश होता है, और आत्यन्तिक पुण्य लाभ व श्रीगोविन्द का स्मरण होता है॥ १०९॥

**धात्र्यश्वत्थादिगौरवं (१०), यथा स्कान्दे—**

**अश्वत्थ-तुलसी-धात्री-गो-भूमीसुर-वैष्णवाः।**
**पूजिताः प्रणताः ध्याताः क्षपयन्ति नृणामघम्॥ (११०)**

## अनुवाद

धात्री, पीपल आदि का गौरव (१०), यथा स्कन्दपुराण में कहा गया है—

अश्वत्थ, तुलसी, आँवला, गो, ब्राह्मण व वैष्णव ये सभी पूजित, प्रणत एवं ध्यान किये जाने से मनुष्यों के पाप कटते हैं॥ ११०॥

## दुर्गमसङ्गमनी

अश्वत्थस्य तद्विभूतिरूपत्वात् पूज्यत्वं। भूमीसुरा ब्राह्मणाः। गोब्राह्मणयोर्हितावतारत्वाद्भगवतो भागवतैरेतावपि पूज्याविति भावः। सर्वेषामेषां तुलसीवैष्णवसाहित्योक्तिर्विचिकित्सानिरसनाय। तत्र गवां पूजा तु श्रीगोपालोपासकानां परमाभीष्टप्रदा, यथा श्रीगौतमीये—

"गवां कण्डूयनं कुर्य्याद् गोग्रासं गोप्रदक्षिणम्।
गोषु नित्यं प्रसन्नासु गोपालोऽपि प्रसीदति" इति॥ ११०॥

## अनुवाद

अश्वत्थ भगवान् श्रीकृष्ण की विभूति रूप होने के कारण पूज्य है। भूमिसुर ब्राह्मणगण हैं। गो और ब्राह्मणों के हित के लिये भगवान् का अवतार होने के कारण भागवत वैष्णवों के लिए ये दोनों भी पूज्य हैं। तुलसी एवं वैष्णव के साथ अश्वत्थ, धात्री, गो, ब्राह्मण का पाठ इनके पूज्यत्व में शङ्का निरसन के लिए किया गया है। इनके बीच में गौओं की पूजा तो श्रीगोपालोपासकों के लिए परमाभीष्टप्रद है। श्रीगौतमीय तन्त्र में इसका वर्णन इस प्रकार है—

गौओं का कण्डूयन करे, गो ग्रास प्रदान करे, गौओं की परिक्रमा करे। कारण गौ समूह के नित्य प्रसन्न होने से गोपाल भी प्रसन्न होते हैं॥ ११०॥

## भक्तिसार-प्रदर्शिनी

अश्वथस्य तद्विभूतिरूपत्वात् पूज्यत्वम्। भूमीसुरा ब्राह्मणाः, भगवतो गोब्राह्मणयोर्हितावतारत्वाद् भागवतैरेतावपि पूज्याविति भावः। सर्वेषां तुलसीवैष्णवसाहित्योक्तिर्विचिकित्सानिरसनाय, अत्र गवां पूजा तु गोपालोपासकानां परमाभीष्टप्रदा, यथा गौतमीये—

"गवां कण्डूयनं कुर्य्याद् गोग्रासं गोप्रदक्षिणम्।
गोषु नित्यं प्रसन्नासु गोपालोऽपि प्रसीदती" ति॥ ११०॥

## अनुवाद

अश्वत्थ भगवान् श्रीकृष्ण की विभूति रूप होने के कारण पूज्य है। भूमिसुर ब्राह्मणगण हैं। गो

और ब्राह्मणों के हित के लिये भगवान् का अवतार होने के कारण भागवत वैष्णवों के लिए ये दोनों भी पूज्य हैं। तुलसी एवं वैष्णव के साथ अश्वत्थ, धात्री, गो, ब्राह्मण का पाठ इनके पूज्यत्व में शङ्का निरसन के लिए किया गया है। इनके बीच में गौओं की पूजा तो श्री गोपालोपासकों के लिए परमाभीष्टप्रद है। श्रीगौतमीय तन्त्र में इसका वर्णन इस प्रकार है—

गौओं का कण्डूयन करे, गो ग्रास प्रदान करे, गौओं की परिक्रमा करे। कारण गौ समूह के नित्य प्रसन्न होने से गोपाल भी प्रसन्न होते हैं॥ ११०॥

**अथ श्रीकृष्णविमुखसङ्गत्यागो (११), यथा कात्यायनसंहितायाम्—**

**वरं हुतवहज्वाला-पञ्जरान्तर्व्यवस्थितिः।**
**न शौरिचिन्ता-विमुखजन-संवासवैशसम्॥ (१११)**

**विष्णुरहस्ये च—**

**आलिङ्गनं वरं मन्ये व्याल-व्याघ्र-जलौकसाम्।**
**न सङ्गः शल्ययुक्तानां नानादेवैकसेविनाम्॥ (११२)**

### अनुवाद

श्रीकृष्णविमुख का सङ्ग त्याग (११)—

कात्यायन संहिता में श्रीकृष्ण विमुखजन सङ्ग त्याग का विवरण इस प्रकार है—

श्रीकृष्ण चिन्ता विमुख जनों के साथ रूपी विपत्ति की अपेक्षा अग्निज्वालामय पंजर में रहना उत्तम है॥ १११॥

विष्णु रहस्य में भी लिखित है—

सांप, बाघ, मगर आदि हिंसक जीवों के आलिङ्गन भी ग्रहणीय हैं, किन्तु विविध देवता सेवनकारी उन उन देवसेवावासनारूप शल्ययुक्त व्यक्ति के साथ सङ्ग न हो॥ ११२॥

### दुर्गमसङ्गमनी

वैशसं विपत्तिः॥ १११॥ शल्यमत्र तत्तद्देवतान्तरसेवावासना॥ ११२॥

### अनुवाद

वैशसं का अर्थ है— विपत्ति॥ १११॥

यहाँ पर शल्य का अर्थ है— उन उन देवताओं की सेवा वासना॥ ११२॥

### अर्थरत्नाल्प-दीपिका

वरमिति; वैशसं विपत्तिः॥ १११॥ शल्यमत्र तत्तद्देवसेवावासना॥ ११२॥

### अनुवाद

वैशसं का अर्थ है— विपत्ति॥ १११॥

यहाँ पर शल्य का अर्थ है— उन उन देवताओं की सेवा वासना॥ ११२॥

## भक्तिसार-प्रदर्शिनी

वैशसं विपत्तिः॥ १११॥ शल्यमत्र तत्तद्देवानां सेवावासना॥ ११२॥

## अनुवाद

वैशसं का अर्थ है— विपत्ति॥ १११॥

यहाँ पर शल्य का अर्थ है— उन उन देवताओं की सेवा वासना॥ ११२॥

**शिष्याद्यननुबन्धित्वादित्रयं (१२, १३, १४), यथा सप्तमे (भा. ७/१३/८)—**

**न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून्।**
**न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित्॥ (११३)**

## अनुवाद

शिष्याद्यननुबन्धित्वादित्रयं (१२, १३, १४), यथा सप्तम स्कन्ध (भा. ७/१३/८) में कथित है— अनधिकारी शिष्य संग्रह न करे। भगवद् बहिर्मुख अनेकानेक शास्त्राभ्यास भी न करे। वाद-विवाद या फिर जीविका के लिए प्रवचन त्याग करे। भगवद् विमुखता कारक अपर कार्य भी आरम्भ न करे॥ ११३॥

## दुर्गमसङ्गमनी

शिष्यान्नैवानुबध्नीयादित्यादिको यद्यपि संन्यासिधर्मस्तथापि निवृत्तानामप्यन्येषां भक्तानामुपयुज्यत इति भावः। एतच्चानधिकारिशिष्याद्यपेक्षया। श्रीनारदादौ तच्छ्रवणात्, तत्तत्सम्प्रदायनाशप्रसङ्गाच्च; अन्यथा ज्ञानशाठ्यापत्तेः। अतएव नानुबध्नीयादिति स्वस्वसम्प्रदायवृद्ध्यर्थमनधिकारिणोऽपि न सङ्गृह्णीयादित्यर्थः। बहूनिति भगवद्बहिर्मुखानन्यांस्त्वित्यर्थः। आरम्भानित्यपि च तद्वत्॥ ११३॥

## अनुवाद

शिष्य करणादि कार्यो का अनुसरण त्याग यद्यपि सन्यास धर्म है तथापि निवृत्ति मार्ग के भक्तों के पक्ष में भी यह लागू होगा। यह निषेध अनाधिकारी शिष्यकरण आदि की अपेक्षा से है। श्री नारद आदि में शिष्य करण प्रमाण है। शिष्य न करने पर सम्प्रदाय का लोप हो जायेगा एवं ज्ञान शाठ्य दोष भी होगा। अतएव निज निज सम्प्रदाय वृद्धि के लिए अनधिकारी शिष्य भी न करे। बहून् अर्थात् भगवद् बहिर्मुख अन्यान्य शास्त्रों का अभ्यास न करे। आरम्भान् अर्थात् भगवद् बहिर्मुखता कारक कार्य भी आरम्भ न करे॥ ११३॥

## अर्थरत्नाल्प-दीपिका

शिष्यानिति; नानुबध्नीयान्नानुसरेत्, तदनुसरणे लाभप्रतिष्ठादिना साधकस्य साधनशैथिल्यप्राप्तेः, शिष्यकरणन्तु जातरतीनामेव विहितत्वाच्च। ग्रन्थान्नैवाभ्यसेद् बहूनिति कलानामुपलक्षणं, न व्याख्यामुपयुञ्जीतेति वादस्योपलक्षणम्॥ ११३॥

## अनुवाद

शिष्यकरण कार्य का अनुसरण नहीं करना चाहिये। इसका अनुसरण करते रहने से लाभ-प्रतिष्ठा प्रभृति से साधक की साधना में शिथिलता होगा।

शिष्यकरण तो जात रति भक्तों के लिए विहित है अर्थात् जातरति भक्त ही शिष्य करण कार्य करे, अन्य नहीं। भगवद्‌विमुखताकारक अनेक ग्रन्थों का अभ्यास न करे, यह वाक्य अनेक कलाओं का उपलक्षण है अतः अनेक कलाओं का भी अभ्यास न करे। 'न व्याख्यामुपयुञ्जीतेति' यह वाद का उपलक्षण है अर्थात् वाद-विवाद के लिए प्रवचन न करे॥ ११३॥

## भक्तिसार-प्रदर्शिनी

शिष्यान्नैवानुबध्नीयादित्यादिको यद्यपि संन्यासिधर्मस्तथापि निवृत्तानामपि भक्तानामुपयुज्यत इति भावः। एतच्चानधिकारिशिष्याद्यपेक्षया श्रीनारदादौ शिष्यकरणश्रवणात् , तत्तत्सम्प्रदायनाशप्रसङ्गाच्च; अन्यथा ज्ञानशाठ्यापत्तेः; अतएव नानुबध्नीयादिति— स्वसम्प्रदायबृद्ध्यर्थमनधिकारिणोऽपि न गृह्णीयादित्यर्थः। बहूनिति भगवद्बहिर्मुखानन्यांस्त्वित्यर्थः। आरम्भानित्यपि तद्वत्॥ ११३॥

## अनुवाद

शिष्य करणादि कार्यो का अनुसरण त्याग यद्यपि सन्यास धर्म है तथापि निवृत्ति मार्ग के भक्तों के पक्ष में भी यह लागू होगा। यह निषेध अनाधिकारी शिष्यकरण आदि की अपेक्षा से है। श्री नारद आदि में शिष्य करण प्रमाण है। शिष्य न करने पर सम्प्रदाय का लोप हो जायेगा एवं ज्ञान शाठ्य दोष भी होगा। अतएव निज निज सम्प्रदाय वृद्धि के लिए अनधिकारी शिष्य भी न करे। बहून् अर्थात् भगवद् बहिर्मुख अन्यान्य शास्त्रों का अभ्यास न करे। आरम्भान् अर्थात् भगवद् बहिर्मुखता कारक कार्य भी आरम्भ न करे॥ ११३॥

**व्यवहारेऽप्यकार्पण्यं (१५), यथा पाद्मे—**

**अलब्धे वा विनष्टे वा भक्ष्याच्छादनसाधने।**
**अविक्लवमतिर्भूत्वा हरिमेव धिया स्मरेत्॥ (११४)**

## अनुवाद

व्यवहार में भी कार्पण्य न करना (१५), यथा पद्मपुराण में कहा गया है—

भोजन आच्छादन के विषय अप्राप्त होने से अथवा विनष्ट हो जाने से अव्यग्र चित्त होकर मन में हरि का ही स्मरण करना चाहिये॥ ११४॥

## दुर्गमसङ्गमनी

अलब्ध इति। स्मरणादिपराणामेवेयं रीतिः। सेवादिपरैस्तु यथालाभमेव सेवा कार्य्या । न तु याञ्चाद्यतिशयेन (नाति) कार्पण्यं कार्यमिति ज्ञेयम्॥ ११४॥

### अनुवाद

स्मरणादि परायण व्यक्तियों की ही यह रीति है, किन्तु सेवा परायण व्यक्तिगण यथालाभ से सेवा कार्य करें। न कि अतिशय याचनादि के द्वारा दैन्य प्रकाश करें॥ ११४॥

### भक्तिसार-प्रदर्शिनी

अलब्ध इति स्मरणादिपराणामेवेयं रीतिः। सेवापरैस्तु यथालाभमेव सेवा कार्य्या, न तु याचनाद्यतिशयेन कार्पण्यं कार्यमिति ज्ञेयम्॥ ११४॥

### अनुवाद

स्मरणादि परायण व्यक्तियों की ही यह रीति है, किन्तु सेवा परायण व्यक्तिगण यथालाभ से सेवा कार्य करें। न कि अतिशय याचनादि के द्वारा दैन्य प्रकाश करें॥ ११४॥

**शोकाद्यवशवर्त्तिता (१६), यथा तत्रैव**

**शोकामर्षादिभिर्भावैराक्रान्तं यस्य मानसम्।**
**कथं तत्र मुकुन्दस्य स्फूर्त्तिसम्भावना भवेत्?॥ (११५)**

### अनुवाद

शोकादि के वशीभूत न होना (१६), पद्मपुराण में कहा गया है—

जिसका चित्त शोक, क्रोधादि भावों से अभिभूत होता है, उसके चित्त में मुकुन्द की स्फूर्त्ति की सम्भावना कैसे हो सकती है?॥ ११५॥

**अन्यदेवानवज्ञा (१७), यथा तत्रैव—**

**हरिरेव सदाराध्यः सर्वदेवेश्वरेश्वरः।**
**इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन॥ (११६)**

**भूतानुद्वेगदायिता (१८), यथा महाभारते—**

**पितेव पुत्रं करुणो नोद्वेजयति यो जनम्।**
**विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति॥ (११७)**

### अनुवाद

अन्य देवताओं की अवज्ञा न करना (१७), पद्मपुराण में कहा गया है—

सर्व देवेश्वरेश्वर श्रीहरि ही सदा आराध्य हैं। अन्य ब्रह्मा, रुद्रादि की अवज्ञा कभी भी न करें॥ ११६॥

प्राणियों को उद्वेग न देना (१८), महाभारत में कथित है—

पिता जिस प्रकार पुत्र को करुणा से उद्वेग नहीं देता है उसी प्रकार करुणा से जो व्यक्ति दूसरों को उद्वेग नहीं देता है, उस विशुद्ध भक्त के प्रति भगवान् श्रीहृशीकेश सत्त्वर प्रसन्न होते हैं॥ ११७॥

**सेवा-नामापराधानां वर्जनं (१९), यथा वाराहे—**

**ममार्चनापराधा ये कीर्त्त्यन्ते वसुधे! मया।**
**वैष्णवेन सदा ते तु वर्जनीयाः प्रयत्नतः॥ (११८)**

पाद्मे च—

सर्वापराधकृदपि मुच्यते हरिसंश्रयः।
हरेरप्यपराधान् यः कुर्य्याद् द्विपदपांशुलः॥ (११९)
नामाश्रयः कदाचित् स्यात्तरत्येव स नामतः।
नाम्नो हि सर्वसुहृदो ह्यपराधात्पतत्यधः॥ (१२०)

## अनुवाद

सेवापराध एवं नामापराध का वर्जन करना (१९), वराह पुराण में लिखित है—

हे बसुधे! मेरे अर्चन के विषय में जिन अपराधों का मैंने वर्णन किया, वैष्णवों को उन सब अपराधों को यत्नपूर्वक सदा वर्जन करना आवश्यक है॥ ११८॥

पद्मपुराण में कहा गया है—

समस्त अपराधों को करने वाला व्यक्ति भी श्रीहरि का आश्रय करने से उन अपराधों से मुक्त हो जाता है। जो द्विपद पापिष्ठ व्यक्ति श्रीहरि के प्रति अपराध करता रहता है वह कदाचित् श्री हरिनाम का आश्रय लेने पर हरिनाम के द्वारा परित्राण पा जाता है, किन्तु सबके सुहृद उन श्री हरिनाम के पास अपराध करने से अध:पतन होगा ही॥ ११९-१२०॥

## दुर्गमसङ्गमनी

सेवानामापराधानां वर्जनमित्यादि। वाराहे पाद्मे च यथाक्रमं योज्यं। तत्र सेवापराधा आगमानुसारेण गण्यन्ते—

"यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे। देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः॥
उच्छिष्टे वाऽप्यशौचे वा भगवद्वन्दनादिकम्। एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम्॥
पादप्रसारणञ्चाग्रे तथा पर्यङ्कबन्धनम्। शयनं भक्षणञ्चापि मिथ्याभाषणमेव च॥
उच्चैर्भाषा मिथो जल्पो रोदनानि च विग्रहः। निग्रहानुग्रहौ चैव नृषु च क्रूरभाषणम्॥
कम्बलावरणञ्चैव परनिन्दा परस्तुतिः। अश्लीलभाषणञ्चैव अधोवायुविमोक्षणम्॥
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम्। तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम्॥
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिके। पृष्ठीकृत्यासनञ्चैव परेषामभिवादनम्॥
गुरौ मौनं निज स्तोत्रं देवतानिन्दनं तथा। अपराधास्तथा विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः॥"

वाराहे च येऽन्येऽपराधास्ते सङ्क्षिप्य लिख्यन्ते— "राजान्नभोजनं, ध्वान्तागारे हरेः स्पर्शः। विधिं विना हर्य्युपसर्पणं। वाद्यं विना तद्द्वारोद्घाटनं। कुक्कुरदृष्टभक्ष्यसङ्ग्रहः। अर्च्चने मौनभङ्गः। पूजाकाले विड्उत्सर्गाय सर्पणं। गन्धमाल्यादिकमदत्वा धूपनम्। अनर्हपुष्पेण पूजनम्।" तथा—

"अकृत्वा दन्तकाष्ठञ्च कृत्वा निधुवनं तथा। स्पृष्ट्वा रजस्वलां दीपं तथा मृतकमेव च॥
रक्तं नीलमधौतं च पारक्यं मलिनं पटम्। परिधाय मृतं दृष्ट्वा विमुच्यापानमारुतम्॥
क्रोधं कृत्वा श्मशानं च गत्वा भुक्त्वाप्यजीर्णयुक्।

भुक्त्वा कुसुम्भं पिण्याकं तैलाभ्यङ्गं विधाय च॥
हरेः स्पर्शो हरेः कर्मकरणं पातकावहम्॥"

तथा तत्रैवान्यत्र— "भगवच्छास्त्रानादरेण तत्प्रतिपत्तिः। अन्यशास्त्रप्रवर्त्तनं। तदग्रतस्ताम्बूलचर्वणम्। एरण्डपत्रस्थपुष्पैरर्च्चनम्। आसुरकाले पूजनम्, पीठे भूमौ वोपविश्य पूजनम्। स्नपनकाले वामहस्तेन तत्स्पर्शः। पर्य्युषितैर्याचितैर्वा पुष्पैरर्चनं, पूजायां निष्ठीवनं, तस्यां स्वगर्वप्रतिपादनम्। तिर्य्यक्पुण्ड्रधृतिः। अप्रक्षालितपादत्वेऽपि तन्मन्दिरे प्रवेशः। अवैष्णवपक्वनिवेदनम्। अवैष्णवदृष्टौ पूजनम्। विघ्नेशमपूजयित्वा कापालिनं दृष्ट्वा वा पूजनम्। नखाम्भसा स्नपनम्। घर्म्माम्बुलिप्तत्वेऽपि पूजनमित्यादयः'। अन्यत्र 'निर्माल्यलङ्घनं भगवच्छपथादयोऽन्ये च बहवः" इति।

अथ नामापराधाः पाद्मोक्ताः— सतां निन्दा। श्रीविष्णोः सकाशाच्छिवनामादेः स्वातन्त्र्यमननम्। गुर्ववज्ञा। श्रुतितदनुगतशास्त्रनिन्दनम्। हरिनाममहिम्न्यर्थवादमात्रमिदमिति मननम्, तत्र प्रकारान्तरेणार्थकल्पनम्, नामबलेन पापे प्रवृत्तिः। अन्यशुभक्रियाभिर्नामसाम्यमननम्। अश्रद्दधानादौ नामोपदेशः। नाममाहात्म्ये श्रुतेऽप्यप्रीतिरिति। सर्व एवैते हरिभक्तिविलासे प्रमाणवचनैर्द्रष्टव्याः॥ ११८॥

## अनुवाद

सेवा अपराध और नामापराध का वर्णन करते हैं। वराह पुराण एवं पद्म पुराण में जिन अपराधों का वर्णन हुआ है उन्हें क्रमपूर्वक सेवा अपराध और नामापराध विषयक जानना होगा। उसके मध्य में आगम के अनुसार प्रथम सेवापराधों की गिनती करते हैं—

## सेवापराध

(१) यान अथवा पादुका के साथ भगवान् के मन्दिर में गमन करना।
(२) देवता के उत्सव आदि की सेवा न करना।
(३) देवता को उनके समक्ष प्रणाम न करना।
(४) उच्छिष्ठ एवं अशौच अवस्था में देवता के कार्य एवं वन्दन आदि करना।
(५) एक हाथ से प्रणाम करना।
(६) देवता के सामने परिक्रमा करना।
(७) देवता के सामने पैर फैलाना।
(८) पर्यङ्क बन्धनकर बैठना अर्थात् घुटनों को हाथ से पकड़कर बैठना।
(९) देवता के सामने सोना।
(१०) देवता के सामने भोजन करना।
(११) देवता के सामने झूठ बोलना।
(१२) देवता के सामने जोर जोर से बोलना।
(१३) देवता के सामने आपस में मिथ्या जल्प करना।

(१४) देवता के सामने रोदन करना।

(१५) देवता के सामने लड़ना-झगड़ना।

(१६) देवता के सामने किसी पर निग्रह करना।

(१७) देवता के सामने किसी को अनुग्रह करना।

(१८) देवता के सामने मनुष्यों के प्रति क्रूर भाषण करना।

(१९) भगवान् के सामने कम्बल आवरण पूर्वक रहना।

(२०) देवता के सामने दूसरे की निन्दा करना।

(२१) देवता के सामने दूसरे की स्तुति करना।

(२२) देवता के सामने अश्लील भाषण करना।

(२३) देवता के सामने अधोवायु छोड़ना।

(२४) सामर्थ्य रहते हुए भी गौणोपचार अर्थात् साधारण सामग्री से, अल्प व्यय से, केवल जल तुलसी से पूजनादि करना।

(२५) देवता को विना निवेदित किये भक्षण करना।

(२६) ऋतु के अनुसार उत्पन्न फलादि का अर्पण न करना।

(२७) व्यञ्जन आदि में से पहले दूसरे को बाँटकर फिर अवशिष्ट भाग को भगवान् को अर्पण करना।

(२८) भगवान् की ओर पीठ करके बैठना ।

(२९) भगवान् के सामने दूसरों को प्रणाम करना।

(३०) श्री गुरुदेव के सामने मौन धारण करके रहना।

(३१ )श्री गुरुदेव के समक्ष अपनी प्रशंसा करना।

(३२) देवता की निन्दा करना।

श्री विष्णु के प्रति होने वाले ये बत्तीस अपराध हैं।

वराह पुराण में जो सब अन्य सेवापराध लिखित हैं, उसका संक्षिप्त विवरण इस प्रकार है—

(३३) "राजा के अन्न भोजन करना (राजा से बन्धानी करना)।

(३४) अन्धेरे में देवता को स्पर्श करना।

(३५) विधि विधान के बिना हरि के समीप में जाना।

(३६) वाद्य के बिना मन्दिर का द्वार खोलना।

(३७) कुक्कुर दृष्ट भक्ष्य संग्रह करना।

(३८) अर्चन में मौन भङ्ग करना।

(३९) पूजा काल में मलमूत्रादि त्याग के लिए जाना।

(४०) गन्ध माल्यादि न देकर धूप देना।

(४१) अविहित पुष्प से अर्चन करना।"

### अर्थरत्नाल्प-दीपिका

स्तौत्रै: पौरुषै: स्तवैरार्षै:, यथैकादशे (भा. ११/२७/४५)— 'स्तवैरुच्चावचै: स्तौत्रै: पौरुषै: प्राकृतैरपि' इति ॥ १५९ ॥

### अनुवाद

स्तोत्र शब्द का अर्थ है—पुरुषकृत वा स्वकृत और स्तव शब्द का अर्थ है— ऋषियों के द्वारा कृत। यथा भागवत एकादश स्कन्द (११/२७/४५) में उक्त है—

स्तवैरुच्चावचै: स्तोत्रै: पौराणै: प्राकृतैरपि।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥

प्राचीन ऋषियों के द्वारा अथवा प्राकृत भक्तों के द्वारा बनाये हुए छोटे-बड़े स्तव और स्तोत्रों से मेरी स्तुति करके प्रार्थना करे—भगवन्! आप मुझ पर प्रसन्न हों। मुझे अपने कृपा प्रसाद से सराबोर कर दें। उसके बाद दण्डवत् प्रणाम करना चाहिये ॥ १५९ ॥

### भक्तिसार-प्रदर्शिनी

देवाग्रे श्रीमदर्च्चाया: स्तोत्रस्तवयोरभेदेऽप्यवान्तरभेद: पूर्वसिद्धत्वस्वकृतत्वाभ्यां ज्ञेय: ॥ १५९ ॥

### अनुवाद

देवता के समक्ष (श्रीमदर्चा विग्रह के सामने) स्तोत्र और स्तव एक होने पर भी पूर्व सिद्ध-और निज कृत रूप से अवान्तर भेद है ॥ १५९ ॥

**अथ नैवेद्यास्वादो (३७), यथा पाद्मे—**

**नैवेद्यमन्नं तुलसीविमिश्रं विशेषत: पादजलेन सिक्तम्।**
**योऽश्नाति नित्यं पुरतो मुरारे: प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ (१६०)**

### अनुवाद

नैवेद्यास्वाद (३७), का वर्णन पद्म पुराण में इस प्रकार है—

जो व्यक्ति नित्य तुलसी मिश्रित विशेषत: चरण जल से अभिषिक्त निवेदित अन्न का भोजन भगवान् मुरारी के अन्त:पुर के बहिर्भाग में करता है, वह अयुत कोटि यज्ञों का पुण्यभागी होता है ॥ १६० ॥

### दुर्गमसङ्गमनी

मुरारे: पुरत इति ल्यब्लोपे पञ्चमी, पुरमन्त:पुरं परित्यज्येत्यर्थ:। तदग्रतो भोजननिषेधात् ॥ १६० ॥

### अनुवाद

मुरारे: पुरत: यहाँ ल्यब् लोपे पञ्चमी होने के कारण पुरं अर्थात् अन्त:पुर को छोड़कर भोजन करना चाहिये। कारण यह है कि—देवता के सामने भोजन करना निषिद्ध है ॥ १६० ॥

### अर्थरत्नाल्प-दीपिका

पुरत इति (ल्यब् लोपे) पुरमन्त:पुरं परित्यजेत्यर्थ:, तदग्रतो भोजननिषेधात् ॥ १६० ॥

## अनुवाद

ल्यब् लोपे पञ्चमी इस सूत्र के अनुसार पुर अर्थात् अन्तःपुर को छोड़कर भोजन करना चाहिये। श्री भगवान् के सामने भोजन करना निषिद्ध है॥१६०॥

## भक्तिसार-प्रदर्शिनी

मुरारेः पुरत इति पूर्वन्तु भगवदग्रे ताम्बूलचर्वणमेव निषिद्धं, न तु भोजनसामान्यमिति ज्ञेयम्॥ १६०॥

## अनुवाद

पुरतो मुरारेः का अर्थ मुरारी के सामने करने से पूर्वोक्त भगवान् के सामने ताम्बूल चर्वण ही निषिद्ध है, भोजन सामान्य का निषेध नहीं है॥ १६०॥

**अथ पाद्यास्वादो (३८), यथा तत्रैव—**

**न दानं न हविर्येषां स्वाध्यायो न सुरार्चनम्।**
**तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम्॥ (१६१)**

## अनुवाद

पाद्यास्वाद (३८), का वर्णन पद्म पुराण में इस प्रकार है—

जिन्होंने दान, होम, वेदपाठ, देवार्चनादि कुछ भी नहीं किये हैं, वे भी श्री चरणामृत पान करके परम गति को प्राप्त करते हैं॥ १६१॥

**अथ धूपसौरभ्यं (३९), यथा हरिभक्तिसुधोदये—**

**आघ्राणं यद्धरेर्दत्तधूपोच्छिष्टस्य सर्वतः।**
**तद्भवव्यालदष्टानां नस्यं कर्म विषापहम्॥ (१६२)**

## अनुवाद

हरिभक्ति सुधोदय ग्रन्थ में धूप सौरभ ग्रहण (३९) के सम्बन्ध में लिखा है—

श्रीहरि को निवेदित धूपोच्छिष्ट का आघ्राण ही संसार सर्प द्वारा काटे हुए जीव के लिए सर्वथा विष नाशक नस्य कर्म है॥ १६२॥

## भक्तिसार-प्रदर्शिनी

तदाघ्राणं संसारव्यालदष्टजनानां विषापहं विषनाशकं नस्यकर्मस्वरूपं भवति। घ्राणेन महौषधीनां गन्धग्रहणं नस्यं कर्म॥ १६२॥

## अनुवाद

प्रसादी धूप प्रभृति का गन्ध लेना संसार सर्प संदष्ट जनों का विषनाशक नस्यकर्म स्वरूप होता है। घ्राण के द्वारा महौषधियों के गन्ध ग्रहण को नस्य कर्म कहते हैं॥ १६२॥

**अथ माल्यसौरभ्यं, यथा तन्त्रे—**

**प्रविष्टे नासिकारन्ध्रे हरेर्निर्माल्यसौरभे।**
**सद्यो विलयमायाति पापपञ्जरबन्धनम्॥ (१६३)**

### अनुवाद

माल्य सौरभ के विषय में तन्त्र में लिखित है—

श्रीहरि के निर्माल्य सौरभ नासिका में प्रविष्ट होने से पाप रूप पञ्जर का बन्धन तत्काल विलय को प्राप्त होता है॥ १६३॥

### भक्तिसार-प्रदर्शिनी

पञ्जरेति प्रसिद्धेन पापपञ्जरेण बन्धनम्॥ १६३॥

### अनुवाद

प्रसिद्ध पापपञ्जर बन्धन से छूट जाता है॥ १६३॥

**अगस्त्यसंहितायाञ्च—**

**आघ्राणं गन्धपुष्पादेरर्चितस्य तपोधन!।**
**विशुद्धिः स्यादनन्तस्य घ्राणस्येहाभिधीयते॥　　(१६४)**

### अनुवाद

अगस्त्य संहिता में भी उक्त है—

हे तपोधन! अर्चित भगवान् अनन्त के प्रसादी गन्ध पुष्पों का आघ्राण घ्राणेन्द्रिय की विशुद्धि का कारण कहा गया है॥ १६४॥

### दुर्गमसङ्गमनी

अर्चितस्यानन्तस्य भगवतः सम्बन्धी यो गन्धपुष्पादिस्तस्याघ्राणं घ्राणेन्द्रियस्य इह जगति विशुद्धिस्तद्धेतुः स्यादित्यभिधीयत इति॥ १६४॥

### अनुवाद

अर्चित भगवान् अनन्त के प्रसादी गन्ध पुष्पादि के आघ्राण को इस जगत में घ्राणेन्द्रिय नासिका की विशुद्धि का कारण रूप से कहा गया है॥ १६४॥

### अर्थरत्नाल्प-दीपिका

आघ्राणमिति; इह जगति विशुद्धिस्तद्धेतुः स्यादित्यभिधीयत इत्यर्थः॥ १६४॥

### अनुवाद

प्रसादी गन्ध पुष्पादि के आघ्राण को इस जगत में घ्राणेन्द्रिय नासिका की विशुद्धि का कारण रूप से कहा गया है॥ १६४॥

### भक्तिसार-प्रदर्शिनी

अर्चितस्य अनन्तस्य भगवतः सम्बन्धी यो गन्धपुष्पादिस्तस्य घ्राणं घ्राणेन्द्रियस्य इह जगति विशुद्धिस्तद्धेतुः स्यादित्यभिधीयते॥ १६४॥

### अनुवाद

अर्चित अनन्त भगवान् के सम्बन्धी जो गन्ध पुष्प है, उसके आघ्राण इस जगत में नासिका की विशुद्धि का कारण है॥ १६४॥

**अथ श्रीमूर्त्तेः स्पर्शनं (४०), यथा विष्णुधर्मोत्तरे—**

**स्पृष्ट्वा विष्णोरधिष्ठानं पवित्रः श्रद्धयान्वितः।**
**पापबन्धैर्विनिर्मुक्तः सर्वान् कामानवाप्नुयात्॥ (१६५)**

### अनुवाद

श्री मूर्त्ति का स्पर्श (४०), विष्णु धर्मोत्तर ग्रन्थ में श्री मूर्त्ति के स्पर्श का माहात्म्य उक्त है—

पवित्र एवं श्रद्धालु व्यक्ति श्रीविष्णु विग्रह को स्पर्श करके पाप बन्धन से मुक्त होकर सर्वाभीष्ट फल प्राप्त करता है॥ १६५॥

### दुर्गमसङ्गमनी

अथ श्रीमदर्चामात्रस्य स्पर्शाधिकारिणां स्पर्शमाहात्म्यमाह— स्पृष्ट्वेति॥ १६५॥

### अनुवाद

स्पृष्ट्वेति पद्य के द्वारा श्रीमदर्चा विग्रह मात्र के स्पर्श करने के अधिकारी व्यक्ति के द्वारा किये गये स्पर्श के माहात्म्य का वर्णन किया गया है॥ १६५॥

**अथ श्रीमूर्त्तेर्दर्शनं (४१), यथा वाराहे—**

**वृन्दावने तु गोविन्दं ये पश्यन्ति वसुन्धरे!।**
**न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम्॥ (१६६)**

### अनुवाद

श्रीमूर्त्ति का दर्शन (४१), वराह पुराण में उक्त है—

हे वसुन्धरे! वृन्दावन में जो लोक श्री गोविन्ददेव का दर्शन करते हैं, वे यमलोक न जाकर पुण्यवान् लोकों की गति को प्राप्त करते हैं॥ १६६॥

### दुर्गमसङ्गमनी

अथ सर्वान् प्रति दर्शनमाहात्म्यञ्च सर्वासामर्चानां वदन् भक्त्यावेशविशेषादुपर्युपरि परिस्फूर्त्त्या श्रीमदर्चाविशेषायमानस्य साक्षाद्भगवतः श्रीगोविन्ददेवस्य दर्शने माहात्म्यविशेषमाह— वृन्दावन इति। यान्ति पुण्यकृतां गतिमिति,— (भा. १/२/६)— 'स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे' इतिन्यायेन सुविचारवतां सर्वसत्कर्मणामेकान्तगतिं भक्त्याख्यपरमपुरुषार्थसिद्धिमाप्नुवन्तीत्यर्थः॥ १६६॥

### अनुवाद

समस्त अर्चा विग्रह दर्शन का माहात्म्य सबके प्रति कहने के बाद भक्ति के आवेश से पुनः पुनः स्फूर्त्ति प्राप्तकर श्रीमद्ग्रन्थकार श्रीमदर्चा विशेष रूप से अधिष्ठित साक्षात् भगवान् श्रीगोविन्द देव के

दर्शन का माहात्म्य विशेष का वर्णन करते हैं— वृन्दावन में जो लोक श्रीगोविन्ददेव का दर्शन करते हैं, वे सब यमलोक न जाकर पुण्यवान् लोक को प्राप्त करते हैं।

'यान्ति पुण्यकृतां गतिम्' का अर्थ विचार श्रीमद्भागवत के (१/२/६) में उक्त— स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे अर्थात् मनुष्यों के लिए सर्वश्रेष्ठ धर्म वही है, जिससे भगवान् श्रीकृष्ण में भक्ति हो। इस नियम से वे (वृन्दावन में गोविन्ददेव का दर्शन करने वाले लोग) सुविचारवालों की समस्त सत्कर्मों की एकमात्र गति भक्ति नामक परम महापुरुषार्थ सिद्धि को प्राप्त करते हैं॥ १६६॥

### भक्तिसार-प्रदर्शिनी

पुण्यकृतां गतिमित्यादौ सर्वत्र फलश्रवणं बहिर्मुखप्रवृत्त्यर्थमेव। निष्कामानान्तु रतिरेव मुख्यफलमिति ग्रन्थकृदेव पश्चाद् व्याख्यास्यते॥ १६६॥

### अनुवाद

पुण्यवान् लोकों की गति को प्राप्त करेंगे, इत्यादि सर्वत्र फलश्रवण का जो कथन हुआ है वह बहिर्मुख जनता को भक्ति में प्रवृत्त कराने के लिए है। निष्कामजनों की तो मुख्य फल भक्ति ही है, ग्रन्थकार इसकी व्याख्या अग्रिम ग्रन्थ में करेंगे॥ १६६॥

**आरात्रिकदर्शनं (४२), यथा स्कान्दे—**

**कोटयो ब्रह्महत्यानामगम्यागमकोटयः।**
**दहत्यालोकमात्रेण विष्णोः आरात्रिकं मुखम्॥　　(१६७)**

### अनुवाद

आरती दर्शन (४२), यथा स्कन्द पुराण में कहा गया है—

आरात्रिक के समय श्री विष्णु की अर्चा मूर्त्ति का मुख दर्शन से कोटि कोटि ब्रह्म हत्या एवं कोटि कोटि अगम्यागमन जनित पाप समूह विनष्ट कर देते हैं॥ १६७॥

### दुर्गमसङ्गमनी

पुनः श्रीमदर्चामात्रारात्रिक दर्शनफलमाह— कोटयः कोटीरिति। मुखं कर्त्तृ॥ १६७॥

### अनुवाद

श्रीविष्णु के श्रीविग्रह मात्र की आरती दर्शन का फल कहते हैं—कोटय इति। कोटय शब्द कोटीः का विकल्प रूप है। मुखं कर्त्तृ है॥ १६७॥

### भक्तिसार-प्रदर्शिनी

कोटयः कोटीः, मुखं कर्त्तृ॥ १६७॥

### अनुवाद

कोटयः अर्थात् कोटिः। मुखं कर्त्तृ है॥ १६७॥

**उत्सवदर्शनं यथा भविष्योत्तरे—**

**रथस्थं ये निरीक्षन्ते कौतुकेनापि केशवम्।**
**देवतानां गणाः सर्वे भवन्ति श्वपचादयः॥ (१६८)**

### अनुवाद

उत्सव दर्शन— उत्सव दर्शन के विषय में भविष्योत्तर पुराण में लिखित है—

कौतुक से भी यदि चण्डाल आदि रथस्थ श्रीकेशव का दर्शन करते हैं तो वे सब भगवत् पार्षद हो जाते हैं॥ १६८

### दुर्गमसङ्गमनी

रथस्थमित्युत्सवान्तरोपलक्षणं, सर्वेश्वपचादयोऽपि, देवतानां पार्षदानाम्॥ १६८॥

### अनुवाद

रथस्थ— यह अन्य उत्सवों का भी उपलक्षण है। अर्थात् रथयात्रा आदि उत्सवों में श्रीहरि के दर्शन करने से समस्त दर्शनकारीगण, चाण्डालादि भी श्रीविष्णु के पार्षद होते हैं॥ १६८॥

### अर्थरत्नाल्प-दीपिका

रथस्थमित्युत्सवान्तरस्योपलक्षणम्॥ १६८॥

### अनुवाद

रथस्थ— यह अन्य उत्सवों का भी उपलक्षण है। अर्थात् रथयात्रा आदि उत्सवों में श्रीहरि के दर्शन करने से समस्त दर्शनकारीगण, चाण्डालादि भी श्रीविष्णु के पार्षद होते हैं॥ १६८॥

### भक्तिसार-प्रदर्शिनी

रथस्थमित्युत्सवान्तरोपलक्षणं, सर्वे श्वपचादयोऽपि, देवतानां पार्षदानाम्॥ १६८॥

### अनुवाद

रथस्थ— यह अन्य उत्सवों का भी उपलक्षण है। अर्थात् रथयात्रा आदि उत्सवों में श्रीहरि के दर्शन करने से समस्त दर्शनकारीगण, चाण्डालादि भी श्रीविष्णु के पार्षद होते हैं॥ १६८॥

**आदिशब्देन पूजादर्शनं, यथा आग्नेये—**

**पूजितं पूज्यमानं वा यः पश्येद् भक्तितो हरिम्।**
**श्रद्धया मोदमानस्तु सोऽपि योगफलं लभेत्॥ (१६९)**

### अनुवाद

आदि शब्द से पूजा दर्शन को जानना चाहिये। इसका वर्णन अग्नि पुराण में इस प्रकार उक्त है—

श्रद्धा व मुदित होकर जो व्यक्ति पूजित अथवा पूजा के समय भक्तिपूर्वक श्रीहरि के दर्शन करता है वह भी योगफल को प्राप्त करता है॥ १६९॥

### दुर्गमसङ्गमनी

योगोऽत्र पञ्चरात्राद्युक्तः क्रियायोगः॥ १६९॥

### अनुवाद

यहाँ पर योग शब्द का अर्थ पञ्चरात्रादि में उक्त क्रियायोग है॥ १६९॥

### भक्तिसार-प्रदर्शिनी

पूज्यमानं पूजासमानकालीनं हरिं। योगोऽत्र पञ्चरात्राद्युक्तः परिचर्यारूपयोगः॥ १६९॥

### अनुवाद

पूजा करते समय श्रीहरि के दर्शन करने से पञ्चरात्र प्रभृति ग्रन्थ में लिखित परिचर्या रूप योग को प्राप्त करता है॥ १६९॥

**अथ श्रवणम् (४३)—**

**श्रवणं नामचरितगुणादीनां श्रुतिर्भवेत्॥ (१७०)**

**तत्र नामश्रवणं, यथा गारुडे—**

**संसारसर्पदष्टनष्टचेष्टैकभेषजम्।**
**कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः॥ (१७१)**

### अनुवाद

श्रवण (४३)— नाम चरित्र व गुणादि का कर्णेन्द्रिय स्पर्श को श्रवण कहते हैं॥ १७०॥

नाम श्रवण—गरुड़ पुराण में नाम श्रवण का महत्त्व उक्त है—

संसार रूप सर्प के द्वारा संदष्ट अतएव संज्ञाहीन व्यक्ति के पक्ष में रोगहरणकारी औषध स्वरूप 'कृष्ण' यह वैष्णव मन्त्र सुनकर मानव मुक्त हो जाता है॥ १७१॥

**चरितश्रवणं, यथा चतुर्थे (भा. ४/२९/४१)—**

**तस्मिन् महन्मुखरिता मधुभिच्चरित्रपीयुषशेषसरितः परितः स्त्रवन्ति।**
**ता ये पिबन्त्यवितृषो नृप! गाढकर्णैस्तान्न स्पृशन्त्यशनतृड भयशोकमोहाः॥ (१७२)**

### अनुवाद

चरित श्रवण का वर्णन चतुर्थ स्कन्ध में इस प्रकार है—

जहाँ भगवद् गुणों को कहने और सुनने में तत्पर विशुद्ध चित्त भक्तजन रहते हैं, उस साधु समाज में सब ओर महापुरुषों के मुख से निकले हुए श्रीमधुसूदन भगवान् के चरित्र वर्णन रूप शुद्ध अमृत की अनेकों नदियाँ बहती रहती हैं। जो लोक अतृप्त चित्त से श्रवण में तत्पर अपने कर्ण कुहरों के द्वारा हरि कथा सुधा का पान करते हैं, उन्हें भूख, प्यास, शोक और मोह आदि कुछ भी स्पर्श करने में समर्थ नहीं होते हैं॥ १७२॥

### दुर्गमसङ्गमनी

तस्मिन्निति। महतां सदसि महद्भिर्मुखरिताः शब्दायमानीकृताः तान् प्राप्य स्वयमेव

स्वव्यञ्जकशब्दं कुर्वत्य इव जाता इत्यर्थः। शेषः सारः॥ १७२॥

### अनुवाद

महन्तों की सभा में भगवान् मधुसूदन की लीला कथा महज्जनों के मुख से वर्णित होती है, वह लीलाकथा शब्दायमान होकर शुद्ध अमृत की नदियों की तरह चारो ओर बहती रहती है। महन्तों की सभा को प्राप्तकर लीलाकथा स्वयं स्वाभाविक रूप में महज्जनों के मुख से स्वव्यञ्जक शब्द करते हुए प्रकट होता है। शेष का अर्थ सार है॥ १७२॥

### अर्थरत्नाल्प-दीपिका

शेषः सारः॥ १७२॥

### अनुवाद

शेष का अर्थ सार है॥ १७२॥

### भक्तिसार-प्रदर्शिनी

तस्मिन्महतां सदसि महान्त एव मुखरिता मुखरीकृता अर्थाद्वाचालीकृता याभिस्तथाभूताः कृष्णस्य चरित्ररूप पीयुषसारसरितो नद्यः परितः स्रवन्ति। ता नदीर्येऽवितृषो जना गाढकर्णैरासक्तकर्णैस्तानेते न स्पृशन्ति, तृट् तृष्णा॥ १७२॥

### अनुवाद

महज्जनों की सभा में हरिकथा से वाचाल बना दिये गये महद्‌गणों के मुखों से श्रीकृष्ण की लीला कथा रूपी अमृतसार की नदी हर तरफ बहती रहती है। उस चरित सुधा रूप नदी का सेवन आसक्त कर्ण से जो अतृप्त जन करते हैं उन सबको तृष्णा, भय, शोक, मोह आदि स्पर्श नहीं कर सकते। तृट् अर्थात् तृष्णा॥ १७२॥

**गुणश्रवणं, यथा द्वादशे (भा. १२/३/१५)—**

**यस्तूत्तमःश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।**
**तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः॥ (१७३)**

### अनुवाद

गुणश्रवण का वर्णन द्वादश स्कन्ध में इस प्रकार उक्त है—

भगवान् श्रीकृष्ण का गुणानुवाद समस्त अमङ्गलों का नाश करने वाला है। बड़े-बड़े महात्मा उसी का गायन करते रहते हैं। जो भगवान् श्रीकृष्ण के चरणों में अनन्य प्रेममयी भक्ति की लालसा रखता हो, उसे नित्य निरन्तर महात्मावृन्द के द्वारा वर्णित भगवान् के दिव्य गुणों का ही श्रवण करते रहना चाहिये॥ १७३॥

### दुर्गमसङ्गमनी

उत्तमःश्लोकानां भगवदवताराणां भागवतानाञ्च गुणानुवादो महद्भिः सङ्गीयते। तमेव नित्यं

प्रत्यहं तत्राप्यभीक्ष्णं शृणुयात्। तत्र त्वतिशयेनाग्रहं कुर्यादित्यर्थः। श्रवणस्य तस्य परमफलमाह— कृष्ण इति। ''कृष्णस्तु भगवान् स्वयमि''त्यादिप्रसिद्धेः श्रीगोपाल इत्यर्थः॥ १७३॥

## अनुवाद

उत्तम श्लोक अर्थात् श्रीभगवान के अवतार समूह एवं भागवतगणों के गुणों का कीर्त्तन महद्गण करते रहते हैं। उसका श्रवण नित्य प्रत्यह रोज-रोज, पुनः-पुनः करना चाहिये। अभिप्राय यह है कि सुनने का अतिशय आग्रह करना चाहिये।

गुण श्रवण के परम फल को कहते हैं— कृष्ण इति। श्रीकृष्ण में भक्ति प्राप्त करने के लिए गुण श्रवण करना आवश्यक है। श्रीकृष्ण ही स्वयं भगवान् हैं। वह श्रीगोपाल रूप में प्रसिद्ध हैं॥ १७३॥

## अर्थरत्नाल्प-दीपिका

नित्यं प्रत्यहं तत्राप्यभीक्ष्णम् प्रतिक्षणम्॥ १७३॥

## अनुवाद

श्रीकृष्ण-गोपाल की भक्ति प्राप्त करने के लिये उनका गुणानुवाद रोज-रोज, पुनः-पुनः, प्रतिक्षण करना चाहिये॥ १७३॥

## भक्तिसार-प्रदर्शिनी

यो गुणानुवादः सङ्गीयते तमेव॥ १७३॥

## अनुवाद

महद्गण जो भगवान् का गुणानुवाद करते हैं उसे ही श्रवण करना चाहिये॥ १७३॥

**अथ तत्कृपेक्षणं (४४), यथा श्रीदशमे (भा. १०/१४/८)—**

**तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्।**
**हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥ (१७४)**

## अनुवाद

श्रीकृष्ण की कृपा का ईक्षण (४४), दशम स्कन्ध में उक्त है—

जो पुरुष क्षण क्षण पर बड़ी उत्सुकता से आपकी अनुकम्पा के प्रति दृष्टि रखकरके प्रारब्ध के अनुसार जो कुछ सुख या दुःख प्राप्त होता है, उसे निर्विकार मन से भोग लेता है; एवं जो हृदय, वाणी और पुलकित शरीर से आपको नमस्कार करता रहता है; इस प्रकार जीवन व्यतीत करने वाला पुरुष ठीक वैसे ही आपके परम पद का अधिकारी हो जाता है, जैसे अपने पिता की सम्पत्ति का पुत्र॥ १७४॥

## दुर्गमसङ्गमनी

तत्तेऽनुकम्पामित्यत्रानुकम्पेक्षणं नमस्कारश्चेति पृथगेव साधनद्वयं; वैशिष्ट्याय त्वेकत्र पठितम्। तत उभयमपि समानफलमेव ज्ञेयमिति भावः। नवमपदार्थस्य मुक्तेरप्याश्रये दशमपदार्थे त्वयि स

दायभाग्भवति। त्वं तस्य दायत्वेन वर्त्तसे इत्यर्थः॥ १७४॥

## अनुवाद

अनुकम्पा ईक्षण एवं नमस्कार ये दोनों पृथक साधन हैं। भक्ति में दोनों का ही वैशिष्ट्य होने के कारण एक साथ लिखा गया है। इसलिए दोनों का ही समान फल होता है, इस प्रकार जानना होगा। वह श्रीमद्‌भागवत के नवम पदार्थ मुक्ति का आश्रय दशम् पदार्थ रूप आप श्रीकृष्ण का दायभाग् उत्तराधिकारी होता है। अर्थात् उस प्रकार आचरणकारी के लिये तुम दायभाग् रूप में अवस्थान करते हो॥ १७४॥

## अर्थरत्नाल्प-दीपिका

मुक्तिः पदे भक्तियोगाख्ये मार्गे यस्य स मुक्तिपदस्तस्मिन् त्वयि; अथवा, मुक्तेराश्रये त्वयि दायभाग् भवति— त्वं तस्य दायत्वेन वर्त्तसे इत्यर्थः॥ १७४॥

## अनुवाद

भक्तियोग नामक मार्ग में जो मुक्तिपद है वह आप हो। आपकी कृपा का ईक्षण एवं आपको नमस्कार करने वाला व्यक्ति आप श्रीकृष्ण का उत्तराधिकारी होता है। अथवा मुक्ति का आश्रय स्वरूप आप हैं। कृपेक्षण एवं नमस्कार करने वाला व्यक्ति आपका उत्तराधिकारी होता है, तुम ही उसका दाय रूप से रहते हो, इस प्रकार अर्थ जानना होगा॥ १७४॥

## भक्तिसार-प्रदर्शिनी

तदेवमन्यत् सर्वं साधनं परित्यज्य भक्तिमेव कुर्वंस्त्वां लभते इति प्रकरणार्थावगतेस्तत्र कीदृशः सन् कुर्यादित्यपेक्षायामाह— तत्ते इति। यस्मादेवं तत् तस्मादात्मकृतं विपाकं 'धर्मस्य ह्यपवर्गस्य नार्थोऽर्थायोपकल्पत' इत्यत्र (भा. १/२/९) प्रतिपादितं भक्तेरप्यननुसंहितं फलं सुखं तदपराधफलं दुःखञ्च भुञ्जान एव तवानुकम्पां सुष्ठु सम्यगीक्षमाणः। समये प्राप्तं सुखं दुःखञ्च भगवदनुकम्पाफलमेवेति जानन्। पिता यथा स्वपुत्रं समये समये दुग्धं निम्बरसञ्च कृपयैव पाययति, आश्लिष्य चुम्बति, पाणितलेन प्रहरति च इत्येवं मम हिताहितं पुत्रस्य पितेव मत्प्रभुरेव जानाति, नत्वहम्। मयि तद्भक्ते नास्ति कालकर्मादीनां केषामप्यधिकारः इति स एव कृपया सुखदुःखे भोजयति च— इति विमृश्य (भा. ४/२०/३१)— "यथा चरेद् बालहितं पिता स्वयम्। तथा त्वमेवार्हसि नः समीहितमिति" पृथुरिव प्रत्यहं भगवन्तं हृदादिभिर्नमस्कुर्वन् नातीव क्लिश्यन् यो जीवेत, स मुक्तिश्च पदं च तयोर्द्वन्द्वैक्यं तस्मिन् संसारान्मुक्तौ त्वच्चरणसेवायाञ्चेत्यानुषङ्गिकमुख्यफलयोर्दायभाग् भवति। यथा सुपुत्रस्य दायप्राप्तौ जीवनमेव कारणं, तथा भक्तस्य जीवनं, तच्चेह भक्तिमार्गे स्थितिरेव। "दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा।" (१०/८७/१७) इत्याद्युक्तेरिति भावः॥ १७४॥

## अनुवाद

अन्य समस्त साधन परित्याग करके एकमात्र भक्ति आचरण करने से व्यक्ति आप श्रीकृष्ण को प्राप्त करता है। यह प्रकरणार्थ से ज्ञात होता है। किन्तु किस प्रकार भक्ति करने से आपको प्राप्त कर

सकते हैं, उसको कहते हैं— तुम्हारी अनुकम्पा को देखते हुए एवं प्रणाम करते हुए जो जीवित रहता है, वह आप श्रीकृष्ण को प्राप्त कर सकता है।

किस प्रकार जीवित रहना होगा? कहते हैं— आत्मकृत विपाक को सहते हुये।

(भा. १/२/९) में उक्त है—

धर्मस्य ह्यापवर्गस्य नार्थोऽर्थायोपकल्पते।
नार्थस्य धर्मैकान्तस्य कामलाभाय हि स्मृतः॥

धर्म का फल है अपवर्ग। उसकी सार्थकता अर्थ प्राप्ति में नहीं है। अर्थ केवल धर्म के लिए है। भोग विलास उसका फल नहीं माना गया है।

भक्ति का अवान्तर फल है—सुख और अपराध का फल है— दुःख। इन दोनों की भोग करते हुए एवं साथ ही भगवद् अनुकम्पा को सम्यक् रूप से देखते हुये जीवित रहना ही उत्तराधिकारी का गुण है। समय-समय में प्राप्त सुख एवं दुःख को भगवदनुकम्पा का फल जानते हुये। पिता जिस प्रकार पुत्र को समय समय में दूध पिलाते हैं, कभी निम्ब रस भी कृपापूर्वक पिलाते हैं, कभी आलिङ्गन कर चुम्बन करते हैं, कभी हथेली से प्रहार भी करते हैं। इस प्रकार मेरे हिताहित को, पुत्र के हिताहित जिस प्रकार पिता जानते हैं, उस प्रकार मेरे प्रभु ही जानते हैं। मैं नहीं जानता हूँ। भक्त के प्रति काल कर्मादि का कोई अधिकार नहीं है। प्रभु श्रीकृष्ण ही कृपा पूर्वक सुख दुःख भोग कराते रहते हैं। इस प्रकार विचार करके जीवित रहना होता है।

श्रीमद्भागवत के (४/२०/३१) में उक्त है—

"यथा चरेद् बालहितं पिता स्वयम्।
तथा त्वमेवार्हसि नः समीहितमिति॥"

पिता जिस प्रकार स्वतः प्रवृत्त होकर बालक की हित चेष्टा करते हैं, आप भी स्वयं उस प्रकार हमारे हित चेष्टा करते हैं।

पृथु महाराज की तरह प्रत्यह भगवान् को हृदय आदि के द्वारा नमस्कार करते हुए, अतीव दुःखी हुए बिना आनन्द से जो जीवित रहता है वह मुक्ति एवं भगवान् के चरणारविन्दों की सेवा में उत्तराधिकारी होगा। संसार से मुक्ति तो आपके चरणों की सेवा का आनुषंगिक फल है, मुख्य फल तो आप दायभाग् हो। जिस प्रकार सुपुत्र के लिए उत्तराधिकारी बनने में जीवित रहना परम आवश्यक है, उसी प्रकार भक्त को इस भक्तिमार्ग में जीवित रहना परम आवश्यक है। यह है भक्ति मार्ग में स्थिति की बात, भक्ति मार्ग में रहने से ही श्रीकृष्ण के चरणारविन्दों की सेवा में अधिकार होगा।

श्रीमद्भागवत के (१०/८७/१७) में भी इसी प्रकार उक्त है—

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा अर्थात् हे भगवन्! प्राणधारियों के जीवन की सफलता इसी में है कि—वे आपका भजन-सेवा करें, आपकी आज्ञा का पालन करें। यदि वे ऐसा नहीं करते तो उसका जीवन व्यर्थ है। और उनके शरीर में श्वास का चलना ठीक वैसा ही है जैसा लुहार की धौंकनी में हवा का आना जाना होता है ॥ १७४॥

**अथ स्मृतिः (४५)—**

**यथा कथञ्चिन्मनसा सम्बन्धः स्मृतिरुच्यते ॥ (१७५)**

**यथा विष्णुपुराणे—**

**स्मृते सकलकल्याणभाजनं यत्र जायते।**
**पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्॥ (१७६)**

### अनुवाद

स्मृति (४५)—

जिस किसी प्रकार से मन के साथ सम्बन्ध होने को स्मृति कहते हैं॥ १७५ ॥

विष्णु पुराण में उक्त है—

जिस हरि का स्मरण करने से जीव सकल कल्याण का भाजन होता है, उस अज, नित्य पुरुष श्रीहरि की शरण ग्रहण करता हूँ॥ १७६ ॥

### भक्तिसार-प्रदर्शिनी

यत्र हरौ सति पुरुषः सकलकल्याणभाजनं भवति, तं हरिं शरणं व्रजामि ॥ १७६ ॥

### अनुवाद

श्रीहरि में भक्ति करने पर मानव समस्त कल्याणों का पात्र होता है, इस प्रकार श्रीहरि की मैं शरण ग्रहण करता हूँ॥ १७६ ॥

**यथा च पाद्मे—**

**प्रयाणे चाप्रयाणे च यन्नाम स्मरतां नृणाम्।**
**सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने॥ (१७७)**

### अनुवाद

जैसाकि पद्म पुराण में कहा गया है—

जिनका नाम स्मरण करने से मरण दशा व जीवन दशा में जीवों की पापराशि सद्य नष्ट होती है, उन चिन्मय पुरुष को नमस्कार करता हूँ॥ १७७॥

### दुर्गमसङ्गमनी

प्रयाणे मरणदशायाम्, अप्रयाणे जीवनदशायां। प्रयाणकाले मनसाचलेनेति श्रीगीतातः (८/१०) ॥१७७॥

### अनुवाद

प्रयाण अर्थात् मरण दशा में, अप्रयाण अर्थात् जीवन दशा में श्रीहरि का नाम स्मरण करने पर समस्त पाप नष्ट हो जाते हैं, उन चिदात्मा पुरुष को नमस्कार।

श्री गीता में उक्त है—

प्रयाण काले मनसाचलेन भक्त्या युक्तो योग बलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् सतं परं पुरुषमुपैति दिव्यम्॥

वह पुरुष अन्तकाल में भक्तियुक्त योग बल से ही भृकुटि के मध्य में प्राण को अच्छी प्रकार स्थापित करके, फिर निश्चित मन से स्मरण करता हुआ उस दिव्य रूप परम पुरुष परमात्मा को ही प्राप्त करता है ॥ १७७॥

### अर्थरत्नाल्प-दीपिका

प्रयाणे प्राणानां देहाद् बहिर्निष्क्रमणे सति तन्निष्क्रमणसमय इत्यर्थः॥ १७७॥

### अनुवाद

प्रयाणे अर्थात् देह से प्राण बाहर निकलते समय में अचल मन से श्रीहरि का नाम स्मरण करने पर परम गति को प्राप्त करता है॥१७७॥

### भक्तिसार-प्रदर्शिनी

प्रयाणे मरणदशायाम्। अप्रयाणे जीवनदशायां। 'प्रयाणकाले मनसाचलेन' इति गीतातः॥ १७७॥

### अनुवाद

प्रयाण अर्थात् मरण दशा में, अप्रयाण अर्थात् जीवन दशा में श्रीहरि का नाम स्मरण करने पर समस्त पाप नष्ट हो जाते हैं, उन चिदात्मा पुरुष को नमस्कार।

श्री गीता में उक्त है—

प्रयाण काले मनसाचलेन भक्त्या युक्तो योग बलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् सतं परं पुरुषमुपैति दिव्यम्॥

वह पुरुष अन्तकाल में भक्तियुक्त योग बल से ही भृकुटि के मध्य में प्राण को अच्छी प्रकार स्थापित करके, फिर निश्चित मन से स्मरण करता हुआ उस दिव्य रूप परम पुरुष परमात्मा को ही प्राप्त करता है ॥ १७७॥

**अथ ध्यानं (४६)—**

**ध्यानम् रूपगुणक्रीडासेवादेः सुष्ठु चिन्तनम्॥ (१७८)**

### अनुवाद

ध्यान (४६)—

रूप-गुण-लीला-सेवादि का उत्तम रूप से चिन्तन करना ही ध्यान है॥ १७८॥

**तत्र रूपध्यानं, यथा नारसिंहे—**

**भगवच्चरणद्वन्द्वध्यानं निर्द्वन्द्वमीरितम्।**
**पापिनोऽपि प्रसङ्गेन विहितं सुहितं परम्॥ (१७९)**

### अनुवाद

रूप ध्यान के विषय में नारसिंह पुराण में उक्त है—

श्रीभगवान के चरणद्वय के ध्यान को शास्त्र में निर्द्वन्द्व कहा गया है। पापी व्यक्ति भी भगवद् ध्यान के लेश मात्र से भगवत् प्राप्ति रूप परम सुहित को प्राप्त कर लेता है, शास्त्र में इस प्रकार उल्लेख है॥ १७९ ॥

### दुर्गमसङ्गमनी

निर्द्वन्द्वं शीतोष्णादिमयदुःखपरम्परातीतम्। ईरितं शास्त्रे मङ्गलं विहितं, तच्च पापिनोऽपि प्रसङ्गेनापि परमुत्कृष्टं सुहितं विहितं तत्रैवेत्यर्थः॥ १७९ ॥

### अनुवाद

निर्द्वन्द्वं यानि कि भगवत् चरणारविन्दों का ध्यान शीत-उष्णादिमय दुःख परम्परा का निवर्त्तक है। शास्त्र में इस प्रकार कहा गया है। पापी व्यक्ति भी भगवद्ध्यान के प्रभाव से कथञ्चिद् अनुकूल होने के कारण भगवत् प्राप्ति का साधन बना लेता है। शास्त्र इस प्रकार कहते हैं॥ १७९ ॥

### अर्थरत्नाल्प-दीपिका

निर्द्वन्द्वं द्वन्द्वातीतं शीतोष्णादिमयदुःखपरम्परानिवर्त्तकमित्यर्थः; ईरितं शास्त्रे विहितम्, तस्य पापिनोऽपि दुर्व्वासनाग्रस्तस्यापि भगवद्ध्यानपरप्रसङ्गेन यथा कथञ्चिदनुकूलतासम्बन्धेन परं सुहितं भगवत्प्राप्तिसाधनं विहितं तत्रेवेत्यर्थः॥ १७९ ॥

### अनुवाद

निर्द्वन्द्वं यानि कि भगवत् चरणारविन्दों का ध्यान शीत-उष्णादिमय दुःख परम्परा का निवर्त्तक है। शास्त्र में इस प्रकार कहा गया है। पापी व्यक्ति भी भगवद्ध्यान के प्रभाव से कथञ्चिद् अनुकूल होने के कारण भगवत् प्राप्ति का साधन बना लेता है। शास्त्र इस प्रकार कहते हैं॥ १७९ ॥

### भक्तिसार-प्रदर्शिनी

निर्द्वन्द्वं शीतोष्णादिमयदुःखपरम्परातीतम्। ईरितं शास्ते विहितं। पापिनोऽपि जनस्य प्रसङ्गेनापि जातं तद्ध्यानं परमुत्कृष्टं सुहितं विहितं तत्रैव शास्त्र इत्यर्थः॥ १७९ ॥

### अनुवाद

निर्द्वन्द्वं यानि कि भगवत् चरणारविन्दों का ध्यान शीत-उष्णादिमय दुःख परम्परा का निवर्त्तक है। शास्त्र में इस प्रकार कहा गया है। शास्त्रीय विधान तो यह है कि—किसी भी प्रसङ्ग में पापीजन भी यदि भगवद् ध्यान करता है तो वह उस ध्यान के द्वारा परम उत्कृष्ट हित रूप भगवद् भक्ति को प्राप्त कर लेता है॥ १७९ ॥

**गुणध्यानं, यथा विष्णुधर्मे—**

**ये कुर्वन्ति सदा भक्त्या गुणानुस्मरणं हरेः।**
**प्रक्षीणकलुषौघास्ते प्रविशन्ति हरेः पदम्॥** (१८०)

### अनुवाद

गुण ध्यान, जैसाकि विष्णुधर्म पुराण में कहा गया है—

जो लोक भक्ति से सदा श्रीहरि के गुणों का ध्यान करते हैं, वे समस्त पापों से मुक्त होकर हरि लोक को गमन करते हैं॥ १८०॥

**क्रीड़ाध्यानं, यथा पाद्मे—**

**सर्वमाधुर्य्यसाराणि सर्वाद्भुतमयानि च।**
**ध्यायन् हरेश्चरित्राणि ललितानि विमुच्यते॥　(१८१)**

### अनुवाद

क्रीड़ा ध्यान, जैसाकि पद्मपुराण में उक्त है—

सर्व माधुर्य सार, सर्वाद्भुतमय एवं अति मनोहर श्रीहरि चरित्र का ध्यान जो करता है वह संसार बन्धन से मुक्त हो जाता है॥ १८१॥

**सेवाध्यानं, यथा पुराणान्तरे—**

**मानसेनोपचारेण परिचर्य्य हरिं सदा।**
**परे वाङ्मनसागम्यं तं साक्षात् प्रतिपेदिरे॥　(१८२)**

### अनुवाद

सेवा ध्यान, जैसाकि पुराणान्तर में उक्त है—

मानसोपचार से निरन्तर श्रीहरि की सेवा करके कोई कोई भक्त ने वाक्य व मन के अगम्य श्रीहरि के दर्शन प्राप्त किये॥ १८२॥

### दुर्गमसङ्गमनी

मानसेनेत्यत्र ब्रह्मवैवर्तकथा च यथा— "प्रतिष्ठानपुरे कश्चिद्विप्र आसीत्; स च दरिद्रोऽपि कर्माधीनमात्मानं मन्यमानः शान्त एवासीत्। स तु सरलबुद्धिः कदाचिद्विप्रेन्द्राणां सदसि वैष्णवान् धर्मान् शुश्राव। ते च धर्मा मनसापि सिध्यन्तीति श्रुत्वा दरिद्रः स्वयं तथैवाचरितुमारब्धवान्। ततश्च गोदावरीस्नानपूर्वकं नित्यकर्म समाप्य शान्तमतिर्भूत्वा विविक्तासनः प्राणायामादिपूर्वकं स्थिरीभूय मनसैवाभिमतां श्रीहरिमूर्त्तिं स्थापयित्वा स्वयं दुकूलादिकं परिधाय तां प्रणम्य दृढं परिकरं बद्ध्वा तत्सदनं सम्मार्ज्य तां प्रणम्य राजतसौवर्णघटैः सर्वेषां गङ्गादितीर्थानां जलमाहृत्य तथा नानापरिचर्य्याद्रव्याण्युपानीय तदीयं स्नपनादिकमारात्रिकान्तं महाराजोपचारं समाप्य दिनं सुखातिशयमाप्नुवन्नासीत्। तदेवं बहुषु कालेषु गतेषु कदाचित् मनसैव सघृतं परमान्नं निर्माय, सौवर्णपात्रेण तद्भोजनार्थमुत्थाप्य स्थितस्तप्ततया स्फुरिते तस्मिन् प्रविष्टमङ्गुष्ठयुगलं दग्धं प्रतीयन् हन्त तदिदं दुष्टं जातमिति दुःखेन तद्धित्वा समाधिभङ्गेऽपि जाते दग्धाङ्गुष्ठतया बहिरपि पीडितो बभूव। तदवधाय वैकुण्ठे समुपविष्टेन श्रीवैकुण्ठनाथेन हसता श्रीप्रभृतिभिस्तत्कारणं पृष्टेन च सता तं स्वनिकटं विमानेन आनयामास। तथाविधतया दर्शयामास स्वनिकटे योग्यतया स्थापयामास चेति" ॥ १८२॥

## अनुवाद

ब्रह्मवैवर्त्त पुराण में मानसोपचार सेवा की कथा इस प्रकार है—

प्रतिष्ठानपुर में एक ब्राह्मण रहता था, वह दरिद्र होकर भी किन्तु अपने को कर्माधीन मानकर शान्त रहता था। वह सरल बुद्धि का था। एक दिन विप्रेन्द्रों की सभा में उसने वैष्णव धर्म सुन लिया। वह धर्म मन से भी सिद्ध हो सकता है इस प्रकार सुनकर दरिद्र ब्राह्मण स्वयं उस प्रकार आचरण करने लगा।

वह गोदावरी नदी में स्नान करके नित्य कर्म करने के बाद शान्त मति होकर आसन में बैठकर प्राणायामादि कर्म करने के बाद एकाग्र मन से रुचिकर श्रीहरि मूर्त्ति स्थापन करके, स्वयं दुकूलादि पोषाक धारण कराके दृढ़रूप में कटिबन्धन पूर्वक मन्दिर मार्जन करके, श्रीविग्रह को प्रणाम करके चाँदी सोने के घटों के द्वारा समस्त गंगादि तीर्थों से जल लाकर एवं नानाविध परिचर्या के द्रव्यादि लाकर श्रीविग्रह को स्नान से लेकर आरती तक महाराजोपचार से सेवा समापन करके अतिशय सुख से रहने लगे।

इस प्रकार बहुत काल बीत जाने पर एक दिन मन से ही सघृत परमान्न पकाकरके सोने के पात्र में भोग सजाकर देखा कि यह गरम है कि नहीं, देखने के लिए उस क्षीर में दो अंगुली लगाया। लगाने के बाद प्रतीत हुआ कि यह गरम है, दोनों अंगुली भी जल गयी थी। हाय! यह क्षीर दूषित हो गयी, यह जानकर दुःख हुआ, समाधि टूट जाने पर बाहर भी अंगुली जल जाने से पीड़ा हुयी।

इस अवस्था को देखकर उधर वैकुण्ठ में श्रीवैकुण्ठनाथ हँस पड़े। लक्ष्मी प्रभृति परिकर श्रीवैकुण्ठनाथ के साथ थे, उन सबों ने हँसने का कारण वैकुण्ठनाथ से पूछा। श्रीवैकुण्ठनाथ विमान भेजकर ब्राह्मण को अपने निकट लाकर सब कुछ सबको दिखला दिये, और ब्राह्मण को योग्य होने के कारण अपने निकट में रख लिये॥ १८२॥

### अर्थरत्नाल्प-दीपिका

मानसेनेत्यत्र ब्रह्मवैवर्तकथा च यथा— प्रतिष्ठानपुरे कश्चिद्विप्र आसीत्; स च दरिद्रोऽपि कर्माधीनमात्मानं मन्यमानः शान्त एवासीत्। स तु सरलबुद्धिः कदाचिद्विप्रेन्द्राणां सदसि वैष्णवान् धर्मान् शुश्राव। ते च धर्मा मनसापि सिध्यन्तीति श्रुत्वा दरिद्रः स्वयं तथैवाचरिवान्। ततश्च गोदावरीस्नानपूर्वकं नित्यकर्म समाप्य शान्तमतिर्भूत्वा विविक्तासनप्राणायामादिपूर्वकं स्थिरीभूय मनसैवाभिमतां हरिमूर्त्तिं स्थापयित्वा स्वयं दुकूलादिकं परिधाय दृढं परिकरं बद्ध्वा तत्सदनं सम्मार्ज्य तां प्रणम्य राजतसौवर्णघटैः सर्वेषां गङ्गादितीर्थानां जलमाहृत्य तथा नानापरिचर्य्याद्रव्याण्युपानीय तदीयं स्नपनादिकमारात्रिकान्तं महाराजोपचारं समाप्य दिनं दिनं सुखातिशयमाप्नुवन्नासीत्। तदेवं बहुषु कालेषु गतेषु कदाचिन्मनसैव घृतसहितं परमान्नं निर्माय सौवर्णपात्रेण तद्भोजनार्थमुत्थाप्य स्थितस्तप्ततया स्फुरिते तस्मिन् प्रविष्टमङ्गुष्ठयुगलं दग्धं प्रतीयन् 'हन्त! तदिदं दुष्टं जातमिति' दुःखेन तद्धित्वा समाधिभङ्गेऽपि जाते दग्धाङ्गुष्ठतया बहिरपि पीडितो बभूव। तदवधाय वैकुण्ठे समुपविष्टेन श्रीवैकुण्ठनाथेन हसता श्रीप्रभृतिभिस्तत्कारणं पृष्टेन च सता तं स्वनिकटं विमानेनानिनाय, तथाविधतया दर्शयामास,

स्वनिकटयोग्यतया स्थापयामास चेति॥ १८२॥

## अनुवाद

ब्रह्मवैवर्त्त पुराण में मानसोपचार सेवा की कथा इस प्रकार है—

प्रतिष्ठानपुर में एक ब्राह्मण रहता था, वह दरिद्र होकर भी किन्तु अपने को कर्माधीन मानकर शान्त रहता था। वह सरल बुद्धि का था। एक दिन विप्रेन्द्रों की सभा में उसने वैष्णव धर्म सुन लिया। वह धर्म मन से भी सिद्ध हो सकता है इस प्रकार सुनकर दरिद्र ब्राह्मण स्वयं उस प्रकार आचरण करने लगा।

वह गोदावरी नदी में स्नान करके नित्य कर्म करने के बाद शान्त मति होकर आसन में बैठकर प्राणायामादि कर्म करने के बाद एकाग्र मन से रुचिकर श्रीहरि मूर्त्ति स्थापन करके, स्वयं दुकूलादि पोषाक धारण कराके दृढ़रूप में कटिबन्धन पूर्वक मन्दिर मार्जन करके, श्रीविग्रह को प्रणाम करके चाँदी सोने के घटों के द्वारा समस्त गंगादि तीर्थों से जल लाकर एवं नानाविध परिचर्या के द्रव्यादि लाकर, श्रीविग्रह को स्नान से लेकर आरती तक महाराजोपचार से सेवा समापन करके प्रतिदिन अतिशय सुख से रहने लगे।

इस प्रकार बहुत काल बीत जाने पर एक दिन मन से ही सघृत पायसान्न पकाकरके सोने के पात्र में भोग सजाकर देखा कि यह गरम है कि नहीं, देखने के लिए उस क्षीर में दो अंगुली लगाया। लगाने के बाद प्रतीत हुआ कि यह गरम है, दोनों अंगुली भी जल गयी थी। हाय! यह क्षीर दूषित हो गयी, यह जानकर दु:ख हुआ, समाधि टूट जाने पर बाहर भी अंगुली जल जाने से पीड़ा हुयी।

इस अवस्था को देखकर उधर वैकुण्ठ में श्रीवैकुण्ठनाथ हँस पड़े। लक्ष्मी प्रभृति परिकर श्रीवैकुण्ठनाथ के साथ थे, उन सबों ने हँसने का कारण बैकुण्ठनाथ से पूछा। श्रीवैकुण्ठनाथ विमान भेजकर ब्राह्मण को अपने निकट लाकर सब कुछ सबको दिखला दिये, और ब्राह्मण को योग्य होने के कारण अपने निकट में रख लिये॥ १८२॥

### भक्तिसार-प्रदर्शिनी

परे भक्ताः। मानसेनेत्यत्र ब्रह्मवैवर्तकथा च, यथा— "प्रतिष्ठानपुरे कश्चिद्विप्र आसीत्। स च दरिद्रोऽपि कर्माधीनमात्मानं मन्यमानः शान्त एवासीत्। स तु सरलबुद्धिः कदाचिद्विप्रेन्द्राणां सदसि वैष्णवान् धर्मान् शुश्राव। ते च धर्मा मनसापि सिध्यन्तीति श्रुत्वा दरिद्रः स्वयं तथैवाचरितुमारब्धवान्। ततश्च गोदावरीस्नानपूर्वकं नित्यकर्म समाप्य शान्तमतिर्भूत्वा विविक्तासनःप्राणायामादिपूर्वकं स्थिरीभूय मनसैवाभिमतं हरिमूर्त्तिं स्थापयित्वा स्वयं दुकूलादिकं परिधाप्य तां प्रणम्य दृढपरिकरं बद्ध्वा तत्सदनं सम्मार्ज्य प्रणम्य राजतसौवर्णघटैः सर्वेषां गङ्गादितीर्थानां जलमाहृत्य तथा नानापरिचर्य्याद्रव्याण्युपानीय तदीयस्नपनादिकमारात्रिकान्तं महाराजोपचारं समाप्य दिनन्दिनं सुखातिशयमाप्नुवन्नासीत्। तदेवं बहुषु कालेषु गतेषु कदाचिन्मनसैव घृतसहितं परमान्नं निर्माय सौवर्णपात्रेण भोजनार्थमुत्थाप्य स्थितः। तप्ततया स्फुरिते तस्मिन् प्रविष्टमङ्गुष्ठयुगलं दग्धं प्रतीयन् 'हन्त तदिदं दुष्टं जातमिति' दुःखेन तद्भित्वा समाधिभङ्गेऽपि जाते दग्धाङ्गुष्ठतया बहिरपि पीडितो बभूव। तदवधार्य वैकुण्ठे समुपविष्टेन

श्रीवैकुण्ठनाथेन हसता श्रीप्रभृतिभिस्तत्कारणं पृष्टेन लसता विमानेन स्वनिकटमानयामास। तथाविधतया दर्शयामास स्वनिकटे योग्यतया स्थापयामासेति च" ॥ १८२ ॥

## अनुवाद

परे भक्ता: अर्थात् भक्तगण वाक्य व मन के अतीत वस्तु को प्राप्त किये हैं।

ब्रह्मवैवर्त्त पुराण में मानसोपचार सेवा की कथा इस प्रकार है—

प्रतिष्ठानपुर में एक ब्राह्मण रहता था, वह दरिद्र होकर भी किन्तु अपने को कर्माधीन मानकर शान्त रहता था। वह सरल बुद्धि का था। एक दिन विप्रेन्द्रों की सभा में उसने वैष्णव धर्म सुन लिया। वह धर्म मन से भी सिद्ध हो सकता है इस प्रकार सुनकर दरिद्र ब्राह्मण स्वयं उस प्रकार आचरण करने लगा।

वह गोदावरी नदी में स्नान करके नित्य कर्म करने के बाद शान्त मति होकर आसन में बैठकर प्राणायामादि कर्म करने के बाद एकाग्र मन से रुचिकर श्रीहरि मूर्त्ति स्थापन करके, स्वयं दुकूलादि पोषाक धारण कराके दृढ़रूप में कटिबन्धन पूर्वक मन्दिर मार्जन करके, श्रीविग्रह को प्रणाम करके चाँदी सोने के घटों के द्वारा समस्त गंगादि तीर्थों से जल लाकर एवं नानाविध परिचर्या के द्रव्यादि लाकर, श्रीविग्रह को स्नान से लेकर आरती तक महाराजोपचार से सेवा समापन करके अतिशय सुख से रहने लगे।

इस प्रकार बहुत काल बीत जाने पर एक दिन मन से ही सघृत पायसान्न पकाकरके सोने के पात्र में भोग सजाकर देखा कि यह गरम है कि नहीं, देखने के लिए उस क्षीर में दो अंगुली लगाया। लगाने के बाद प्रतीत हुआ कि यह गरम है, दोनों अंगुली भी जल गयी थी। हाय! यह क्षीर दूषित हो गयी, यह जानकर दुःख हुआ, समाधि टूट जाने पर बाहर भी अंगुली जल जाने से पीड़ा हुयी।

इस अवस्था को देखकर उधर वैकुण्ठ में श्रीवैकुण्ठनाथ हँस पड़े। लक्ष्मी प्रभृति परिकर श्रीवैकुण्ठनाथ के साथ थे, उन सबों ने हँसने का कारण बैकुण्ठनाथ से पूछा। श्रीवैकुण्ठनाथ विमान भेजकर ब्राह्मण को अपने निकट लाकर सब कुछ सबको दिखला दिये, और ब्राह्मण को योग्य होने के कारण अपने निकट में रख लिये ॥ १८२ ॥

**अथ दास्यम् (४७)—**

**दास्यं कर्मार्पणं तस्य कैङ्कर्य्यमपि सर्वथा ॥ (१८३)**

## अनुवाद

दास्य (४७)—

कर्मार्पण एवं सब प्रकार से भगवान् के कैङ्कर्य का नाम ही दास्य है ॥ १८३ ॥

## दुर्गमसङ्गमनी

कर्मार्पणमित्यनूद्य दास्यमिति विधीयते, तदेतच्चान्यमतं, स्वमतन्तु कैङ्कर्यमिति। तच्च किङ्करोऽस्मीत्यभिमानः। यथोक्तमितिहाससमुच्चये—

जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्वान् लोकान्समुद्धरेदिति ॥

तथैव व्याख्यातम् (भा. १०/८१/३६)— "तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्याद्" इति श्रीदामविप्रस्यवाक्ये स्वामिभिरपि दास्यमिति सेवकत्वमिति। एतस्य च कार्य्यभूतं परिचर्य्यादिकं ज्ञेयं, केवलपरिचर्य्यारूपत्वे भेदो न स्यात्॥ १८३॥

## अनुवाद

यहाँ पर कर्मार्पण का उल्लेख करके दास्य का ही विधान किया गया है। कर्मार्पण अन्य के मत में दास्य है। स्वमत में इसका अभिप्राय कैङ्कर्य है। मैं प्रभू का किङ्कर हूँ, इस प्रकार के अभिमान को कैङ्कर्य कहते हैं। जैसाकि इतिहास समुच्चय ग्रन्थ में उक्त है—

जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी।
दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेदिति॥

सहस्रों जन्मों के बाद यदि इस प्रकार मति होती है कि मैं वासुदेव का दास हूँ, तो वह सब लोकों को उद्धार कर सकता है।

श्रीमद्भागवत के (१०/८१/३६) में इसी प्रकार उक्त है—

तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात्।
महानुभावेन गुणालयेन विषज्जतस्तत् पुरुषप्रसङ्गः॥

जन्म जन्म में श्रीकृष्ण के सहित मेरा सौहार्द, सख्य, मैत्री एवं दास्य हो। महानुभव गुणालय श्रीकृष्ण का सङ्ग प्राप्त तदीय जनगण का प्रकृष्ट सङ्ग लाभ मुझको हो।

इस श्लोक की व्याख्या में स्वामिपाद ने भी दास्य शब्द का अर्थ सेवकत्व किये हैं। इस प्रकार दासत्व कार्य परिचर्या प्रभृति हैं, इस प्रकार जानना होगा। केवल परिचर्या रूप होने पर दास्य एवं परिचर्या में भेद नहीं होगा॥ १८३॥

## अर्थरत्नाल्प-दीपिका

कर्म्मार्पणं कर्म्मणां स्वभावप्राप्तानां भक्षणादीनां भक्त्यङ्गानाञ्चार्पणं कर्म्मार्पणम्; कैङ्कर्यं तदीयतया तत्परत्वम्॥ १८३॥

## अनुवाद

स्वभाव प्राप्त भक्षणादि कर्म एवं भक्ति के अङ्ग समूह का अर्पण कर्मार्पण है। और उन्हीं का होकर उनका कर्म करना कैङ्कर्य है॥ १८३॥

## भक्तिसार-प्रदर्शिनी

कर्मार्पणमित्यनूद्य दास्यमिति विधीयते, तदेतच्चान्यमतं, स्वमतन्तु कैङ्कर्यमिति। किङ्करोऽस्मीत्यभिमानः। यथोक्तमितिहाससमुच्चये—

'जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्वान् लोकान् स उद्धरेदिति॥'

एतस्य च कार्य्यभूतं परिचर्य्यादिकं ज्ञेयम्। केवलपरिचर्य्यारूपत्वे भेदो न स्यात्॥ १८३॥

## अनुवाद

यहाँ पर कर्मार्पण का उल्लेख करके दास्य का ही विधान किया गया है। कर्मार्पण अन्य के मत में दास्य है। स्वमत में इसका अभिप्राय कैङ्कर्य है। मैं प्रभू का किङ्कर हूँ, इस प्रकार के अभिमान को कैङ्कर्य कहते हैं। जैसाकि इतिहास समुच्चय ग्रन्थ में उक्त है—

जन्मान्तरसहस्त्रेषु यस्य स्यान्मतिरीदृशी।
दासोऽहं वासुदेवस्य सर्वान् लोकान् स उद्धरेदिति॥

सहस्त्रों जन्मों के बाद यदि इस प्रकार मति होती है कि मैं वासुदेव का दास हूँ, तो वह सब लोकों को उद्धार कर सकता है। इस प्रकार दासत्व कार्य परिचर्या प्रभृति हैं, इस प्रकार जानना होगा। केवल परिचर्या रूप होने पर दास्य एवं परिचर्या में भेद नहीं होगा॥ १८३॥

**तत्र आद्यं, यथा स्कान्दे—**

**तस्मिन्समर्पितं कर्म स्वाभाविकमपीश्वरे।**
**भवेद्भागवतो धर्मस्तत्कर्म किमुतार्पितम्॥ इति।** (१८४)

## अनुवाद

प्रथम कर्मार्पण, यथा स्कन्दपुराण में कहा गया है—

वर्णाश्रमादि में स्वाभाविक कर्म समूह को यदि ईश्वर में अर्पण करते हैं, तो भागवत धर्म होता है। यदि ऐसा होता है तो, भगवत् सम्बन्धीय श्रवण कीर्त्तन रूप कर्म भगवान् को अर्पण करने से भागवत धर्म क्यों नहीं होगा?॥ १८४॥

## दुर्गमसङ्गमनी

तत्राद्यं कर्मार्पणमुदाहरति— तस्मिन्निति॥ १८४॥

## अनुवाद

प्रथम कर्मार्पण को दिखाते हैं—

स्वाभाविक कर्म का अर्पण यदि ईश्वर में करते हैं तो वह भागवत धर्म कहलाता है फिर तो श्रवण कीर्त्तनादि कर्म का अर्पण करने से तो भागवत धर्म होगा ही।

## अर्थरत्नाल्प-दीपिका

भागवतं तत्प्रापकं दास्यलक्षणं, तत्कर्म जपध्यादानादि॥ १८४॥

## अनुवाद

भागवत धर्म का अर्थ है दास्य लक्षण धर्म जिससे भगवद् प्राप्ति होती है। तत्कर्म शब्द का अर्थ जप, ध्यान आदि है॥ १८४॥

## भक्तिसार-प्रदर्शिनी

तत्र कर्मार्पणमुदाहरति— तत्रेति। तस्मिन् भगवति स्वाभाविकमपि कर्मार्पितं सद् भागवतो धर्मो

भवेत्। तस्य भगवतः कर्मश्रवणकीर्त्तनादिकमर्पितं सत् किमुत॥ १८४॥

### अनुवाद

कर्मार्पण का उदाहरण प्रस्तुत करते हैं— तत्रेति। उन भगवान् को स्वाभाविक कर्मों को भी अर्पण करने से यदि भागवत धर्म होता है तब तो भगवान् के कर्म श्रवण कीर्त्तनादि उनको अर्पित होने से भागवत धर्म होगा, इसमें कहना ही क्या?॥ १८४॥

**कर्म स्वाभाविकं भद्रं जपध्यानार्चनादि च।**
**इतीदं द्विविधं कृष्णे वैष्णवैर्दास्यमर्पितम्॥ (१८५)**

### अनुवाद

स्वाभाविक भद्र कर्म व जप, ध्यान, अर्च्चनादि कर्म इन दोनों का वैष्णवों के द्वारा श्रीकृष्ण को अर्पण दासत्व कहा जाता है॥ १८५॥

### दुर्गमसङ्गमनी

तत्रैव विधेयं दास्यमपि द्वैविध्येनाह— कर्म स्वाभाविकमिति। स्वाभाविकं तत्तद्वर्णाश्रमाद्युपाधिस्वभावप्राप्तं तच्च भद्रमेव, न त्वन्यत्। तथा जपेति। इतीदं द्विविधं कर्म वैष्णवैः कृष्णोऽर्पितं चेद् दास्यमुच्यते॥ १८५॥

### अनुवाद

यहाँ पर विधेय दास्य भी दो प्रकार के हैं। इसके लिए कहते हैं— कर्म स्वाभाविकमिति। स्वाभाविक कर्म अर्थात् अपने वर्णाश्रमादि के उपाधि स्वभाव से प्राप्त कर्म, इसमें भी भद्र कर्म न कि अन्य कर्म। तथा जप ध्यान अर्चन प्रभृति कर्म। इन दोनों प्रकार के कर्मों का अर्पण यदि वैष्णव कृष्ण में करते हैं तो वह दास्य कहा जाता है॥ १८५॥

### अर्थरत्नाल्प-दीपिका

तस्मिन्निति श्लोकं व्याचक्षते— कर्मेति। स्वाभाविकं भक्षणादि भद्रमुत्तमं नत्वभद्रं निन्द्यमपि; नित्यनैमित्तिकान्यपि कर्माणि (भा. १/५/२२)—

'नैष्कर्म्यमप्यच्युतभाववर्ज्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्॥'

(भा. ११/२०/२६)—

'कर्मणां जात्यशुद्धानामनेन नियमः कृतः।
गुणदोषविधानेन सङ्गानां त्याज्येनेच्छया॥' इत्यादिवचनेभ्योऽभद्राण्येव तेषामर्पणं सात्विकं कर्म्मैव, न दास्यमित्यभिप्रायो यथैकादशे (भा. ११/२५/२३)— 'मदर्पणं निष्फलं वा सात्विकं निजकर्म तत्' इति, तस्मात् ज्ञानमेव भवति, न भक्तिर्यथा तत्रैव (भा. ११/२०/११)—

'अस्मिन् लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया॥' मद्भक्तिञ्च तु यदृच्छया

केनापि भाग्योदयेनेवेत्यर्थः। जपध्यानादेरर्पणं दास्यं यथा सप्तमे (भा. ७/५/२३-२४)—

'श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मानिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥' अनयोरर्थः— इति श्रवणादीनि नवलक्षणानि यस्याः सा नवलक्षणा। तत्र दास्यं जपध्यानादिरूपं दासानां कर्म, भगवत्यद्धा साक्षाद् भक्तिर्या पुंसा क्रियेत, सा विष्णौ अर्पिता चेत्तन्नवधा भक्त्यर्पणम् उत्तममधीतं दास्यं मन्ये दास्यमेवाधीतफलं नान्यदिति सोत्तमाधीता शिक्षेति प्रश्नस्योत्तरमिति॥ १८५॥

## अनुवाद

'कर्म स्वाभाविकं' इस श्लोक की व्याख्या करते हैं— स्वाभाविक अर्थात् भक्षणादि जो उत्तम कर्म हैं उनका अर्पण करना चाहिये, किन्तु निन्दनीय अभद्र कर्मों का अर्पण नहीं करना चाहिये।

नित्य नैमित्तिक कर्मार्पण के सम्बन्ध में श्रीमद्भागवत के (१/५/१२) में उक्त है—

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्॥

नैष्कर्म्य और निरञ्जन ज्ञान भी यदि भगवान् की भक्ति से रहित हो तो उसकी ज्यादा शोभा नहीं होती है। फिर जो सदा ही अमङ्गल रूप है, वह काम्य कर्म; और जो भगवान् को अर्पण नहीं किया गया है, ऐसा अहैतुक निष्काम कर्म भी भला कैसे सुशोभित हो सकता है?

'कर्मणां जात्यशुद्धानामनेन नियमः कृतः।
गुणदोषविधानेन सङ्गानां त्याज्येनेच्छया॥

आसक्ति परित्याग के लिए गुण दोष विधान के द्वारा कर्मों की अशुद्धि शुद्धि का नियम किया गया है।

इन सब वचनों के द्वारा प्रतीत होता है कि—अभद्र कर्मों के अर्पण से सात्त्विक कर्म होता है। वह दास्य नहीं है।

श्रीमद्भागवत के (११/२५/२३) में उक्त है—

मदर्पणं निष्फलं वा सात्विकं निजकर्म तत्।

जब निजकर्म का आचरण मुझे समर्पित करके अथवा निष्कामभाव से किया जाता है, तब वह सात्विक होता है। उससे केवल ज्ञान होता है, भक्ति नहीं।

जैसे श्रीमद्भागवत के (११/२०/११) में उक्त है—

अस्मिन् लोके वर्त्तमानः स्वधर्मस्थोऽनद्य शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया॥

अपने धर्म में निष्ठा रखने वाला पुरुष इस शरीर में रहते रहते ही निषिद्ध कर्म का परित्याग कर

देता है, इसी से अनायास ही उसे आत्मसाक्षात्कार रूप विशुद्ध तत्त्वज्ञान प्राप्त होता है और मेरी भक्ति की प्राप्ति यदृच्छया ईश्वर एवं ईश्वर के भक्तों की अनुकम्पा से मिलती है।

जप ध्यान आदि का अर्पण दास्य है, इसका वर्णन श्रीमद्भागवत के (७/५/२३-२४) में है–

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥

श्रीविष्णु भगवान की भक्ति के नौ भेद हैं। भगवान् के गुण, लीला, नाम आदि का श्रवण, उन्हीं का कीर्त्तन, उनके रूप, नाम आदि का स्मरण, उनके चरणों की सेवा पूजा अर्चा, वन्दन, दास्य, सख्य और आत्म निवेदन, यदि भगवान के प्रति समर्पित होकर नौ प्रकार की भक्ति की जाय, तो मैं उसी को उत्तम अध्ययन समझता हूँ।

दोनों श्लोकों का अर्थ इस प्रकार है– जिनमें श्रवणादि नौ लक्षण हैं, वह नवलक्षणा है, उसके मध्य में जप, ध्यानादि दास्य हैं, दास के धर्म हैं।

व्यक्ति द्वारा भगवान् में जो साक्षात् भक्ति की जाती है वह यदि विष्णु में अर्पित होती है तो उस नवधा भक्ति के अर्पण को उत्तम अध्ययन अर्थात् दास्य मानता हूँ। दास्य ही अध्ययन का फल है, न कि अन्य कोई वस्तु।

इन दो श्लोकों में हिरण्यकशिपु के उत्तम अध्ययन शिक्षा विषयक प्रश्न का उत्तर प्रह्लाद ने दिया है॥ १८५॥

### भक्तिसार-प्रदर्शिनी

स्वाभाविकमेव द्विधा विवृणोति– कर्म स्वाभाविकमिति स्वाभाविकं, चतुर्वर्णाश्रमाद्युपाधिप्राप्तम्, तच्च भद्रमेव; नत्वन्यत् मृत्तिकाशौचादि। तथा जपेति। इतीदं द्विविधं कर्म वैष्णवैः कृष्णेऽर्पितञ्चेत् दास्यमुच्यते॥ १८५॥

### अनुवाद

यहाँ पर स्वाभाविक कर्म से चतुर्वर्ण आश्रम आदि में उपाधि प्राप्त कर्मों को जानना है। इसमें भी केवल उत्तम कर्मों के अर्पण को जानना चाहिये, अभद्र कर्मों को नहीं। मृत्तिका शौचादि कर्म अभद्र कर्म है, उसका अर्पण नहीं होता है। इसी प्रकार जप आदि कर्मों का भी समर्पण होता है। इस प्रकार इन द्विविध कर्मों का वैष्णवों द्वारा श्रीकृष्ण में अर्पित किया जाना दास्य कहा जाता है॥ १८५॥

**मृदुश्रद्धस्य कथिता स्वल्पा कर्माधिकारिता।**
**तदर्पितं हरौ दास्यमिति कैश्चिदुदीर्य्यते॥　　(१८६)**

### अनुवाद

मृदु श्रद्धा जिसकी है, उसका कर्म में स्वल्प अधिकार कहा गया है। वह कर्म यदि श्रीहरि को

अर्पण किया जाता है तो कोई कोई उसे दास्य कहते हैं॥ १८६ ॥

## दुर्गमसङ्गमनी

तत्रोत्तरस्यार्पणाभावाद्दास्यत्वाभावेऽपि शुद्धभक्त्यङ्गत्वमस्ति, पूर्वस्य तु तदपि नास्तीति सुतरामेव न तत्स्वमतमित्याह— मृदुश्रद्धस्येति। तेन तस्यार्पितमर्पणं दास्यं, तदेवं पूर्वत्राप्यर्पण एव तात्पर्यं, (भा. ७/५/२३)— श्रवणं कीर्त्तनमित्यादौ तु इति पुंसार्पिता विष्णोरित्यनेन दास्यादन्यदर्पणं प्रतीयते॥ १८६ ॥

## अनुवाद

दूसरा वाला कर्म यानि कि जप-ध्यानादि रूप कर्म यदि अर्पण नहीं किया जाता है तो दास्यत्व का अभाव होने पर भी वह शुद्धा भक्ति का अङ्ग है। लेकिन पूर्व वाला यानि कि वर्णाश्रम कर्म अर्पण करने या न करने पर शुद्ध भक्ति का अङ्ग नहीं है। इसलिये नित्य-नैमित्तिक कर्म का अर्पण दास्य नहीं है। यही अपना मत है। इसीलिये कहते हैं— मृदुश्रद्धस्येति।

दूसरों का मत है कि कर्म अर्पण करने से दास्य होगा, अतएव पहले कथन (१/२/१८५) का भी तात्पर्य है— अर्पण में।

दास्य भिन्न है अर्पण से, इसका स्पष्टीकरण श्रीमद्भागवत के (७/५/२३-२४) में उक्त है—

श्रवणं कीर्त्तनं विष्णोः स्मरणं पाद सेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥

प्रह्लाद जी ने कहा भक्ति के नौ भेद हैं, भगवान् के गुण लीला नाम आदि का श्रवण उन्हीं का कीर्त्तन, उनके रूप नाम आदि का स्मरण, उनके चरणों की सेवा, पूजा, अर्चना, वन्दन दास्य सख्य और आत्म निवेदन यदि भगवान् के प्रति समर्पण के साथ करते हैं, तो उसी को उत्तम अध्ययन कहते हैं।

यहाँ पर दास्य से अर्पण पृथक् है, इस प्रकार प्रतीत होता है॥ १८६ ॥

## अर्थरत्नाल्प-दीपिका

मृद्विति— कैश्चित् श्रीधरस्वामिप्रभृतिभिस्तत् स्वल्पं कर्म अर्पितं सत् ॥ १८६ ॥

## अनुवाद

श्लोकोक्त कैश्चिद् शब्द से श्रीधरस्वामिपाद प्रभृति को जानना है। वे लोग कोमल श्रद्धालु व्यक्ति का भगवान् में स्वल्प कर्मों के अर्पण को दास्य कहे हैं॥१८६॥

## भक्तिसार-प्रदर्शिनी

तत्रोत्तरस्य जपध्यानार्चनादेरर्पणाभावेऽपि शुद्धभक्तित्वमस्ति। पूर्वस्य वर्णाश्रमाचारकर्मणोऽर्पणेऽपि न शुद्धभक्तित्वमिति सुतरामेव न तत् स्वमतं;

ज्ञानकर्माद्यनावृतत्वेनोक्तत्वादित्याह— मृदुश्रद्धेति। श्रद्धाया मृदुत्वं नाम भगवद्भक्त्यैव सर्वं भविष्यतीति दृढ़विश्वासाभावविशिष्टत्वम्॥ १८६॥

### अनुवाद

जप, ध्यान, अर्चन का अर्पण न करने पर भी शुद्ध भक्ति होती है। किन्तु पूर्वोक्त वर्णाश्रम कर्म का अर्पण करने पर भी शुद्ध भक्ति नहीं होती है। इसलिए यह मत अपना नहीं है क्योंकि ज्ञान-कर्मादि से अनावृत भक्ति को ही शुद्धा भक्ति कहते हैं। इसीलिए श्रद्धा का मृदुत्व का अर्थ है— भगवद्भक्ति से ही सब कुछ होगा, इस दृढ़ विश्वास का अभाव रहना॥ १८६॥

**द्वितीयं, यथा नारदीये—**

**ईहा यस्य हरेर्दास्ये कर्मणा मनसा गिरा।**
**निखिलास्वप्यवस्थासु जीवन्मुक्तः स उच्यते॥ (१८७)**

### अनुवाद

द्वितीय (कैङ्कर्य) दास्य, जैसाकि नारदीय पुराण में उक्त है—

कर्म, मन एवं वाणी से जिसकी निखिल अवस्था में हरि के दास्य में चेष्टा रहती है, वह समस्त अवस्थाओं में जीवन्मुक्त कहलाता है॥ १८७॥

### दुर्गमसङ्गमनी

अथ स्वमतं महिम्ना दर्शयति— ईहा यस्येति। दास्ये निमित्ते ईहा दासो भवामीति स्पृहेत्यर्थः॥ १८७॥

### अनुवाद

ग्रन्थकार दास्य विषयक अपने मत को इसकी महिमा वर्णन द्वारा व्यक्त करते हैं। ईहा दास्ये कहने से दास्य के निमित्त ईहा अर्थात् '' मैं दास बनूं'' इस प्रकार की स्पृहा॥ १८७॥

### अर्थरत्नाल्प-दीपिका

ईहेति, दास्ये निमित्ते तदीयोऽहमिति बुद्ध्या ईहा चेष्टा, (भा. ९/४/१८-२०)— 'स वै मनः' इत्यादि श्लोकत्रय्योक्ता सा ज्ञेया॥ १८७॥

### अनुवाद

ईहा दास्ये कहने से दास्य निमित्त चेष्टा रहेगी, अर्थात् मैं प्रभु का हूँ। इस प्रकार बुद्धि द्वारा चेष्टा होगी। श्रीमद्भागवत के (९/४/१८-२०) में इसका उदाहरण है।

स वै मनः कृष्ण पदारविन्दयो, र्वचांसि वैकुण्ठगुणानुवर्णने।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युत सत्कथोदये॥१८
मुकुन्द लिङ्गालय दर्शने दृशौ तद् भृत्यगात्रस्पर्शेऽङ्ग सङ्गमम्।
घ्राणं च तत्पादसरोज सौरभे श्रीमत्तुलस्या रसनां तदर्पिते॥१९

पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने।
कामं च दास्ये न तु कामकाम्यया यथोत्तम श्लोकजनाश्रया रतिः॥ २०

अम्बरीष महाराज श्रीकृष्ण चरण युगल में मन को अर्पण किये थे अर्थात् श्रीकृष्ण के सेवादि कार्य्य सम्पादन हेतु सङ्कल्प किये थे। वाक्य समूह को श्रीकृष्ण गुणानुवर्णन में नियुक्त किये थे। हस्तद्वय को श्रीहरि मन्दिर मार्जनादि कार्य्य में रत किये थे। श्रुति अर्थात् श्रवण इन्द्रिय को श्रीविष्णु की पवित्र कथा का श्रवण में नियुक्त किये थे। भक्त गात्र स्पर्श हेतु अङ्ग को नियुक्त किये थे। एवं रसना को महाप्रसाद आस्वादन में रत किये थे। चरण युगल को श्रीहरिक्षेत्र गमन में, मस्तक को हृषीकेश श्रीकृष्ण के चरण वन्दन में एवं काम को अर्थात् सङ्कल्प को भगवत् दास्य लाभ हेतु समर्पण किये थे। किन्तु विषय भोग सम्पादन हेतु कभी सङ्कल्प नहीं किये थे। बल्कि इसलिए कि उन्हें वह भगवत् प्रेम प्राप्त हो जो पवित्र कीर्त्ति भगवान् के निज जनों में ही निवास करता है।॥ १८७॥

### भक्तिसार-प्रदर्शिनी

अथ स्वमतं महिम्ना दर्शयति— ईहा यस्येति। दास्ये निमित्ते ईहा दासो भवामीति स्पृहेत्यर्थः॥ १८७॥

### अनुवाद

ग्रन्थकार दास्य विषयक अपने मत को इसकी महिमा वर्णन द्वारा व्यक्त करते हैं। ईहा दास्ये कहने से दास्य के निमित्त ईहा अर्थात् '' मैं दास बनूं'' इस प्रकार की स्पृहा॥ १८७॥

**अथ सख्यम् (४८)—**

**विश्वासो मित्रवृत्तिश्च सख्यं द्विविधमीरितम्॥ (१८८)**

### अनुवाद

सख्य (४८)—

विश्वास एवं मित्रवृत्ति भेद से सख्य दो प्रकार का होता है॥ १८८॥

### दुर्गमसङ्गमनी

विश्वास इति— पूर्ववदन्यमतं, मित्रवृत्तिरिति तु स्वमतं, मित्रं बन्धुमात्रं। (भा. १०/१४/३२)— "यन्मित्रं परमानन्दमि" तिवत्, तद्वृत्तिस्तत्तयाभिमानः॥ १८८॥

### अनुवाद

दास्य के तरह यहाँ पर भी सख्य के निर्वचन में दो मत हैं— अन्य मत विश्वास को सख्य कहते हैं। अपने मत में मित्र वृति को सख्य कहते हैं। बन्धुमात्र को मित्र कहते हैं। श्रीमद्भागवत के १०/१४/३२ में उक्त है—

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥

अहो! नन्द गोपादि व्रजवासियों का एक अनिर्वचनीय सौभाग्य है, कारण, परमानन्द पूर्ण सनातन

ब्रह्म उनके मित्र हैं।

इस प्रकार मित्र वृत्ति रूप में अभिमान को सख्य कहते हैं॥ १८८॥

### भक्तिसार-प्रदर्शिनी

विश्वासेति— पूर्ववदन्यमतं, मित्रवृत्तिरिति स्वमतम्। मित्रं बन्धुमात्रं। (भा. १०/१४/३२)— यन्मित्रं परमानन्दमितिवत्। तद्वृत्तिस्तत्तयाभिमानः॥ १८८॥

### अनुवाद

दास्य के तरह यहाँ पर भी सख्य के निर्वचन में दो मत हैं— अन्य मत विश्वास को सख्य कहते हैं। अपने मत में मित्र वृति को सख्य कहते हैं। बन्धुमात्र को मित्र कहते हैं। श्रीमद्भागवत के १०/१४/३२ में उक्त है—

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥

अहो! नन्द गोपादि व्रजवासियों का एक अनिर्वचनीय सौभाग्य है, कारण, परमानन्द पूर्ण सनातन ब्रह्म उनके मित्र हैं।

इस प्रकार मित्र वृत्ति रूप में अभिमान को सख्य कहते हैं॥ १८८॥

**तत्र आद्यं, यथा महाभारते—**

**प्रतिज्ञा तव गोविन्द! न मे भक्तः प्रणश्यति।**
**इति संस्मृत्य संस्मृत्य प्राणान् संधारयाम्यहम्॥ (१८९)**

**तथा एकादशे च (भा. ११/२/५३)—**

**त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्।**
**न चलति भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि य स वैष्णवाग्र्यः॥ इति। (१९०)**

### अनुवाद

सख्य का प्रथम प्रकार 'विश्वास' —

जैसाकि महाभारत में इस प्रकार कहा गया है— श्रीकृष्ण को द्रौपदी बोल रही हैं— हे गोविन्द! तुम्हारी प्रतिज्ञा है कि मेरा भक्त कभी नष्ट नहीं होता, इसका पुनः-पुनः स्मरण करके मैं प्राण धारण कर रही हूँ॥१८९॥

तथा एकादश (११-२-५३) में भी कहा गया है—

जो त्रिभुवन विभव प्राप्ति हेतु भी लव निमेषार्द्ध काल भी भगवान् के पदारविन्द भजन से विचलित नहीं होता है। जिसकी श्रीहरि स्मृति क्षण काल के निमित्त भी विलुप्ता नहीं होती है, वह वैष्णव श्रेष्ठ है॥१९०॥

### दुर्गमसङ्गमनी

प्रतिज्ञेति श्रीद्रौपदीवाक्यं। तस्मादस्या यद्यपि प्रेमविशेषमयपरिकरान्तर्गतत्वेन दर्शयिष्यमाणाया

वाक्यमिदं प्रेमविशेषकार्य्यमेव, न तु साधनं, तथापि परमप्रेमातिशयानां साधनमपि स्यादित्येवमुदाहृतम्। एवमुत्तरत्र च भागवतोत्तमवर्णनमयप्रकरणादुद्धृते पद्ये ज्ञेयम्। (भा. ११/२/५५) "प्रणयरसनया धृताङ्घ्रिपद्म" इति तदुपसंहारात्॥ १८९॥

त्रिभुवनविभवाय, किमुत तद्धेतव इत्यर्थः। सर्वोऽपि द्वन्द्वो, विभाषयैकवद्भवतीति न्यायेन एकवचनम्॥ १९०॥

## अनुवाद

द्रौपदी की गणना प्रेमविशेषमय परिकरों के अन्तर्गत होने से यद्यपि उनका यह वाक्य प्रेम विशेष का कार्य है। इसमें साधन रूपता नहीं है। तथापि विरल प्रचार परम महा प्रेमवानों के लिए यह साधनरूप भी हो सकता है। इसलिए यहाँ पर उसको उठाया गया है। उत्तरत्र भी इसी प्रकार जानना होगा। श्रीमद्भागवत के भागवतोत्तमवर्णनमय प्रकरण से उद्धृत ११/२/५५ श्लोक को यहाँ अनुसन्धान करना आवश्यक है—

विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः।
प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥

विवशता से नामोच्चारण करने पर भी सम्पूर्ण पाप राशि को नष्ट कर देने वाले स्वयं भगवान् श्रीहरि जिसके हृदय को क्षणभर के लिए भी नहीं छोड़ते हैं, क्योंकि उसने प्रणय की रस्सी से उनके चरण कमल को बाँध रक्खा है, वास्तव में ऐसा पुरुष ही भगवान् के भक्तों में प्रधान है। यह उपसंहार वाक्य है॥१८९॥

तीनों भुवनों के विभव के लिए अवसर प्राप्त होने पर भी जिसका मन एक लवनिमेष काल तक के लिये भी भगवत् चरणारविन्द की सेवा से नहीं हटता वही श्री श्रेष्ठ भागवत वैष्णव है, , उसके कारण को प्राप्त होने पर मन नहीं हटेगा, इसमें कहना ही क्या! त्रिभुवनविभव हेतु शब्द समाहार में द्वन्द्व समास होकर विकल्प से एक वचन हुआ है॥ १९०॥

## अर्थरत्नाल्प-दीपिका

प्रतिज्ञेति श्रीद्रौपद्या वाक्यम्, यत्र श्लोके यदंशस्य स्फुटोपलब्धिस्तत्र तदंशस्यैवोदाहृतिरिति ज्ञापयितुं तस्या वाक्यं साधने उदाहृतम्। एवमेव कुत्रापि पूर्व्वत्राप्यग्रेऽपि परीक्षितादयो भावोत्पत्तिमात्रे—(भा. १/१९/१५)— 'तं मोपयातं प्रतियन्तु विप्राः' इत्यादिना उदाहरिष्यन्ति॥ १८९॥

त्रिभुवन-विभव-हेतवे त्रिभुवनविभवस्य सिद्ध्यर्थम्॥ १९०॥

## अनुवाद

प्रतिज्ञेति— यह वाक्य द्रौपदी का है। जिस श्लोक में जिस अंश की स्फुट रूप में उपलब्धि होती है, वहाँ उसी अंश का उदाहरण किया जाता है, इसको सूचित करने के लिए द्रौपदी के इस वाक्य को साधन प्रकरण में उद्धृत किया गया है।

इसी प्रकार ग्रन्थ में कहीं-कहीं जैसे भावोत्पत्ति मात्र में सिद्ध परीक्षित महाराज के निम्न वाक्य

को उदाहरण रूप में प्रस्तुत किया जायेगा। श्रीमद्भागवत के १/१९/१५ में उक्त है—

तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे।
द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णु गाथाः॥

ब्राह्मणों! अब मैंने अपने चित्त को भगवान् के चरणों में समर्पित कर दिया है। आप लोक और गङ्गा देवी शरणागत जानकर मुझ पर अनुग्रह करें, ब्राह्मण कुमार के शाप से प्रेरित कोई दूसरा कपट से लक्षक का रूप धरकर मुझे डस ले अथवा स्वयं तक्षक आकर डस ले इसकी मुझे तनिक भी परवाह नहीं है। आप लोक कृपा करके भगवान् की रसमयी लीलाओं का गायन करें॥ १८९॥

त्रिभुवनविभवहेतवे अर्थात् तीनों लोकों के ऐश्वर्य की सिद्धि के लिये॥ १९०॥

### भक्तिसार-प्रदर्शिनी

प्रतिज्ञेति— यद्यपि सिद्धभक्ताया द्रौपद्या इदं वाक्यं प्रेमविशेषकार्य्यमेव, न तु साधनरूपम्, एवं त्रिभुवनविभवेत्यपि उत्तमभक्तलक्षणत्वेन सिद्धतद्भक्तस्यानुभावरूपमेव, न तु साधनरूपम्, तथापि सख्यात्मनिवेदनयोरधिकारी सिद्धभक्त एव, न तु साधकमात्रम्। अतएव वक्ष्यते (भ.र.सि.१/२/१९८)—

दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने।
केषाञ्चिदेव धीराणां लभते साधनार्हतामिति॥ तस्मात् सिद्धतुल्यः

कश्चिद्विरलप्रचारः साधकविशेष एवानयोरधिकारी, न तु सर्वे इति ज्ञेयम्।

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरिति त्वया भगवत्स्मृतिः क्षणं त्यज्यतां, तुभ्यं त्रिभुवनविभवं दास्यामीति श्रवणेऽपि योऽकुण्ठस्मृतिरित्यर्थः। अतएव भगवत्पदारविन्दान्न चलति स वैष्णवाग्र्यः। पदारविन्दात् कथम्भूतात्? अजितेन्द्रियैः सुरादिभिर्विमृग्यादेव, न तु प्राप्यात्॥ १८९-१९०॥

### अनुवाद

यद्यपि सिद्ध भक्त द्रौपदी का यह वाक्य प्रेम विशेष का कार्य है।, यह साधन रूप नहीं है। इसी प्रकार "त्रिभुवन विभवहेतवे" इत्यादि भी उत्तम भक्त का लक्षण होने के कारण यह वाक्य सिद्ध भक्त का अनुभाव रूप ही है। यह साधन रूप नहीं है। ऐसा होने पर भी सख्य, आत्मनिवेदन का अधिकारी सिद्ध भक्त ही होता है, न कि साधक मात्र।

अतएव आगे १/२/१९८ में उक्त है—

दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने।
केषाञ्चिदेव धीराणां लभते साधनार्हतामिति॥

सख्य एवं आत्मनिवेदन दुष्कर एवं विरल होने पर भी किसी-किसी धीर भक्त के लिये यह साधन भी होते हैं।

अतएव सिद्ध तुल्य किसी-किसी विरल प्रचार साधक विशेष ही सख्य एवं आत्मनिवेदन का अधिकारी होता है। सब लोक इसके अधिकारी नहीं हैं। इस प्रकार जानना होगा।

तुम भगवत् स्मृति को क्षण काल के लिये छोड़ दो, तुमको तीनों लोकों का ऐश्वर्य देंगे, इस

प्रकार सुनने पर भी जो भगवत् स्मृति को नहीं छोड़ता है—वह श्रेष्ठ वैष्णव होता है। अतएव भगवत् पदारविन्द से विचलित नहीं होता है, वह वैष्णव श्रेष्ठ हैं। किस प्रकार भगवत् चरणारविन्द से विचलित नहीं होता है—उसको कहते हैं—अजितेन्द्रिय देवतागणों के द्वारा अन्वेषणीय ही हैं चरण कमल जिनके, इस प्रकार भगवत् पदारविन्द से, प्राप्त किये हुये पदारविन्द से नहीं यानि कि देवगण भी भगवान् के पदारविन्द के अन्वेषणमात्र ही करते हैं, प्राप्त नहीं करते हैं॥ १९०॥

**श्रद्धामात्रस्य तद्भक्तावधिकारित्वहेतुता।**
**अङ्गत्वमस्य विश्वासविशेषस्य तु केशवे॥** (१९१)

### अनुवाद

भगवद्भक्ति में अधिकार का कारण श्रद्धा मात्र है। केशव में विश्वास विशेष के अङ्ग को श्रद्धा कहा जाता है॥ १९१॥

### दुर्गमसङ्गमनी

श्रद्धामात्रस्य इति— यद्यपि श्रद्धाविश्वासयोरेकपर्य्यायत्वमेव तथापि तत्पूर्वोत्तरावस्थयोस्तत्तच्छब्दप्रयोगप्राचुर्य्यमिति पृथक्शब्दप्रयोगः, फलसामान्यावश्यकसर्वोत्तमसाधनत्वेन प्रतीतिरत्र मात्रपदार्थः। फलविशेषस्य तादृशसाधनत्वेन स्वतः सर्वोत्तमफलरूपत्वेन वा प्रतीतिः विशेषपदार्थः। तत्र प्रस्तुतत्वात् द्वयं क्रमेणोदाहृतमिति भावः॥ १९१॥

### अनुवाद

यद्यपि श्रद्धा और विश्वास पर्यायवाची हैं तथापि श्रद्धा का पूर्वावस्था में एवं विश्वास का उत्तरावस्था में प्रचुर प्रयोग देखा जाता है, अतः पृथक् शब्दों का प्रयोग हुआ है।

फल सामान्य आवश्यक सर्वोत्तम साधन रूप से प्रतीति कराने के लिए श्रद्धा शब्द के साथ मात्र शब्द को दिया गया है। फल विशेष का साधन रूप से प्रतीति कराने के लिए विशेष शब्द का प्रयोग हुआ है, अथवा सर्वोत्तम फल रूप से प्रतीति कराने के लिए विशेष शब्द दिया गया है। उदाहरण में क्रमपूर्वक दोनों का उदाहरण प्रस्तुत किया गया है॥१९१

### अर्थरत्नाल्प-दीपिका

ननु पूर्व्वं तद्भक्तौ श्रद्धाया अधिकारिहेतुतोक्ता; अधुना तु श्रद्धाविश्वासयोरेकार्थत्वात् कथं तस्या अङ्गत्वमित्यत्राह,— श्रद्धेति तस्य भक्तौ तद्भक्तौ भजने श्रद्धामात्रस्याधिकारित्वहेतुता; केशवे भक्तिप्राप्ये श्रीकृष्णे विश्वासविशेषस्यानुभववलितविश्वासस्य त्वङ्गम्; श्रद्धाविश्वासयोः पूर्व्वोत्तरावस्थाभ्यां भेदोऽपि ज्ञेयः॥ १९१॥

### अनुवाद

पहले श्रीकृष्ण भक्ति में अधिकार का हेतु श्रद्धा को कहा गया है; अब श्रद्धा और विश्वास शब्द एक ही अर्थ का प्रकाशक होने पर श्रद्धा को कैसे विश्वास का अङ्ग कहा गया है? इसके लिये कहते

हैं—भक्ति में श्रद्धा मात्र का ही अधिकार हेतुता है। किन्तु वह श्रद्धा केशव अर्थात् भक्ति प्राप्य श्रीकृष्ण में विश्वास विशेष अनुभव का अर्थात् अनुभव युक्त विश्वास का अङ्गत्व है। श्रद्धा एवं विश्वास का भेद पूर्व अवस्था एवं उत्तर अवस्था मानकर है, इस प्रकार जानना चाहिये॥ १९१॥

### भक्तिसार-प्रदर्शिनी

श्रद्धामात्रस्येति— यद्यपि श्रद्धाविश्वासयोरेकपर्य्यायत्वमेव, तथापि तत्पूर्वोत्तरावस्थयोस्तत्तच्छब्दप्रयोगप्राचुर्यमिति पृथक् शब्दप्रयोगः॥ १९१॥

### अनुवाद

यद्यपि श्रद्धा और विश्वास पर्यायवाची हैं तथापि श्रद्धा का पूर्वावस्था में एवं विश्वास का उत्तरावस्था में प्रचुर प्रयोग देखा जाता है, अतः पृथक् शब्दों का प्रयोग हुआ है॥ १९१॥

**द्वितीयं, यथा अगस्त्यसंहितायाम्—**

**परिचर्य्यापराः केचित्प्रासादेषु च शेरते।**
**मनुष्यमिव तं द्रष्टुं व्यवहर्तुञ्च बन्धुवत्॥ इति।　　(१९२)**

### अनुवाद

द्वितीय प्रकार का सख्य अर्थात् मित्रवृत्ति—

जैसाकि अगस्तसंहिता में कहा गया है—

भगवान् को मनुष्य के तरह दर्शन करने के लिए तथा बन्धु के तरह मित्र बुद्धि से व्यवहार करने के लिए परिचर्या परायण कुछ व्यक्ति भगवान् के भवन में शयन करते हैं॥ १९२॥

**रागानुगाङ्गतास्य स्याद्विधिमार्गानपेक्षणात्।**
**मार्गद्वयेन चैतेन साध्या सख्यरतिर्मता॥　　(१९३)**

### अनुवाद

विधिमार्ग की अपेक्षा न होने के कारण यह मित्रवृत्ति रागानुगा का अङ्ग है। वैधी एवं रागानुगा के साधन के साध्य भक्ति को सख्य रति कहते हैं॥१९३॥

### दुर्गमसङ्गमनी

तदेवं यद्यपि पूर्वमुदाहरणं वक्ष्यमाणरागानुगाङ्गत्वमेव प्रविशति, तथाप्येतदनुसारेण वैध्यङ्गोदाहरणमपि द्रष्टव्यमित्यभिप्रायेणाह— रागानुगाङ्गतेति। सख्यरतिर्बन्धुभावरतिरित्यर्थः॥ १९३॥

### अनुवाद

यद्यपि पूर्व का उदाहरण आगे वर्णित रागानुगा भक्ति के अङ्गों में ही प्रविष्ट होता है तथापि इसके अनुसार वैधी भक्ति के अङ्ग का उदाहरण भी द्रष्टव्य है, इसके लिये कहते हैं— रागानुगाङ्गतेति। सख्यरति का अर्थ है बन्धुभाव रति॥ १९३॥

### अर्थरत्नाल्प-दीपिका

मार्गद्वयेन चैतेनेति। अयं भावः (भ.र.सि.१/२/२९२)–

"तत्तद्भावादि-माधुर्य्ये श्रुते धीर्यदपेक्षते।
नात्र शास्त्रं न युक्तिञ्च तल्लोभोत्पत्तिलक्षणम्॥" इति लक्षणेन लोभेन कृतस्यास्याङ्गस्य रागानुगाङ्गता स्यात्; शास्त्रस्य शासनेनैव कृतस्य तु वैध्यङ्गता स्यात्। विधिमार्गानपेक्षणस्त्वस्य स्वरूपमेवेति॥ १९३॥

### अनुवाद

रागानुगा एवं वैधी मार्गद्वय के साध्य भक्ति को सख्य रति कहते हैं। इसका अभिप्राय इस प्रकार है–

"ब्रजवासियों के भावादि के माधुर्य का श्रवण होने पर उन भावादि को प्राप्त करने के लिये यदि शास्त्र एवं युक्ति की अपेक्षा नहीं होती है तो यह लोभोत्पत्ति का लक्षण होता है।" भ. र. सि. १/२/२९२ में वर्णित इस लोभ के लक्षण द्वारा कृत होने पर इसकी रागानुगाङ्गता सिद्ध होती है। शास्त्र के शासन से कृत होने पर यह वैधी का अङ्ग कहलाता है॥ १९३॥

### भक्तिसार-प्रदर्शिनी

अस्य मित्रवृत्तिरूपसख्यस्य। यद्यपि विधिमार्गानपेक्षत्वेन पूर्वपूर्वोक्तसर्वेषामपि रागानुगाङ्गत्वमस्त्येव, तथापि मित्रवृत्तिरूपसख्यस्य विशिष्यात्र कथनन्तु रागमार्गे प्राधान्यद्योतनायेति ज्ञेयम्। एतेन वैधरागमार्गद्वयेन साधनीभूतसख्यभक्तेः साध्या सख्यरतिर्मता॥ १९३॥

### अनुवाद

अस्य अर्थात् मित्रवृत्तिरूप सख्य का। यद्यपि विधिमार्ग की अपेक्षा न होने पर पूर्वोक्त समस्त भक्त्यङ्गों का रागानुगाङ्गत्व होता है तथापि यहाँ पर मित्रवृत्तिरूप सख्य का विशेष कथन इसकी रागमार्ग में प्रवेश करने में प्रधानता के कारण किया है। वैधी एवं राग मार्ग द्वय के द्वारा साधनीभूत सख्य भक्ति का साध्य है– सख्यरति॥ १९३॥

**अथ आत्मनिवेदनं (४९), यथा एकादशे (भा. ११/२९/३४)–**

**मर्त्यो यदा त्यक्तसमस्तकर्म्मा निवेदितात्मा विचिकीर्षितो मे।**
**तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै॥ इति। (१९४)**

### अनुवाद

आत्मनिवेदन (४९), एकादश स्कन्ध में कहा गया है–

जिस समय मनुष्य समस्त कर्मों का परित्याग करके मुझे आत्म समर्पण कर देता है, उस समय वह मेरा विशेष माननीय हो जाता है। और मैं उसके जीवत्व से छुड़ाकर अमृत स्वरूप की प्राप्ति करा देता हूँ, और वह मुझको प्राप्तकर मेरा स्वरूप हो जाता है॥ १९४॥

## दुर्गमसङ्गमनी

मर्त्त्य इति। यतो निवेदितात्मा अतस्त्यक्तं समस्तमैहिकामुष्मिकं कर्म आत्मात्मीयपोषणादिरूपं येन सः। तर्हि मे मया विशिष्टः कर्त्तुमिष्टोभवति। अमृतत्वमिति— मृत्युपरम्परामतिक्रामन्नित्यर्थः। मया सह मत्साम्येनात्मभूयाय कल्पते, स्वरूपावस्थितिं मत्सार्ष्टिलक्षणां मुक्तिप्राप्नोतीत्यर्थः॥ १९४॥

## अनुवाद

क्योंकि भगवद् निवेदितात्मा है, अतः इस जगत् के लिए एवं परजगत के लिए यावतीय कर्म को त्याग करके अर्थात् आत्मा आत्मीय को पोषण करने वाले कर्म को परित्याग करके मुझ भगवान् में जब आत्म समर्पण करता है। उस समय मैं उसके लिए विशेष कुछ करना चाहता हूँ।

वह अमृतत्त्व को प्राप्त कर लेता है, अर्थात् मृत्यु परम्परा को अतिक्रम कर लेता है। मेरे साथ साम्य लक्षण मुक्ति को प्राप्त कर लेता है— अर्थात् स्वरूप में अवस्थान करता है, सार्ष्टि लक्षणा मुक्ति को प्राप्त करता है॥ १९४॥

## अर्थरत्नाल्प-दीपिका

मर्त्य इति; निवेदितात्मत्वात्त्यक्तानि समस्तविकर्म्माण्यात्मात्मीयपोषणोद्यमादिरूपाणि येन स तथा; अमृतत्वं मर्त्यधर्म्मरहितत्वम्; मया हेतुनात्मभूयाय मत्साम्याय कल्पते योग्यो भवति— यथोचितमद्‌गुणाश्च तत्राविर्भवन्तीत्यर्थः॥ १९४॥

## अनुवाद

आत्म निवेदन करता है अर्थात् समस्त विकर्म को परित्याग करता है, अर्थात् आत्मा-आत्मीय पोषणादि चेष्टादि का परित्याग करता है। उस समय वह अमृतत्व को प्राप्त होता है अर्थात् मरणशील रूप धर्म को परित्याग करता है, मर्त्त्य धर्म रहित हो जाता है।

मेरे द्वारा वह मेरे समान होने के योग्य होता है अर्थात् यथोचित मेरे गुण उसमें आविर्भूत हो जाते हैं॥ १९४॥

## भक्तिसार-प्रदर्शिनी

मर्त्त्य इत्यस्य समम्। यतो निवेदितात्मा अतस्त्यक्तम् समस्तमैहिकामुष्मिकं कर्म आत्मात्मीयपोषणादिरूपं येन सः। तर्हि मे मया विशिष्टः सर्वोत्कृष्टः कर्त्तुमिष्टोभवति। अमृतत्वमिति— मृत्युपरम्परामतिक्रामन्नित्यर्थः। मया सह मत्साम्येनात्मभूयाय कल्पते, स्वरूपावस्थितिं प्राप्नोति मत्सार्ष्टिलक्षणमुक्तिं प्राप्नोतीत्यर्थः॥ १९४॥

## अनुवाद

क्योंकि भगवद् निवेदितात्मा है, अतः इस जगत् के लिए एवं परजगत के लिए यावतीय कर्म को त्याग करके अर्थात् आत्मा आत्मीय को पोषण करने वाले कर्म को परित्याग करके मुझ भगवान् में जब आत्म समर्पण करता है। उस समय मैं उसके लिए विशेष कुछ करना चाहता हूँ।

वह अमृतत्त्व को प्राप्त कर लेता है, अर्थात् मृत्यु परम्परा को अतिक्रम कर लेता है। मेरे साथ साम्य लक्षण मुक्ति को प्राप्त कर लेता है— अर्थात् स्वरूप में अवस्थान करता है, सार्ष्टि लक्षणा मुक्ति को प्राप्त करता है॥ १९४॥

**अर्थो द्विधात्मशब्दस्य पण्डितैरुपपाद्यते।**
**देह्यहन्तास्पदः कैश्चिद्देहं कैश्चिन्ममत्वभाक्॥ (१९५)**

### अनुवाद

पण्डितगण आत्म शब्द का दो प्रकार अर्थ स्वीकार करते हैं। कुछ पण्डित अहंतास्पद देही जीव को मानते हैं। कुछ पण्डित ममतास्पद शरीर को आत्मा मानते हैं ॥१९५॥

### दुर्गमसङ्गमनी

देहः कैश्चित् इत्यनुकल्प एव॥ १९५॥

### अनुवाद

गौण मत के कुछ व्यक्ति देह को आत्मा मानते हैं॥ १९५॥

### भक्तिसार-प्रदर्शिनी

अहन्तास्पदं देही जीवः॥ १९५॥

### अनुवाद

अहन्तास्पद देही जीव को आत्मा मानते हैं॥ १९५॥

**अत्र देही, यथा यामुनाचार्यस्तोत्रे—**

**वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः।**
**तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः॥ (१९६)**

### अनुवाद

यामुनाचार्य रचित स्तोत्र से देही समर्पण का उदाहरण प्रस्तुत करते हैं—

मनुष्य आदि शरीर में स्वरूपतः जहाँ पर ही अवस्थान क्यों न हो, अथवा गुणों के कारण कोई भी रूप हो, हे भगवन्! आज ही तुम्हारे चरण कमलों में मैंने अपने को समर्पण कर दिया॥ १९६॥

### दुर्गमसङ्गमनी

योऽपि कोऽपीति वादिभेदात्स्वरूपतोऽथवा गुणतो यथातथाविधो देवमनुष्यादिरूपः असानि भवानि— कामचारे लोट्। तदयमिति स चासावयञ्चेति विग्रहात् सोऽयमित्यर्थः॥ १९६॥

### अनुवाद

वादि के भेद से स्वरूप से अथवा गुण से देव मनुष्यादि जो कुछ मैं हूँ, हे भगवन्! मैं उसको आपके चरणारविन्द में आज ही समर्पण कर रहा हूँ। यहाँ पर असानि में कामाचारे लोट् से प्रत्यय हुआ है॥ १९६॥

### अर्थरत्नाल्प-दीपिका

योऽपि कोऽपीति वादिभेदात् स्वरूपतो, गुणतो यथातथाविधो देवमनुष्यादिरूपो वा असानि भवानि— 'कामाचारे लोट्'; तदयमिति स चासौ अयञ्चेति विग्रहात् सोऽयमित्र्थः॥ १९६॥

### अनुवाद

वादि के भेद से स्वरूप से अथवा गुण से देव मनुष्यादि जो कुछ मैं हूँ, हे भगवन्! मैं उसको आपके चरणारविन्द में आज ही समर्पण कर रहा हूँ। यहाँ पर असानि में कामाचारे लोट् से प्रत्यय हुआ है॥ १९६॥

### भक्तिसार-प्रदर्शिनी

वपुरादिषु मनुष्यादिषु गुणतो योऽपि कोऽपि वा पशुः पक्षी वा तत्रापि यथातथाविधोऽङ्गादिहीनो वा असानि भवानि, तदयमिति स चासौ अयञ्चेति विग्रहात् सोऽयम् अहन्तास्पदं मया समर्पितः॥ १९६॥

### अनुवाद

गुणों के कारण मैं मनुष्यादि पशु-पक्षी रूप में जो भी जन्म प्राप्त करूँ, एवं उनमें भी अंगादि हीन जो भी बनूँ, मैं आज ही अहन्तास्पद अपने को आपके चरणकमलों में समर्पित करता हूँ॥ १९६॥

**देहो, यथा भक्तिविवेके—**

**चिन्तां कुर्यान्न रक्षायै विक्रीतस्य यथा पशोः।**
**तथार्पयन् हरौ देहं विरमेदस्य रक्षणात्॥** (१९७)

### अनुवाद

भक्ति विवेक ग्रन्थ में देह समर्पण का उदाहरण इस प्रकार है—

बिके हुए पशु की रक्षा के लिए पशु का पूर्व स्वामी जिस प्रकार चिन्ता नहीं करता है, उसी प्रकार हरि को देह समर्पण करने के बाद उसकी रक्षा के लिए चिन्ता छोड़ देना चाहिये॥ १९७॥

**दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने।**
**केषाञ्चिदेव धीराणां लभेते साधनार्हताम्॥** (१९८)

### अनुवाद

सख्य एवं आत्म निवेदन दुष्कर होने के कारण विरल हैं। कोई-कोई धीर व्यक्ति ही इन दोनों अंगों के साधन की योग्यता लाभ करते हैं॥ १९८॥

### दुर्गमसङ्गमनी

दुष्करत्वेनेत्यत्रात्मनिवेदनस्य केवलस्य दुष्करत्वेन वैरल्यं, न तु महिमाधिक्येन भावशून्यत्वात्, सख्यस्य तु दुष्करत्वेन महिमाधिक्येन च वैरल्यं, भावोत्तमरूपत्वात्। यदि च भावमिश्रमात्मनिवेदनं

भवति, तदा तु सुतरां महिमाधिक्येनापि विरलं स्यात्। तत्र केवलमात्मनिवेदनं दानसमये श्रीबलिराजे दृश्यते। शरणापत्तिः खलु रक्षितृत्वेन वरणं, तदिदन्तु स्वात्मनस्तदायत्ततासम्पादनमिति भेदः, भावमिश्रेषु दास्येनात्मनिवेदनं श्रीमदम्बरीषे। तदुक्तं (भा. ९/४/१८)– "स वै मनः कृष्णपदारविन्दयोरि" त्यारभ्य (भा. ९/४/२०)– "कामञ्च दास्ये न तु कामकाम्यये" त्यन्तेन। तदेवोक्तं श्रीभगवतैकादशे "दास्येनात्मनिवेदनमि"ति। तथा प्रेयसीभावेन (भा. १०/५२/३९) श्रीरुक्मिणीदेव्यां, यथोक्तं तत्रैव-

"तन्मे भवान् खलु वृतः पतिरङ्गजायामात्मार्पितश्च भवतोऽत्र विभो! विधेही"ति।

एवं सख्यादीनामपीति ज्ञेयम्॥ १९८॥

## अनुवाद

आत्म निवेदन केवल दुष्कर होने के कारण विरल है, महिमा के आधिक्य के कारण नहीं, कारण इसमें भाव नहीं है। किन्तु सख्य दुष्कर होने एवं महिमा अधिक होने के कारण विरल है, क्योंकि यहाँ उत्तम भावरूप है। भावमिश्र आत्मनिवेदन यदि होता है तो वह सुतरां महिमा के आधिक्य होने पर भी विरल होगा।

केवल आत्मनिवेदन दान के समय श्री बलि राजा में देखने में आता है। रक्षक रूप में वरण करने का नाम–शरणापत्ति है। अपने को भगवान् के अधीन मानना आत्मनिवेदन है। यही दोनों में भेद है।

भावमिश्र में दास्य के द्वारा आत्म निवेदन श्री अम्बरीष में दिखाई देता है। श्रीमद्भागवत के ९/४/१८-२० में उक्त है–

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते॥
पादौ हरेः क्षेत्र पदानुसर्पणे, शिरो हृषीकेशपदाभिवन्दने।
कामञ्च दास्ये नतु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः॥

उन्होंने अपने मन को श्रीकृष्ण के चरणारविन्द युगल में, वाणी को भगवद् गुणानुवर्णन में, हाथों को श्रीहरिमन्दिर के मार्जन व सेंचन में और अपने कानों की भगवान् अच्युत की मङ्गलमयी कथा के श्रवण में लगा रखा था।

उन्होंने अपने नेत्र मुकुन्द मूर्त्ति एवं मन्दिरों के दर्शनों में, अङ्ग-सङ्ग भगवद् भक्तों के शरीर स्पर्श में, नासिका उनके चरण कमलों पर चढ़ी श्रीमती तुलसी के दिव्य गन्ध में, और रसना को भगवान् के प्रति अर्पित नैवेद्य में संलग्न कर दिया था।

अम्बरीष के पैर भगवान् के क्षेत्र आदि की पैदल यात्रा करने में ही लगे रहते, और वे सिर से भगवान् श्रीकृष्ण के चरण कमलों की वन्दना किया करते। राजा अम्बरीष ने माला, चन्दन आदि भोग सामग्री को भगवान् की सेवा में समर्पित कर दिया था, भोगने की इच्छा से नहीं बल्कि इसलिए कि उन्हें वह भगवत् प्रेम प्राप्त हो जो पवित्र कीर्त्ति भगवान् के निज जनों में ही निवास करता है।

एकादश स्कन्ध में श्री भगवान् ने कहा है— 'दास्य से आत्म निवेदन करना।' इसी प्रकार प्रेयसी भाव से आत्मनिवेदन का उदाहरण रुक्मिणी देवी हैं। श्री भागवत के १०/५२/३९ में श्री रुक्मिणी देवी ने कहा है—

तन्मे भवान् खलु वृतः पतिरङ्गजायामात्मार्पितश्च भवतोऽत्र विभो विधेहि।

मैंने आपको पति रूप से वरण किया है। मैं आपको आत्मसमर्पण कर चुकी हूँ। आप यहाँ पधारकर मुझे अपनी पत्नी के रूप में स्वीकार कीजिये।

इसी प्रकार सख्यादि को भी जानना होगा॥ १९८॥

## अर्थरत्नाल्प-दीपिका

दुष्करत्वेनेत्यत्र सख्यस्य विध्युल्लङ्घनत्वेनात्मनिवेदनस्य क्षुत्पिपासासहनादितया विरलत्वम्। धीराणां प्रौढ़श्रद्धावताम्॥ १९८॥

## अनुवाद

विधि का उल्लङ्घन होने के कारण सख्य के साधक विरल होते हैं तथा भूख-प्यास आदि को सहन करना पड़ता है, इसलिए आत्मनिवेदन के साधक विरल होते हैं। यहाँ धीर शब्द का अर्थ है— प्रौढ़ श्रद्धा से युक्त॥ १९८॥

## भक्तिसार-प्रदर्शिनी

दुष्करत्वेनेत्यत्रात्मनिवेदनस्य केवलदुष्करत्वेनैव वैरल्यं, न तु महिमाधिक्येन भावशून्यत्वात्, सख्यस्य दुष्करत्वेन वैरल्यं भावोत्तमरूपत्वात् महिमाधिक्येन च । यदि च कृष्णस्य सेवार्थं तस्मै अर्पितमिति भावपूर्वकं दीयते, तदा तु सुतरां महिमाधिक्येनापि विरलं स्यात्। तत्र केवलमात्मनिवेदनं दानसमये श्रीबलिराजे दृश्यते। शरणापत्तिः खलु रक्षितृत्वेन वरणम्। तदिदं त्वात्मना तदीयतासम्पादनमिति भेदः। भावमिश्रं दास्येनात्मनिवेदनं श्रीमदम्बरीषेणोक्तं (भा. ९/४/१८)— "स वै मनः कृष्णपदारविन्दयोरि" त्यारभ्य (भा. ९/४/२०)— "कामञ्च दास्ये न तु कामकाम्यये" त्याद्यन्तेन। तदेवोक्तं श्रीभागवतैकादशे "दास्येनात्मनिवेदनमि"ति। तथा प्रेयसीभावेन (भा. १०/५२/३९) श्रीरुक्मिणीदेव्यां, यथोक्तं तयैव- "तन्मे भवान् खलु वृतमित्यादीति"। एवं सख्यादिनामपि ज्ञेयम॥ १९८॥

## अनुवाद

आत्म निवेदन केवल दुष्कर होने के कारण विरल है, महिमा के आधिक्य के कारण नहीं, कारण इसमें भाव नहीं है। किन्तु सख्य दुष्कर होने एवं महिमा अधिक होने के कारण विरल है, यहाँ उत्तम भाव है। यदि कृष्ण की सेवा के लिये कृष्ण को अर्पण कर दिया, इस प्रकार भाव पूर्वक देते हैं तो महिमा के आधिक्य होने के कारण यह भी विरल होगा।

केवल आत्मनिवेदन दान के समय श्री बलि राजा में देखने में आता है। रक्षक रूप में वरण करने का नाम—शरणापत्ति है। अपने को भगवान् के अधीन मानना आत्मनिवेदन है। यही दोनों में भेद है।

भावमिश्र में दास्य के द्वारा आत्म निवेदन श्रीअम्बरीष में दिखाई देता है। श्रीमद्‌भागवत के ९/४/२० में उक्त है–

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्‌भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते॥
पादौ हरेः क्षेत्र पदानुसर्पणे, शिरो हृषीकेशपदाभिवन्दने।
कामञ्च दास्ये नतु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः॥

अम्बरीष महाराज श्रीकृष्ण चरण युगल में मन को अर्पण किये थे अर्थात् श्रीकृष्ण के सेवादि कार्य्य सम्पादन हेतु सङ्कल्प किये थे। वाक्य समूह को श्रीकृष्ण गुणानुवर्णन में नियुक्त किये थे। हस्तद्वय को श्रीहरि मन्दिर मार्जनादि कार्य्य में रत किये थे। श्रुति अर्थात् श्रवण इन्द्रिय को श्रीविष्णु की पवित्र कथा का श्रवण में नियुक्त किये थे। भक्त गात्र स्पर्श हेतु अङ्ग को नियुक्त किये थे। एवं रसना को महाप्रसाद आस्वादन में रत किये थे। चरण युगल को श्रीहरिक्षेत्र गमन में, मस्तक को हृषीकेश श्रीकृष्ण के चरण वन्दन में एवं काम को अर्थात् सङ्कल्प को भगवत् दास्य लाभ हेतु समर्पण किये थे। किन्तु विषय भोग सम्पादन हेतु कभी सङ्कल्प नहीं किये थे। बल्कि इसलिए कि उन्हें वह भगवत् प्रेम प्राप्त हो जो पवित्र कीर्त्ति भगवान् के निज जनों में ही निवास करता है।

एकादश स्कन्ध में श्री भगवान् ने कहा है– 'दास्य से आत्म निवेदन करना।' इसी प्रकार प्रेयसी भाव से आत्मनिवेदन का उदाहरण रुक्मिणी देवी हैं। श्री भागवत के १०/५२/३९ में श्री रुक्मिणी देवी ने कहा है–

तन्मे भवान् खलु वृतः पतिरङ्गजायामात्मार्पितश्च भवतोऽत्र विभो विधेहि।

मैंने आपको पति रूप से वरण किया है। मैं आपको आत्मसमर्पण कर चुकी हूँ। आप यहाँ पधारकर मुझे अपनी पत्नी के रूप में स्वीकार कीजिये।

इसी प्रकार सख्यादि को भी जानना होगा॥ १९८॥

**अथ निजप्रियोपहरणम् (५०), यथा एकादशे (भा. ११/११/४१)–**

**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः।**
**तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते॥ (१९९)**

**अनुवाद**

निज प्रिय वस्तु का प्रदान करना (५०), श्रीमद्‌भागवत के एकादश स्कन्ध में (११/११/४१) उक्त है–

लोक में जो जो वस्तु इष्टतम् हैं, मुझको प्रिय हैं तथा मेरे भक्त को भी अति प्रिय हैं उन उन द्रव्यों का निवेदन मुझको करें, ऐसा होने पर यह निवेदन अनन्त रूप से कल्पित होता है॥ १९९॥

### दुर्गमसङ्गमनी

यद्यदिति। चकारान्मम प्रियञ्च ॥ १९९ ॥

### अनुवाद

चकार से मेरा प्रिय जानना होगा। अर्थात् जो जो वस्तु अपना प्रिय हो एवं मेरा प्रिय हो, उस उस वस्तु को निवेदन मुझको करे ॥१९९ ॥

### अर्थरत्नाल्प-दीपिका

यद् यदिति चकारात् मम प्रियं, गुञ्जादि शिखिपिञ्छादिकञ्च ॥ १९९ ॥

### अनुवाद

श्लोकोक्त 'यच्चाति' चकार का अभिप्राय है— मेरा प्रिय। जो जो द्रव्य मेरे प्रिय एवं अपना प्रिय है उसका समर्पण मुझको करे। जैसे गुञ्जादि शिखि पिञ्छादि मेरे प्रिय हैं। उन सबका समर्पण मुझे करे॥ १९९ ॥

### भक्तिसार-प्रदर्शिनी

यद् यदिति चकारात् मम प्रियञ्च यद् वस्तु तत् आनन्त्याय कल्पते अनन्तं भवति ॥ १९९ ॥

### अनुवाद

जो जो वस्तु अपना प्रिय, एवं मेरा प्रिय है, उन उनको मुझे देने से वह अनन्त हो जाता है ॥ १९९ ॥

**अथ तदर्थेऽखिलचेष्टितम् (५१), यथा पञ्चरात्रे—**

**लौकिकी वैदिकी वापि या क्रिया क्रियते मुने!।**
**हरिसेवानुकूलैव सा कार्या भक्तिमिच्छता ॥ इति।　　(२००)**

### अनुवाद

श्रीहरि के लिए समस्त चेष्टा (५१)— पञ्चरात्र में कहा गया है—

हे मुनि नारद! लौकिक, वैदिक जो कुछ क्रिया मनुष्य समाज में प्रचलित हैं, भक्ति प्राप्त करना चाहे तो उन सबका आचरण श्रीहरि के सेवा के अनुकूल रूप से करे ॥ २०० ॥

### अर्थरत्नाल्प-दीपिका

हरिसेवानुकूलैव, न तु सेवातोऽन्यपरा लौकिकी वैदिकी क्रियापि हरिसेवापरा कार्य्या ॥ २०० ॥

### अनुवाद

जो कुछ भी करे, श्रीहरि सेवा के अनुकूल ही करे। सेवा करके अन्य कुछ स्वार्थ न करे। लौकिक, वैदिक समस्त क्रिया भी हरि की सेवा के निमित्त ही करे ॥ २०० ॥

**अथ शरणापत्तिः (५२), यथा हरिभक्तिविलासे—**

**तवास्मीति वदन् वाचा तथैव मनसा विदन्।**
**तत्स्थानमाश्रितस्तन्वा मोदते शरणागतः ॥　　(२०१)**

### अनुवाद

शरणापत्तिः (५२)—

हरि भक्ति विलास में शरणापत्ति का वर्णन इस प्रकार है— जो मुख से कहता है कि मैं तुम्हारा हूँ, मन में भी उसी प्रकार अभिमान रखता है एवं शरीर से भगवत् स्थान का आश्रय करता है, और इस प्रकार आनन्द का अनुभव करता है; वही शरणागत है॥ २०१ ॥

**श्रीनारसिंहे च—**

**त्वां प्रपन्नोऽस्मि शरणं देवदेव! जनार्दन!।**
**इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम्॥ (२०२)**

### अनुवाद

श्रीनरसिंह पुराण में भी कहा गया है—

हे देव देव! जनार्दन! मैं तुम्हारा प्रपन्न हो गया, अर्थात् तुमको ही मेरा रक्षक रूप में वरण किया है, ऐसा कहकर जो व्यक्ति मेरा आश्रय ग्रहण करता है, उसको मैं क्लेश से उद्धार करता हूँ॥२०२॥

### दुर्गमसङ्गमनी

शरणं प्रपन्नोऽस्मि रक्षितृत्वेन वृतवानस्मि। शरणं तदाश्रयं प्राप्तः। शरणशब्देन हि तद्द्वयमेवोच्यत इति॥ २०२॥

### अनुवाद

शरण में हूँ अर्थात् प्रपन्न हूँ, रक्षक रूप में वरण करता हूँ। शरण में अर्थात् भगवान् को आश्रय रूप में प्राप्त करना। इस प्रकार शरण शब्द से रक्षक एवं आश्रय रूप दो अर्थ को जानना होगा॥ २०२॥

### अर्थरत्नाल्प-दीपिका

शरणं प्रपन्नोऽस्मि रक्षितृत्वेन वृतवानस्मि। शरणमाश्रयं प्राप्तः। शरणशब्देन तद्द्वयमेवोच्यते॥ २०२॥

### अनुवाद

शरण में हूँ अर्थात् प्रपन्न हूँ, रक्षक रूप में वरण करता हूँ। शरण में अर्थात् भगवान् को आश्रय रूप में प्राप्त करना। इस प्रकार शरण शब्द से रक्षक एवं आश्रय रूप दो अर्थ को जानना होगा॥ २०२॥

**अथ तदीयानां सेवनम् (५३), तुलस्याः, यथा स्कान्दे—**

**या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुःपावनी,**
**रोगाणामभिवन्दिता निरसनी सिक्ताऽन्तकत्रासिनी।**
**प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता,**
**न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः॥ (२०३)**

### अनुवाद

तदीय (भगवत् सम्बन्धी) वस्तुओं का सेवन; जैसे तुलसी का सेवन, यथा स्कन्द पुराण में उक्त है—

दर्शन करने से जो निखिल पापों का नाश करती हैं, स्पर्श से दुर्जाति आदि का नाश कर पवित्र करती हैं, प्रणाम करने से रोगादि निवारण करती हैं, अभिषेचन करने से यमभय नाश करती हैं, रोपण करने से भगवान् श्रीकृष्ण के चरणों में मन का अभिनिवेश विधान करती हैं एवं श्रीकृष्ण के चरणों में अर्पण करने से विमुक्ति फल अर्थात् प्रेम भक्ति प्रदान करती हैं, मैं इस प्रकार की तुलसी को प्रणाम करता हूँ॥ २०३॥

## दुर्गमसङ्गमनी

या दृष्टेति। वपुःपावनी कुजन्मत्वादिशोधनी, रोगाणां क्लेशमात्राणां, प्रत्यासत्तिर्मनस आसङ्गः, विमुक्तिर्विशिष्टा मुक्तिः सा प्रेमभक्तिरित्यर्थः॥ २०३॥

## अनुवाद

तुलसी स्पर्श करने से शरीर को पवित्र करती हैं अर्थात् कुजन्मत्व आदि का शोधन करती हैं। रोग अर्थात् क्लेश मात्र का नाश करती हैं। रोपण करने से श्रीकृष्ण के चरणों में प्रत्यासत्ति अर्थात् मन की आसक्ति विधान करती हैं। श्रीकृष्ण के चरणों में अर्पण करने से विशिष्ट मुक्ति अर्थात् प्रेम भक्ति देती हैं॥ २०३॥

## अर्थरत्नाल्प-दीपिका

वपुःपावनी दुर्ज्जात्यादिशोधनी; प्रत्यासत्तिर्मनस आसङ्गः, विमुक्तिः सालोक्यादिः॥ २०३॥

## अनुवाद

वपुः पावनी अर्थात् तुलसी दुर्जाति आदि अपवित्र कारक दोष को शोधन करती है। प्रत्यासत्तिः अर्थात् मन की आसक्ति श्रीकृष्ण चरणों में कराती है। विमुत्तिः अर्थात् सालोक्यादि मुक्ति भी प्रदान करती है॥ २०३॥

## भक्तिसार-प्रदर्शिनी

या तुलसी दृष्टा सती निखिलपापशमनी भवति। वपुःपावनी कुजन्मत्वादिशोधनी। रोगाणां क्लेशमात्राणाम्। प्रत्यासत्तिर्मनस आसङ्गः। विमुक्तिर्विशिष्टा मुक्तिः प्रेमभक्तिरित्यर्थः॥ २०३॥

## अनुवाद

तुलसी दर्शन से समस्त पापों का नाश होता है। स्पर्श करने से कुजन्म से अपवित्र शरीर का शोधन होता है। वन्दन करने से समस्त रोग अर्थात् क्लेशमात्र नष्ट होते हैं। रोपण करने से श्रीकृष्ण के चरणों में मन की आसक्ति होती है। श्रीकृष्ण के चरणों में तुलसी अर्पण करने से विशिष्ट मुक्ति अर्थात् प्रेम भक्ति मिलती है॥ २०३॥

**तथा च तत्रैव—**

**दृष्टा स्पृष्टा तथा ध्याता कीर्तिता नमिता स्तुता।**
**रोपिता सेविता नित्यं पूजिता तुलसी शुभा॥** (२०४)
**नवधा तुलसीं देवीं ये भजन्ति दिने दिने।**
**युगकोटिसहस्राणि ते वसन्ति हरेर्गृहे॥** (२०५)

### अनुवाद

वहीं पर ही–

नित्य दृष्ट, स्पृष्ट, ध्यात, कीर्त्तित, प्रणमित, स्तुत, रोपित, सेवित और नित्य पूजित तुलसी मङ्गल प्रदान करती है॥ २०४॥

जो व्यक्ति प्रतिदिन नौ प्रकार से तुलसी की सेवा करता है, वह कोटि सहस्र युग श्रीहरि के गृह में वास करता है॥ २०५॥

### भक्तिसार-प्रदर्शिनी

रोपितेति रुह जन्मनि प्रादुर्भावे इत्यस्य णिजन्तरूपम्। तथा च प्रतिदिनं तस्याः पत्रमञ्जर्य्यादिप्रादुर्भावप्रयोजको भविष्यतीति तात्पर्यार्थः, न तु प्रत्यहमुत्पादयिष्यतीत्यर्थः॥ २०४॥

### अनुवाद

संरोपिता-रोपिता, रुह जन्मनि प्रादुर्भावे-इसका णिजन्त रूप है। इसलिए प्रतिदिन तुलसी के पत्र मञ्जरी आदि उत्पन्न हो इस प्रकार कार्य करने से श्रीकृष्ण के चरणों में मन की आसक्ति बढ़ेगी, यही तात्पर्यार्थ है, प्रतिदिन तुलसी उत्पादन करना अर्थ नहीं है॥ २०३॥

**अथ शास्त्रस्य–**

**शास्त्रमत्र समाख्यातं यद्भक्तिप्रतिपादकम्॥** (२०६)

**यथा स्कान्दे–**

**वैष्णवानि तु शास्त्राणि ये श्रृण्वन्ति पठन्ति च।**
**धन्यास्ते मानवा लोके तेषां कृष्णः प्रसीदति॥** (२०७)
**वैष्णवानि तु शास्त्राणि येऽर्चयन्ति गृहे नराः।**
**सर्वपापविनिर्मुक्ता भवन्ति सुरवन्दिताः॥** (२०८)

### अनुवाद

शास्त्र सेवा का वर्णन इस प्रकार है–

भक्ति प्रतिपादक ग्रन्थ को ही यहाँ शास्त्र शब्द से कहा गया है॥ २०६॥

स्कन्द पुराण में उक्त है–

वैष्णव शास्त्र का पठन व श्रवण जो मानव करते रहते हैं, वे सब मानव, जगत् में धन्य हैं, उन सबों के प्रति श्रीकृष्ण प्रसन्न होते हैं॥ २०७॥

घर में वैष्णव शास्त्रों का अर्चन जो सब मानव करते रहते हैं, वे लोक समस्त पापों से मुक्त होकर देवताओं के पूज्य होते हैं॥ २०८॥

**तिष्ठते वैष्णवं शास्त्रं लिखितं यस्य मन्दिरे।**
**तत्र नारायणो देवः स्वयं वसति नारद!॥** (२०९)

### अनुवाद

हे नारद! जिसके घर में वैष्णव शास्त्र लिखित होकर रहते हैं वहाँ पर नारायण देव स्वयं निवास करते हैं॥ २०९॥

### भक्तिसार-प्रदर्शिनी

तिष्ठते इति प्रकाशनार्थे आत्मनेपदं, तथा च यस्य मन्दिरे स्वयमेव प्रकाशितं भवतीत्यर्थः॥ २०९॥

### अनुवाद

यहाँ पर तिष्ठते प्रकाशन अर्थ में आत्मनेपद हुआ है। जिसके मन्दिर में वैष्णव शास्त्र लिखित होकर रहते हैं वहाँ पर नारायण देव स्वयं प्रकाशित होते हैं॥ २०९॥

**तथा श्रीभागवते द्वादशे च (भा. १२/१३/१५)—**

**सर्ववेदान्तसारं हि श्रीभागवतमिष्यते।**
**तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्॥ (२१०)**

### अनुवाद

श्रीभागवतपुराण के द्वादश स्कन्ध (१२/१३/१५) में लिखा है—

यह श्रीमद्भागवत समस्त वेदान्तों का सार है। जो इस रस सुधा का पान करके तृप्त हुआ है उसकी किसी और शास्त्र में रति नहीं हो सकती है॥ २१०॥

### अर्थरत्नाल्प-दीपिका

सर्ववेदान्तेति, अन्यत्र अन्यशास्त्रे॥ २१०॥

### अनुवाद

समस्त वेदान्त-उपनिषदों का सार श्रीभागवत है। भागवत रसामृत तृप्त जन की अन्यत्र अर्थात् अन्य शास्त्रों में रति नहीं होती है॥ २१०॥

**अथ श्रीमथुरायाः (५५), यथा आदिवाराहे—**

**मथुराञ्च परित्यज्य योऽन्यत्र कुरुते रतिम्।**
**मूढो भ्रमति संसारे मोहितो मम मायया॥ (२११)**

### अनुवाद

श्रीमथुरा सेवा (५५)—

आदि वराह पुराण में उक्त है—

जो व्यक्ति मथुरा को छोड़कर अन्यत्र अर्थात् अन्य तीर्थ में वास करना चाहता है, वह मूढ़ व्यक्ति मेरी माया से मुग्ध होकर संसार में भ्रमण करता रहता है॥ २११॥

### अर्थरत्नाल्प-दीपिका

अन्यत्र अन्यतीर्थे॥ २११॥

### अनुवाद

जो व्यक्ति मथुरा को छोड़कर अन्यत्र अर्थात् अन्य तीर्थ में वास करना चाहता है, वह मूढ़ व्यक्ति मेरी माया से मुग्ध होकर संसार में भ्रमण करता रहता है॥२११॥

**ब्रह्माण्डे च—**

**त्रैलोक्यवर्त्तितीर्थानां सेवनाद् दुर्लभा हि या।**
**परानन्दमयी सिद्धिर्मथुरास्पर्शमात्रतः॥ इति।** (२१२)

### अनुवाद

ब्रह्माण्ड पुराण में उक्त है—

तीनों लोकों के मध्य में जितने तीर्थ हैं, उन सबों की सेवा करने से भी जो परानन्दमयी प्रेमलक्षणा सिद्धि दुर्लभ होती है, मथुरा का स्पर्श मात्र से ही वह सुलभ होती है॥२१२॥

### दुर्गमसङ्गमनी

परानन्दमयी प्रेमलक्षणा॥ २१२॥

### अनुवाद

परानन्दमयी अर्थात् प्रेमलक्षणा॥२१२॥

### अर्थरत्नाल्प-दीपिका

परानन्दमयी रतिरूपा ॥ २१२॥

### अनुवाद

परानन्दमयी अर्थात् रतिरूपा ॥ २१२॥

### भक्तिसार-प्रदर्शिनी

परानन्दमयी प्रेमलक्षणा॥ २१२॥

### अनुवाद

परानन्दमयी अर्थात् प्रेमलक्षणा॥२१२॥

**श्रुता स्मृता कीर्त्तिता च वाञ्छिता प्रेक्षिता गता।**
**स्पृष्टा श्रिता सेविता च मथुराभीष्टदा नृणाम्।**
**इति ख्यातं पुराणेषु न विस्तारभियोच्यते॥** (२१३)

### अनुवाद

श्रुत, स्मृत, कीर्त्तित, वाञ्छित, दूर से दृष्ट, समीप में गत, स्पृष्ट, निजाश्रय रूप से वरण करना, एवं वहाँ के स्थान संस्कारादि के द्वारा सेवित होने पर मथुरा मनुष्य मात्र को अभीष्ट दान करती रहती है। मथुरा का माहात्म्य पुराणों में विस्तार रूप से वर्णित है, ग्रन्थ विस्तार के भय से यहाँ पर कहा

नहीं गया॥ २१३॥

### दुर्गमसङ्गमनी

प्रेक्षिता दूराद् दृष्टा; गता तत्समीपम् प्राप्ता; श्रिता निजाश्रयत्वेन वृता; सेविता तत्तत्स्थानसंस्कारादिना परिचरिता; अभीष्टदेत्युत्तरोत्तरवैशिष्ट्येन ज्ञेयम्॥ २१३॥

### अनुवाद

दूर से देखने पर, समीप में जाने पर, अपना आश्रय रूप में वरण करने से, स्थान संस्कार आदि से परिचर्या करने पर, उत्तर-उत्तर वैशिष्ट्य से अभीष्ट प्रदान करती है॥ २१३॥

### अर्थरत्नाल्प-दीपिका

प्रेक्षिता दूराद् दृष्टा; गता तत्समीपम् प्राप्ता; श्रिता निजाश्रयत्वेन वृता; सेविता तत्तत्स्थानसंस्कारादिना परिचरिता; अभीष्टदेत्युत्तरोत्तरवैशिष्ट्येन ज्ञेयम्॥ २१३॥

### अनुवाद

दूर से देखने पर, समीप प्राप्त होने पर, अपना आश्रय रूप में वरण करने से, सेविता-तत्तत् स्थानों की संस्कारादि के द्वारा परिचर्या करने पर, उत्तरोत्तर वैशिष्ट से अभीष्ट प्रदान करते हैं॥ २१३॥

### भक्तिसार-प्रदर्शिनी

प्रेक्षिता दूराद् दृष्टा; गता तत्समीपम् प्राप्ता; श्रिता निजाश्रयत्वेन वृता; सेविता तत्तत्स्थानसंस्कारादिना परिचरिता; अभीष्टदेत्युत्तरोत्तरवैशिष्ट्येन ज्ञेयम्॥ २१३॥

### अनुवाद

प्रेक्षिता, दूर से देखने पर, समीप में जाने से, आश्रय रूप में वरण करने से, उस उस स्थानों की साफ सफाई रूप परिचर्या करने पर, उत्तर-उत्तर वैशिष्ट से अभीष्ट दान करती है॥ २१३॥

**अथ वैष्णवानां सेवनं (५६), यथा पाद्मे—**

**आराधनानां सर्वेषां विष्णोराराधनं परम्।**
**तस्मात्परतरं देवि! तदीयानां समर्चनम्॥** (२१४)

### अनुवाद

वैष्णवगणों की सेवा (५६)—

जैसा कि पद्म पुराण में कहा गया है— हे देवि! समस्त देवी-देवताओं आदि की सेवा से भी श्रीविष्णु की आराधना श्रेष्ठ है। उससे भी उनके भक्तजनों की अर्चना श्रेष्ठतर है॥ २१४॥

**तृतीये च (भा. ३/७/१९)—**

**यत्सेवया भगवतः कूटस्थस्य मधुद्विषः।**
**रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः॥** (२१५)

## अनुवाद

श्रीमद्भागवत (३/७/१९) में उक्त है—

भगवद्भक्त की सेवा से तीनों कालों में सत्य भगवान् मधुसूदन के चरण युगल में सर्वदुःख नाशक तीव्र प्रेमोत्सव लाभ होता है॥ २१५॥

## दुर्गमसङ्गमनी

"एकरूपतया तु यः कालव्यापी स कूटस्थ" इत्यमरः। मधुद्विषः पादयो रतिरासो रतेरुल्लासो भवेत्। तीव्रो नितान्तः॥ २१५॥

## अनुवाद

"त्रिकाल में जो एक रूप में रहते हैं, वह कूटस्थ हैं।" ऐसा अमरकोष में कहा गया है। भगवद् भक्तों की सेवा से भगवत् चरणारविन्दों में रति होगी। रति से उल्लास होगा, तीव्र रति होगी॥ २१५॥

## अर्थरत्नाल्प-दीपिका

मधुद्विषः पादयो रतिरासो रतेरुल्लासो भवेत्, तीव्रो दृढ़ः॥ २१५॥

## अनुवाद

भगवद् भक्तों की सेवा से भगवत् चरणारविन्दों में रति होगी। रति से उल्लास होगा, दृढ़ रति होगी॥२१५॥

## भक्तिसार-प्रदर्शिनी

''एकरूपतया तु यः कालव्यापी स कूटस्थ'' इत्यमरः। मधुद्विषः पादयो रतिरासो रतेरुल्लासो भवेत्। तीव्रो नितान्तः॥ २१५॥

## अनुवाद

"त्रिकाल में जो एक रूप में रहते हैं, वह कूटस्थ हैं।" ऐसा अमरकोष में कहा गया है। भगवद् भक्तों की सेवा से भगवत् चरणारविन्दों में रति होगी। रति से उल्लास होगा, तीव्र रति होगी॥ २१५॥

**स्कान्दे च—**

**शङ्खचक्राङ्किततनुः शिरसा मञ्जरीधरः।**
**गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः?॥ (२१६)**

**प्रथमे च (भा. १/१९/३३)—**

**येषां संस्मरणात्पुंसां सद्यः शुध्यन्ति वै गृहाः।**
**किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः?॥ (२१७)**

**आदिपुराणे—**

**ये मे भक्तजनाः पार्थ! न मे भक्ताश्च ते जनाः।**
**मद्भक्तानाञ्च ये भक्ता मम भक्तास्तु ते नराः॥ इति। (२१८)**

**यावन्ति भगवद्भक्तेरङ्गानि कथितानीह।**
**प्रायस्तावन्ति तद्भक्तभक्तेरपि बुधा विदुः॥ (२१९)**

**अनुवाद**

स्कन्दपुराण में वैष्णव महिमा का वर्णन इस प्रकार है—

जिनके शरीर में शङ्ख चक्रादि चिह्न हैं, मस्तक में तुलसी मञ्जरी, एवं शरीर में गोपी चन्दन का तिलक विराजमान है, उन वैष्णव को देखने से पाप क्या रह सकता है? ॥ २१६ ॥

भागवत के प्रथम स्कन्ध (१/१९/३३) में कहा गया है—

आप जैसे महात्माओं के स्मरण मात्र से ही गृहस्थों के घर तत्काल पवित्र हो जाते हैं, फिर दर्शन, स्पर्श, पाद प्रक्षालन और आसन दानादि का सुअवसर मिलने पर तो कहना ही क्या है? ॥ २१७ ॥

आदिपुराण में लिखा है—

श्रीकृष्ण कहते हैं— हे पार्थ! जो मेरा भक्त है, वह मेरा भक्त नहीं है। किन्तु जो मेरे भक्त का भक्त है वही मेरा यथार्थ भक्त है॥ २१८ ॥

यहाँ पर भगवद् भक्ति के जो सब अङ्ग कहे गये हैं, उन सबके मध्य में अधिकांश को ही भगवद् भक्त की भक्ति के अङ्ग रूप से पण्डितगण कहते हैं॥ २१९ ॥

**अथ यथावैभवमहोत्सवो (५७), यथा पाद्मे—**

**यः करोति महीपाल! हरेर्गेहे महोत्सवम्।**
**तस्यापि भवति नित्यं हरिलोके महोत्सवः॥ (२२०)**

यथा वैभव महोत्सव(५७)—

पद्म पुराण में लिखित है— हे महीपाल! जो व्यक्ति श्रीहरि मन्दिर में महोत्सव करता है। हरि लोक में उसका भी नित्य महोत्सव होता रहता है॥ २२० ॥

**भक्तिसार-प्रदर्शिनी**

हरेर्मन्दिरनिमित्तं महोत्सवं यः करोति॥ २२० ॥

**अनुवाद**

हरिमन्दिर के निमित्त जो महोत्सव करता है हरि के धाम में उसका नित्य महोत्सव मनाया जाता है॥ २२० ॥

**अथ ऊर्ज्जादरो (५८) यथा पाद्मे—**

**यथा दामोदरो भक्तवत्सलो विदितो जनैः।**
**तस्यायं तादृशो मासः स्वल्पमप्युरुकारकः॥ (२२१)**

**अनुवाद**

ऊर्ज्जादर (५८) कार्तिक व्रत—

पद्मपुराण में कहा गया है– भगवान् दामोदर जिस प्रकार जनसमाज में भक्तवत्सल नाम से प्रसिद्ध हैं, उनका यह कार्त्तिक मास भी उसी प्रकार थोड़ा करने पर भी ज्यादा फल देने वाला है॥ २२१॥

## दुर्गमसङ्गमनी

यथा दामोदरो जनैर्भक्तवत्सलो विदितस्तद्रूपश्च सन् स्वल्पमप्युरुकारकः ऋणनिर्यातक इव स्वल्पमप्युरु कृत्वा ददातीत्यर्थः। तस्य दामोदरस्यायं मासः कार्त्तिकाख्योऽपि तादृशः सन् स्वल्पमप्युरुकारक इति पूर्ववत्। "अकेनोर्भविष्यदाधमर्ण्ययोरि"ति षष्ठीनिषेधः॥ २२१॥

## अनुवाद

जिस प्रकार दामोदर जनसमाज में भक्तवत्सल रूप में प्रसिद्ध हैं, उसी प्रकार यह कार्त्तिक मास भी अल्प को बहुत करने वाला है। अभिप्राय यह है कि जिस प्रकार ऋण लेने वाला ऋण देने वाले को थोड़ा लेकर ब्याज के साथ ज्यादा करके देता है उसी प्रकार दामोदर का मास कार्तिक भी उन्हीं के समान होकर अल्प को बहुत करने वाला है अर्थात् अल्प साधन के फल में अत्यधिक फल देने वाला है।

यहाँ पर स्वल्पमप्युरुकारकः शब्द में 'अकेनोर्भविष्यदाधमर्ण्ययोः' इस पाणिनि अष्टाध्यायी सूत्र से षष्ठी नहीं हुयी॥ २२१॥

## अर्थरत्नाल्प-दीपिका

यथेति तादृशत्वे हेतुः स्वल्पमित्यादि– स्वल्पमप्युरु करिष्यतीत्यर्थः; अकेणोर्भविष्यदाधमर्ण्ययोः (पा. २/३/७०), अस्यार्थः– भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्, इति भविष्यदकयोगे षष्ठीनिषेधः॥ २२१॥

## अनुवाद

कार्तिक मास की समानता दामोदर से की गयी है। इसके हेतु को स्वल्पमित्यादि से कहते हैं। स्वल्प को भी उरु अर्थात् बहुत करके प्रदान करते हैं। इसमें पाणिनि का सूत्र इस प्रकार है–"भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्", इस प्रकार भविष्यद् अक के योग से षष्ठी नहीं हुआ॥२२१॥

## भक्तिसार-प्रदर्शिनी

यथा दामोदरो भक्तवत्सलो विदितः। भक्तवत्सलः सन् स्वल्पमप्युरुकारकः। ऋणस्य व्याज इति प्रसिद्धनिर्यातक इव स्वल्पमपि वस्तु उरुकृत्वा ददातीत्यर्थः। अत्र कर्मस्थाने षष्ठ्यभाव आर्षः। यद्वा स्वल्पमप्युरुकर्तुं समर्थो भवतीति तुमर्थे णमुल्। तथा तस्य दामोदरस्यायं कार्त्तिकाख्यो मासः भक्तवत्सलः सन् स्वल्पमप्युरुकारक इति पूर्ववत्॥ २२१॥

## अनुवाद

जिस प्रकार दामोदर देव प्रसिद्ध भक्तवत्सल हैं, भक्तवत्सल होकर थोड़े को भी ज्यादा कर देते हैं, उसी प्रकार उनका मास भी थोड़ा करने वाले को ज्यादा करके प्रदान करते हैं। अभिप्राय यह है कि जिस प्रकार ऋण प्राप्त करने वाला व्यक्ति ऋण दाता को व्याज सहित अल्प धन को बहुत करके प्रदान करता

है उसी प्रकार दामोदर का यह कार्त्तिक मास भक्तवत्सल होकर थोड़ा को ज्यादा करके देता है। यहाँ पर कर्म के स्थान में षष्ठी विभक्ति का अभाव आर्ष प्रयोग है। अथवा थोड़ा भी ज्यादा कर सकता है, इस अर्थ में तुम अर्थ में णमुल प्रत्यय हुआ है॥ २२१ ॥

**तत्रापि माथुरायां विशेषो, यथा तत्रैव—**

**भुक्तिं मुक्तिं हरिर्दद्यादर्चितोऽन्यत्र सेविनाम्।**
**भक्तिं तु न ददात्येव यतो वश्यकरी हरेः॥ (२२२)**
**सा त्वञ्जसा हरेर्भक्तिर्लभ्यते कार्त्तिके नरैः।**
**मथुरायां सकृदपि श्रीदामोदरसेवनात्॥ (२२३)**

## अनुवाद

उसमें भी मथुरा में कार्त्तिक व्रत की विशेषता है। जैसाकि पद्मपुराण में कहा गया है— मथुरा को छोड़कर अन्य स्थान में अर्चित होने पर व्यक्तियों को भुक्ति मुक्ति प्रदान करते हैं किन्तु भक्ति नहीं देते हैं। कारण यह हरि को वशीभूत करती है। किन्तु मथुरा में कार्त्तिक मास में एक बार भी श्री दामोदर की पूजा करने से उस पूजा के प्रभाव से अन्य साधन शून्य मानव सहसा सुदुर्लभा हरि भक्ति भी प्राप्त करता है॥ २२२-२२३ ॥

## दुर्गमसङ्गमनी

यतो वश्यकरीति। वश्यकरीत्वमत्र सुखदानेनैव ज्ञेयं, न तु दुःखदानेन। अतो भक्त्यदाने न तदत्र प्रयोजकं, किन्तु तेन लक्षितं परमोत्कृष्टत्वमेव। तथाविधा च सा नायोग्ये सहसा दातुं योग्येति यावदयोग्यता तावद्भगवता न दीयत एव। योग्यता च सर्वान्यस्वहितनिरपेक्षत्वमेव। तस्माद्योग्यतायामेव सत्यां दातव्यत्वेऽपि यदि मथुराकार्त्तिकयोः सङ्गमे पूजनं घटते, तदा योग्यताविरहितेनापि वस्तुप्रभावात् सहसैव प्राप्यते एवेति भावः॥ २२२ ॥

## अनुवाद

भक्ति भगवान् को सुख प्रदान करके ही वशीभूत करती है ऐसा जानना होगा, न कि दुःख प्रदान करके। अतः भक्ति न देने में दुःखदान हेतु नहीं है। किन्तु इससे भक्ति का परम उत्कृष्टत्व ही साधित हुआ है। इस प्रकार परम उत्कृष्ट वस्तु सहसा किसी को देना ठीक नहीं है। योग्य व्यक्ति को ही देना उचित है, जब तक अयोग्यता रहती है, तब तक भगवान् अयोग्य व्यक्ति को भक्ति नहीं देते हैं।

सर्वान्य स्वहितनिरपेक्षत्व ही योग्यता है। इसलिए इस प्रकार योग्यता वर्त्तमान होने पर भक्ति देना है, फिर भी यदि मथुरा एवं कार्त्तिक मास के संगम में श्रीहरि के पूजन का सुअवसर प्राप्त होता है, तब योग्यता न रहने पर भी वस्तु के प्रभाव से सहसा ही भक्ति प्राप्त करते हैं। यही अभिप्राय है॥ २२२-२२३ ॥

## अर्थरत्नाल्प-दीपिका

अन्यत्र सेविनां श्रीमथुराया अन्यत्र देशे श्रीकृष्णे आसक्तिशून्यसाधनसाहस्रवतामित्यर्थः। यतो वश्यकरी हरेरिति— आसक्तिशून्ये वशीभाव उचितो नेति भावः। यदा मथुरायां कर्त्तिके श्रीदामोदरपूजनं

घटेत, तदा तत्प्रभावादेवान्यसाधनशून्यैनरैः सहसा प्राप्यत इति भावः। अन्यदा सेवनात् कार्त्तिके सकृदपीति विशेषः॥ २२२॥

**अनुवाद**

मथुरा को छोड़कर अन्य देश में आसक्ति शून्य हजारों साधन करने पर भोग एवं मोक्ष श्रीहरि प्रदान करते हैं। किन्तु भक्ति नहीं देते, कारण भक्ति श्रीहरि को वशीभूत करती है। आसक्ति शून्य में वशीभूत होना उचित नहीं है। कहने यह अभिप्राय है।

जिस समय कार्तिक मास में मथुरा का संयोग होता है, एवं श्री दामोदर का पूजन करने का सौभाग्य होता है, उस समय उनके प्रभाव से अन्य साधन शून्य होने पर भी मानव सहसा श्रीकृष्ण भक्ति प्राप्त कर लेता है।

अन्य समय सेवन करने से यह सौभाग्य नहीं मिलता है, कार्त्तिक में एक बार सेवन करने पर भक्ति मिल जाती है, ऐसा कार्तिक मास की विशेषता है॥२२२॥

**भक्तिसार-प्रदर्शिनी**

अन्यत्र मथुरातिरिक्तस्थले॥ २२२॥

**अनुवाद**

अन्यत्र अर्थात् मथुरा भिन्न अन्य स्थल॥२२२॥

**अथ श्रीजन्मदिनयात्रा (५९), यथा भविष्योत्तरे—**

> **यस्मिन् दिने प्रसूतेयं देवकी त्वां जनार्दन!।**
> **तद् दिनं ब्रूहि वैकुण्ठ! कुर्मस्ते तत्र चोत्सवम्।**
> **तेन सम्यक् प्रपन्नानां प्रसादं कुरु केशव!॥** (२२४)

**अनुवाद**

श्रीजन्मदिनयात्रा (५९)—

भविष्योत्तर पुराण में उक्त है—हे जनार्दन! हे वैकुण्ठ! जिस दिन आपको देवकी देवी ने जन्म दिया है, उस दिन की कथा आप कहें। हम सब उस दिन में उत्सव करेंगे। हे केशव! उससे आप हम सब शरणागत के प्रति सम्यक् रूप से प्रसन्न होंगे॥ २२४॥

**अथ श्रीमूर्त्तेरङ्घ्रिसेवने प्रीतिः (६०), यथा आदिपुराणे—**

> **मम नामसदाग्राही मम सेवाप्रियः सदा।**
> **भक्तिस्तस्मै प्रदातव्या न च मुक्तिः कदाचन॥** (२२५)

**अनुवाद**

श्री मूर्त्ति की श्रीचरण सेवा में प्रीति (६०)— इसका उल्लेख आदि पुराण में इस प्रकार है—

जो व्यक्ति निरन्तर मेरा नाम ग्रहण करता है, एवं मेरी सेवा में प्रीतिशील है, उसको मैं भक्ति प्रदान

करता हूँ। कभी भी मुक्ति नहीं देता हूँ॥ २२५॥

### दुर्गमसङ्गमनी

सेवाप्रियः सेवैकपुरुषार्थः सन्। मुक्तिरत्र भक्तिशून्या ज्ञेया॥ २२५॥

### अनुवाद

सेवाप्रियः अर्थात् सेवा ही जिसका एकमात्र पुरुषार्थ है। यहाँ पर मुक्ति शब्द से भक्तिशून्य मुक्ति को जानना है॥ २२५॥

### भक्तिसार-प्रदर्शिनी

सेवाप्रियः सेवैकपुरुषार्थः सन्॥ २२५॥

### अनुवाद

सेवाप्रियः अर्थात् सेवा ही जिसका एकमात्र पुरुषार्थ है।

**अथ श्रीभागवतार्थास्वादो (६१), यथा प्रथमे—**

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः!॥ (२२६)**

### अनुवाद

श्रीभागवत का अर्थास्वादन (६१)— जैसाकि प्रथम स्कन्ध में कहा गया है—

हे भावुकगण! हे रसिकगण! वेद कल्पतरु से गलित रसरूप श्रीमद्भागवताख्य फल है, जो शुक मुख से अमृतद्रव संयुक्त होकर पृथ्वी में अवतीर्ण हुआ है। इसका पान आप सब पुनः पुनः मुक्तावस्था में भी करते रहें॥ २२६॥

### दुर्गमसङ्गमनी

हे भावुकाः! परममङ्गलायनाः हे रसिका! भगवद्भक्तिरसज्ञा इत्यर्थः। ते यूयं वैकुण्ठात्क्रमेण भुवि पृथिव्यामेव गलितमवतीर्णं निगमकल्पतरोः सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुण्ठमप्यध्यारूढस्य वेदरूपतरोर्यत् खलु रसरूपं श्रीभागवताख्यं फलं तद्भुव्यपि स्थिताः पिबतास्वाद्यान्तर्गतं कुरुत। 'अहो' इत्यलभ्यलाभव्यञ्जना, भागवताख्यं यच्छास्त्रं तत् खलु रसवदपि रसैकमयताविवक्षया रसशब्देन निर्दिष्टं, भागवतशब्देनैव तस्य रसस्यान्यदीयत्वञ्च व्यावृत्तम्। भागवतस्य तदीयत्वेन रसस्यापि तदीयत्वाक्षेपात् शब्दश्लेषेण च भगवत्सम्बन्धिरसमिति गम्यते, स च रसो भगवद्भक्तिमय एव, (भा॰ १/७/७)— "यस्यां वै श्रूयमाणायामि" त्यादिफलश्रुतेः। यन्मयत्वेनैव श्रीभगवति रसशब्दः श्रुतौ प्रयुज्यते। "रसो वै सः" इति, स एव च प्रशस्यते, "रसं ह्येवायं लब्ध्वानन्दीभवती"ति। अत्र रसिका इत्यनेन प्राचीनार्वाचीनसंस्काराणामेव तद्विज्ञत्वं दर्शितम्। गलितमित्यनेन तस्य सुपक्विमत्वमुक्त्वा शास्त्रपक्षे सुनिष्पन्नार्थत्वमधिकस्वादुत्वञ्च दर्शितम्। रसमित्यनेन फलपक्षे त्वगष्ट्यादिरहितत्वं व्यज्य अत्र च शास्त्रपक्षे हेयांशराहित्यं दर्शितम्। तथा निगमतरोः

परमफलत्वोक्त्या तस्य परमपुरुषार्थत्वं दर्शितम्। एवं तस्य रसात्मकफलस्य स्वरूपतोऽपि वैशिष्ट्ये सति परमोत्कर्षबोधनार्थं वैशिष्ट्यान्तरमाह— शुकेति। अत्र फलपक्षे कल्पतरुवासित्वादलौकिकत्वेन शुकोऽप्यमृतमुखोऽभिप्रेयते। ततस्तन्मुखं प्राप्य यथा तत्फलं विशेषतः स्वादु भवति, तथा परमभागवतमुखसम्बन्धं भगवद्गुणवर्णनमपि। ततस्तादृशपरमभागवतवृन्दमहेन्द्रश्रीशुकदेवमुखसम्बन्धं किमुतेति भावः। अतएव परमस्वादु परमकाष्ठाप्राप्तत्वात्, स्वतोऽन्यतश्च तृप्तिरपि न भविष्यतीति। आलयं मोक्षानन्दमप्यभिव्याप्य पिबतेत्युक्तम्। तथाच वक्ष्यते (भा. २/१/९)— "परिनिष्ठितोऽपि नैर्गुण्ये" इत्यादि। अनेनास्वाद्यान्तरवन्नेदं कालान्तरेऽप्यास्वादकबाहुल्येऽपि व्ययिष्यतीत्यपि दर्शितम्। यद्वा, तत्र तस्य रसस्य भगवद्भक्तिमयत्वेऽपि द्वैविध्यं, तद्भक्त्युपयुक्तत्वं तद्भक्तिपरिणामत्वञ्चेति। यथोक्तं द्वादशे (भा. १२/३/१४, १५)—

"कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्।
विज्ञानवैराग्यविवक्षया विभो! वचोविभूतीर्न तु पारमार्थ्यम्॥
यस्तूत्तमःश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः॥" इति।

ततः सामान्यतो रसत्वमुक्त्वा विशेषतोऽप्याह— अमृतेति। अमृतद्रवस्तल्लीलारसः, ''हरिलीलाकथाव्रातामृतानन्दितसत्सुरम्;'' इति द्वादशे (भा. १२/१३/११) श्रीभागवतविशेषणात्; लीलाकथारसनिषेवणमिति तस्यैव रसत्वनिर्देशाच्च। सत्सुरमिति— सन्तोऽत्रात्मारामाः (भा. १०/१२/११) "इत्थं सतामि" त्यादिवत्, त एव सुराः, अमृतमात्रास्वादित्वात्, तेन समवेतं तत्रापि तादृशशुकमुखाद् गलितं प्रवाहरूपेण वहन्तमित्यर्थः। तदेवं भगवद्भक्तेः परमरसत्त्वापतिः शब्दोपात्तैव। अन्यत्र च (भा. १२/१३/१५) "सर्ववेदान्ते" त्यादौ "तद्रसामृततृप्तस्ये" त्यादि। एवमेवाभिप्रेत्य 'भावुका' इत्यत्र 'रसविशेषभावनाचतुरा' इति टीका। तथा (भा. १/५/१९)— ''स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन'' इत्यादि॥ २२६॥

## अनुवाद

हे भावुका! परम मङ्गलायना!, हे रसिका, भगवद्भक्ति रसज्ञा! आप सब, वैकुण्ठ से क्रमपूर्वक पृथिवी में अवतीर्ण निगम कल्पतरु से समस्त फलों की उत्पत्ति के आदि कारण स्वरूप, शाखा, उपशाखा के द्वारा वैकुण्ठ तक पहुँचने वाले वेदरूप तरु का रसरूप श्रीमद्भागवत नामक फल को पृथिवी में ही रहकर पान करें अर्थात् आस्वादन करें।

अहो! आप लोगों ने न प्राप्त होने वाले अति दुर्ल्लभ बस्तु को भी प्राप्त किया है। भागवत नामक शास्त्र रस वाला होने पर भी केवल रसमय होने के कारण रस शब्द से निर्दिष्ट हुआ है।

भागवत् रस कहने के कारण—भगवत् रस ही यहाँ पर वर्णित है, प्राकृत रस का वर्णन श्रीमद्भागवत में नहीं है। भागवतम् भगवान् से सम्बन्धित होने के कारण रस भी भगवत् सम्बन्धी ही है। श्लेष से भगवत् समबन्धी रस को सूचित किया गया है। यह रस भक्तिमय ही है। श्रीमद्भागवत के १/७/७ में उक्त है—

यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा॥

इसके श्रवण मात्र से पुरुषोत्तम भगवान् श्रीकृष्ण में परम प्रेममयी भक्ति हो जाती है। जिससे जीव के शोक, मोह और भय नष्ट हो जाते हैं।

इस प्रकार फल वर्णन किया गया है। रसमय होने के कारण श्रीभगवान् के लिये श्रुति में रस शब्द का प्रयोग हुआ है। "रसो वै सः" से उनकी प्रशंसा की जाती है। "रसं ह्येवायं लब्ध्वानन्दी भवतीति" अर्थात् रसरूपी भगवान् को प्राप्त कर ही आनन्दी होता है। यहाँ पर रसिका शब्द से प्राचीन एवं आधुनिक संस्कार युक्त व्यक्तिगण ही रसविज्ञ होते हैं।

गलित शब्द से सुपक्व फल रूप हैं, यह कहकर शास्त्र पक्ष में सुनिष्पन्नार्थ युक्त एवं अधिक स्वाद युक्त श्रीमद्भागवत शास्त्र है, कहा गया है। रस कहने से फल पक्ष में छिलका एवं गुठली नहीं है, ऐसा कह करके इस भागवत शास्त्र के पक्ष में कुछ भी अंश हेय नहीं है, इसे दिखाया गया है। वेद रूप तरु का परम फल कहकर श्रीमद्भागवत का परम पुरुषार्थत्व दिखाया गया है।

एवं श्रीमद्भागवत रसात्मक फल होने के कारण स्वरूप से परम वैशिष्ट्य होने पर भी परम उत्कर्षता दिखाने के लिए और भी विशेषता को दिखाने के लिये कहते हैं— शुकेति।

फल पक्ष में कल्पतरुवासी होने के कारण अलौकिक होने से शुक भी यहाँ पर अमृतमुख रूप में अभिप्रेत है। अतः उसके मुख को प्राप्त करके जिस प्रकार फल विशेष रूप से स्वादु होता है उसी प्रकार परमभागवत मुख सम्बन्ध को प्राप्तकर भगवद्गुण वर्णन भी परम स्वादु होता है। अतः तादृश परम भागवतवृन्द महेन्द्र श्रीशुकदेव के मुख से सम्बन्धित-विगलित होने से कहना ही क्या! अतएव परम स्वादु एवं परमकाष्ठा प्राप्त होने से इसके आस्वादन में एवं अन्य ग्रन्थों के आस्वादन में कभी भी तृप्ति की सम्भावना नहीं होती है।

आलयं अर्थात् मोक्षानन्द पर्यन्त समस्त अवस्थाओं में इसका पान करिये। श्रीमद्भागवत के २/१/९ में उक्त है—

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोक लीलया।
गृहीतचेता राजर्षे आख्यानं यदधीतवान्॥

राजर्षे! यद्यपि मैं सब प्रकार से निर्गुण ब्रह्म में पूर्ण निष्ठा प्राप्त था। तथापि उत्तम श्लोक भगवान् श्रीकृष्ण की मधुर लीलाओं ने बलात् मेरे हृदय की अपनी ओर आकर्षित कर लिया। यही कारण है कि मैंने इस पुराण का अध्ययन किया।

इसके द्वारा यह प्रदर्शित हुआ है कि अन्य वस्तुओं की भाँति अनेक आस्वादक होने से यह क्षय को प्राप्त नहीं होगा।

अथवा श्रीमद्भागवत रस भगवद् भक्तिमय होने पर भी दो प्रकार के हैं— भगवद्भक्ति के उपयोगी, और भगवद्भक्ति का परिणाम स्वरूप। जैसाकि श्रीमद्भागवत के द्वादश स्कन्ध ३/१४-१५ में उक्त है—

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्।
विज्ञानवैराग्यविवक्षया विभो, र्वचोविभूतिर्नतुपारमार्थ्यम्॥

संसार में बड़े बड़े प्रतापी और महान व्यक्ति हुए हैं। वे लोकों में अपने यश का विस्तार करके यहाँ से चले गये। मैंने तुम्हें ज्ञान और वैराग्य का उपदेश करने के लिये ही उनकी कथा सुनायी है। यह सब वाणी का विलास मात्र है। इसमें पारमार्थिक सत्य कुछ भी नहीं है।

यत्तूत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णोऽमलां भक्तिमभीप्समानः॥

श्रीकृष्ण के गुणानुवाद समस्त अमङ्गलों का नाश करने वाला है। बड़े बड़े महात्मा उसी का गान करते रहते हैं। जो भगवान् श्रीकृष्ण के चरणों में अनन्य प्रेममयी भक्ति की लालसा रखता हो उसे नित्य निरन्तर भगवान् के दिव्य गुणानुवाद का ही श्रवण करते रहना चाहिये।

इस प्रकार श्रीभागवत का सामान्य रसत्व कहने के बाद विशेष रूप से भी कहते हैं। अमृतेति। अमृत द्रव संयुत है। अमृत द्रव कहने से यहाँ पर भगवल्लीला रस जानना होगा।

श्रीमद्भागवत के १२/१३/११ में उक्त है– "हरिलीलाकथाव्रातामृतानन्दित सत् सुरमिति– श्रीमद्भागवत का विशेषण है। लीलाकथारसनिषेवण शब्द के द्वारा श्रीमद्भागवत का रसत्व निर्द्देश किया गया है। 'सत् सुर' यहाँ पर सन्त अर्थात् आत्मारामगण को कहते हैं। श्रीमद्भागवत के १०/१२/११ में उक्त है–

इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन।
मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जा॥

श्रीकृष्ण भगवान् ज्ञानी सन्तों के लिए स्वयं ब्रह्मानन्द के मूर्त्तिमान् अनुभव हैं। दास्य भाव से युक्त भक्तों के लिए वे उनके आराध्यदेव परम ऐश्वर्यशाली परमेश्वर हैं। और माया मोहित विषयान्धों के लिए वे केवल एक मनुष्य बालक हैं। उन्हीं भगवान् के साथ वे महान् पुण्यात्मा ग्वाल वाल तरह तरह के खेल खेल रहे हैं।

वे सब आत्मारामगण देवता हैं, क्योंकि वे सब अमृत (भगवल्लीलामृत) का ही आस्वादन करते रहते हैं। उसमें भी यह श्रीमद्भागवत रस शुकदेवजी के मुख से विगलित होकर प्रवाह रूप से बहता रहता है। इस प्रकार भगवद्भक्ति का परम रसत्व का कथन शब्द से ही सिद्ध हुआ है।

अन्यत्र श्रीमद्भागवत के १२/१३/१५ में कथित है–

सर्ववेदान्तसारं हि श्रीभागवतमिष्यते।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्॥

यह श्रीमद्भागवत समस्त वेदान्तों का सार है। जो इस रस सुधा का पान करके तृप्त हुआ है, उसकी किसी और शास्त्र में रति नहीं हो सकती है। इसको लक्ष्य करके ही कहा गया है–'भावुका'। इसका अर्थ है– रस विशेष भावना चतुर। श्रीधर स्वामिपाद ने ऐसा ही कहा है।

इस प्रकार भागवत १/५/१९ में भी उक्त है–

कि ये दु:खदायी हैं, तथा उनकी निन्दा भी करता है। इस प्रकार मेरे द्वारा कहे हुए भक्ति योग के द्वारा निरन्तर मेरा भजन करने से मैं उस भक्त के हृदय में स्थित हो जाता हूँ, और मेरे स्थित होते ही उसके हृदय की सारी काम वासनाएँ नष्ट हो जाती हैं॥ २५५॥

### भक्तिसार-प्रदर्शिनी

प्रागुक्तं भक्तिप्रवेशयोग्यमेव वैराग्यं व्यनक्ति। अनासक्तस्य सतः यथार्हं स्वभक्त्युपयुक्तं यथा स्यात्तथा विषयानुपयुञ्जतो भुञ्जानस्य पुरुषस्य यद्वैराग्यं तद्युक्तमुच्यते। यत्र वैराग्ये सति कृष्णसम्बन्धे निर्बन्धः स्यादित्यर्थः॥ २५५॥

### अनुवाद

अनासक्तस्य इत्यादि कारिका के द्वारा पहले कहे गये लक्षणाक्रान्त उत्तमा भक्ति में प्रवेश योग्य वैराग्य का वर्णन करते हैं— अनासक्त होकर निजभक्ति के उपयुक्त मात्र यथायोग्य विषयभोग करने वाले व्यक्ति का जो वैराग्य होता है उसको युक्त वैराग्य कहते हैं। इस वैराग्य में कृष्ण के सम्बन्ध में आग्रह विशेष होता है॥ २५५॥

**प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः।**
**मुमुक्षुभिः परित्यागो वैराग्यं फल्गु कथ्यते॥** (२५६)

### अनुवाद

मुमुक्षुगण के द्वारा प्राकृत बुद्धि से हरि सम्बन्धि वस्तुओं का जो परित्याग होता है उसको फल्गु वैराग्य कहते हैं॥ २५६॥

### दुर्गमसङ्गमनी

अथ फल्गु वैराग्यन्तु भक्त्यनुपयुक्तं तत्तदेव ज्ञेयम्। तच्च भगवद्बहिर्मुखानामपराधपर्य्यन्तं स्यादित्याह— प्रापञ्चिकतयेति। हरिसम्बन्धिवस्त्वत्र तत्प्रसादादि; तस्य परित्यागो द्विविधः— अप्रार्थना, प्राप्तानङ्गीकारश्च। तत्रोत्तरस्तु सुतरामपराध एव ज्ञेयः, विष्णुयामले— "प्रसादाग्रहणं विष्णोरि" त्यादिवचनेषु तच्छ्रवणात्॥ २५६॥

### अनुवाद

भक्ति के अनुपयुक्त वैराग्य को फल्गु वैराग्य कहते हैं। यह फल्गु वैराग्य भगवद्बहिर्मुख व्यक्ति को अपराध पर्यन्त तक ले जाता है अर्थात् फल्गु वैराग्य करने वाला व्यक्ति अन्ततः भगवान् के प्रति अपराध करने लगता है। इसी को प्रापञ्चिकतया इत्यादि कारिका के द्वारा व्यक्त किये हैं। हरि सम्बन्धी वस्तुनः का अर्थ भगवत् प्रसादादि से है। इनका परित्याग द्विविध है— प्रार्थना न करना और प्राप्त प्रसादादि को स्वीकार न करना। इन दोनों प्रकार के परित्याग के मध्य में द्वितीय प्राप्त प्रसादादि को स्वीकार न करना अपराध ही है। इसका ज्ञान '' श्रीविष्णु के प्रसाद अग्रहण से अपराध होता है'' इस वचन से होता है॥ २५६॥

### अर्थरत्नाल्प-दीपिका

चित्तकाठिन्येहेतुकं वैराग्यं दर्शयति— प्रापञ्चिकतयेति॥ २५६॥

### अनुवाद

चित्तकाठिन्य का कारण जो वैराग्य होता है उसको फल्गु वैराग्य कहते हैं। प्रापञ्चिकतया इत्यादि कारिका के द्वारा इसी फल्गु वैराग्य को कहा गया है॥ २५६॥

### भक्तिसार-प्रदर्शिनी

फल्गु वैराग्यन्तु भक्त्यनुपयुक्तं यत्तदेव ज्ञेयम्। तच्च भगवद्बहिर्मुखानामपराधपर्यन्तं स्यादित्याह— प्रापञ्चिकतयेति। हरिसम्बन्धिबस्त्वत्र तत्प्रसादादि; तस्य परित्यागो द्विविधः— अप्रार्थना प्राप्तानङ्गीकारश्च। तत्रोत्तरस्तु सुतरामपराध एव ज्ञेयः, प्रसादाग्रहणं विष्णोरित्यादिवचनेषु तच्छ्रवणात्॥ २५६॥

### अनुवाद

भक्ति के अनुपयुक्त वैराग्य को फल्गु वैराग्य कहते हैं। यह फल्गु वैराग्य भगवद्बहिर्मुख व्यक्ति को अपराध पर्यन्त तक ले जाता है अर्थात् फल्गु वैराग्य करने वाला व्यक्ति अन्ततः भगवान् के प्रति अपराध करने लगता है। इसी को प्रापञ्चिकतया इत्यादि कारिका के द्वारा व्यक्त किये हैं। हरि सम्बन्धी वस्तुनः का अर्थ भगवत् प्रसादादि से है। इनका परित्याग द्विविध है— प्रार्थना न करना और प्राप्त प्रसादादि को स्वीकार न करना। इन दोनों प्रकार के परित्याग के मध्य में द्वितीय प्राप्त प्रसादादि को स्वीकार न करना अपराध ही है। इसका ज्ञान '' श्रीविष्णु के प्रसाद अग्रहण से अपराध होता है'' इत्यादि वचन से होता है॥ २५६॥

**प्रोक्तेन लक्षणेनैव भक्तेरधिकृतस्य च।**
**अङ्गत्वे सुनिरस्तेऽपि नित्याद्यखिलकर्म्मणाम्॥** (२५७)
**ज्ञानस्याध्यात्मिकस्यापि वैराग्यस्य च फल्गुनः।**
**स्पष्टतार्थं पुनरपि तदेवेदं निराकृतम्॥** (२५८)

### अनुवाद

भक्ति शास्त्रों को अधिकार करके पूर्व में उत्तमा भक्ति का जो लक्षण कहा गया है उसी से नित्य नैमित्तिकादि निखिल कर्मों, आध्यात्मिक ज्ञान और फल्गु वैराग्य का भक्ति अङ्गत्व निरस्त हुआ है, तथापि स्पष्टता के लिये इनका पुनः निराकरण किया गया है। ॥ २५७-२५८॥

### दुर्गमसङ्गमनी

प्रोक्तेनेति द्वयोरप्यन्वयः, अधिकृतस्य भक्तिशास्त्राधिकारेण व्याप्तस्य, वैराग्यस्य वैराग्यमात्रस्य, विशेषतः फल्गुन इत्यर्थः॥ २५७॥

### अनुवाद

इन दोनों श्लोकों का अन्वय एक साथ होगा। 'अधिकृतस्य' अर्थात् भक्ति शास्त्रों के अधिकार में व्याप्त। वैराग्य से वैराग्यमात्र विशेषरूप से फल्गु वैराग्य को जानना है॥ २५७-२५८॥

### अर्थरत्नाल्प-दीपिका

प्रोक्तेनेति— ज्ञानकर्माद्यनावृतमित्यनेन वैराग्यभागित्यनेन च॥ २५७॥

### अनुवाद

उत्तमा भक्ति को अधिकृत करके भक्ति शास्त्रों के अधिकार में प्राप्त पूर्वोक्त ज्ञान कर्म इत्यादि से अनावृत विशेषण घटित लक्षण के द्वारा नित्यादि अखिल कर्मों का भक्ति अङ्गत्व सुनिरस्त होने पर भी स्पष्टता हेतु पुनर्वार यहाँ निराकरण किया गया है॥२५७॥

### भक्तिसार-प्रदर्शिनी

प्रोक्तेनेति द्वयोरन्वयः। तथा च शुद्धभक्तेरेवमधिकृतस्य भक्तिशास्त्राधिकारेण प्राप्तस्य च प्रोक्तेन लक्षणेन ज्ञानकर्माद्यनावृतत्वादिविशेषणघटितलक्षणेन नित्याद्यखिलकर्मणामङ्गत्वे निरस्तेऽपि स्पष्टतार्थं पुनरप्यत्र निराकृतम्। वैराग्यस्य युक्तायुक्तवैराग्यसामान्यविशेषतः फल्गुन इत्यर्थः॥ २५७॥

### अनुवाद

इन दोनों श्लोकों का अन्वय एक साथ होगा। शुद्ध भक्ति को अधिकृत करके भक्ति शास्त्रों के अधिकार में प्राप्त पूर्वोक्त ज्ञान कर्म इत्यादि से अनावृत विशेषण घटित लक्षण के द्वारा नित्यादि अखिल कर्मों का भक्ति अङ्गत्व सुनिरस्त होने पर भी स्पष्टता हेतु पुनर्वार यहाँ निराकरण किया गया है। वैराग्य से समस्त युक्त अयुक्त समस्त वैराग्य को ग्रहण करना है। विशेष रूप से फल्गु वैराग्य निषिद्ध है॥ २५७॥

**धनशिष्यादिभिर्द्वारैर्या भक्तिरुपपाद्यते।**
**विदूरत्वादुत्तमताहान्या तस्याश्च नाङ्गता॥ (२५९)**

### अनुवाद

धन एवं शिष्यादि के द्वारा जो भक्ति की जाती है, वह भी उत्तमा भक्ति का अङ्ग नहीं हो सकती है। कारण, उत्तमा भक्ति से दूर होने के कारण उत्तमता की हानि होती है॥ २५९॥

### दुर्गमसङ्गमनी

धनेति। "ज्ञानकर्म्माद्यनावृतमि" त्यादिग्रहणेन शैथिल्यस्यापि ग्रहणादिति भावः। नाङ्गतेत्यत्रोत्तमायामिति शेषः॥ २५९॥

### अनुवाद

उत्तमा भक्ति के लक्षण में "ज्ञान कर्माद्यनावृतं" में आदि विशेषण के द्वारा शैथिल्य को भी ग्रहण करना चाहिये। यही धन शिष्यादीत्यादि श्लोक का तात्पर्य है। धन शिष्यादि के द्वारा किया गया भक्ति

उत्तमा भक्ति का अङ्ग नहीं हो सकता है। 'उत्तमाभक्ति' को बाहर से ग्रहण करना होगा॥ २५९॥

### अर्थरत्नाल्प-दीपिका

लक्षणोपात्तादिशब्दार्थमाह– धनेति॥ २५९॥

### अनुवाद

अन्याभिलाषिताशून्यमित्यादि उत्तमा भक्ति के लक्षण में ज्ञान कर्म आदि से अनावृत शब्द दिया गया है, उसमें आदि शब्द का अर्थ कहते हैं– धन एवं शिष्यादि के द्वारा जो भक्ति की जाती है, वह भी उत्तमा भक्ति का अङ्ग नहीं हो सकती है। कारण, उत्तमा भक्ति से दूर होने के कारण उत्तमता की हानि होती है॥ २५९॥

### भक्तिसार-प्रदर्शिनी

धनेति– ज्ञानकर्म्माद्यनावृतमित्यादिग्रहणेनैव शैथिल्यस्यापि ग्रहणादिति भावः। नाङ्गतेत्यत्र उत्तमायामिति शेषः। भक्त्यङ्गानां मध्ये श्रवणकीर्त्तनादेर्धनादिद्वारत्वं प्रायो न सम्भवति, किन्तु परिचर्याघटकीभूतयावद्व्यापारस्य एकदा कर्त्तुमसाध्यत्वेन यस्य यस्य धनशिष्यादिद्वारत्वं, तस्य तस्यैव मुख्यत्वहानिः, न तु सर्वेषामिति बोध्यम्॥ २५९॥

### अनुवाद

उत्तमा भक्ति के लक्षण में "ज्ञान कर्माद्यनावृतं" में आदि विशेषण के द्वारा शैथिल्य को भी ग्रहण करना चाहिये। यही धन शिष्यादीत्यादि श्लोक का तात्पर्य है। धन शिष्यादि के द्वारा किया गया भक्ति उत्तमा भक्ति का अङ्ग नहीं हो सकता है। 'उत्तमाभक्ति' को बाहर से ग्रहण करना होगा।

भक्ति के अङ्गों के मध्य में श्रवण कीर्त्तनादि धनादि की सहायता नहीं प्रायः सम्भव नहीं होता है, किन्तु परिचर्या रूप भक्ति में सब कुछ एक बार करना असाध्य होने पर जिस जिसमें धन शिष्यादि के द्वारा किये जाते हैं, उस उसकी ही मुख्यता की हानि होगी, न कि समस्त अङ्गों की॥ २५९॥

**विशेषणत्वमेवैषां संश्रयन्त्यधिकारिणाम्।**
**विवेकादीन्यतोऽमीषामपि नाङ्गत्वमुच्यते॥ (२६०)**
**कृष्णोन्मुखं स्वयं यान्ति यमाः शौचादयस्तथा।**
**इत्येषाञ्च न युक्ता स्याद्भक्त्यङ्गान्तरपातिता॥ (२६१)**

**यथा स्कान्दे—**

**एते न ह्यद्भुता व्याध! तवाहिंसादयो गुणाः।**
**हरिभक्तौ प्रवृत्ता ये न ते स्युः परतापिनः॥ (२६२)**

**तत्रैव—**

**अन्तःशुद्धिर्बहिःशुद्धिस्तपःशान्त्यादयस्तथा।**
**अमी गुणाः प्रपद्यन्ते हरिसेवाभिकामिनम्॥ इति। (२६३)**

## अनुवाद

विवेकादि गुणों को उत्तमा भक्ति का अङ्ग कहना उचित नहीं है, क्योंकि ये गुण समूह उत्तमा भक्ति के अधिकारी का विशेषण के रूप में आश्रय ग्रहण करते हैं॥ २६०॥

श्रीकृष्ण के भजन करने के लिए उन्मुख व्यक्तियों में स्वाभाविक रूप से यम, शौचादि उपस्थित होते हैं। इसलिए इन सबों को भक्ति के अङ्ग नहीं कहा जा सकता है॥ २६१॥

स्कन्द पुराण में लिखित है—

हे व्याध! तुम्हारे लिए यह अहिंसा गुण समूह अद्‌भुत नहीं है। कारण हरि भक्ति में प्रवृत्त व्यक्ति कभी भी परपीड़क नहीं होता है॥ २६२॥

अन्तः शुद्धि, वहिः शुद्धि, तपस्या और शान्ति प्रभृति गुण समूह श्रीहरि के सेवाभिलाषी व्यक्ति के पास स्वयं जाकर प्रपन्न होते हैं॥ २६३॥

## अर्थरत्नाल्प-दीपिका

यमानां शौचादीनाञ्च स्वयं प्राप्तिं सन्दर्श्य भक्त्यङ्गत्वं निराकरोति— कृष्णोन्मुखमित्यादिना हरिसेवाभिकामिनामित्यन्तेन। यमाः (भा. ११/१९/३६)—

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः।

आस्तिक्यं ब्रह्मचर्य्यञ्च मौनं स्थैर्य्यं क्षमा भयम्॥ इति द्वादश; शान्त्यादय इत्यत्र आदिपदात् सुनृतत्वसमदर्शनादयः॥ २६१-२६३॥

## अनुवाद

यम, नियम, आसन, प्राणायाम, ध्यान, धारणा, समाधि एवं शौचादि अन्तःकरण शुद्धि, बहिः शुद्धि की प्राप्ति भक्ति में स्वयं होती है। इसको दिखाकर ये सब भक्ति के अङ्ग नहीं हो सकते हैं, इसको कहते हैं—

श्रीहरि के सेवाभिलाषी के निकट ये सब स्वाभाविक रूप से आ जाते हैं। श्रीमद्‌भागवत के ११/१९/३३ में उक्त है—

अहिंसा सत्यमस्त्येयमसङ्गो ह्रीरसञ्चयः।
आस्तिक्यं ब्रह्मचर्यञ्च मौनं स्थैर्यं क्षमाभयमिति।
शौचं जपस्तपो होम श्रद्धाऽऽतिथ्यं मदर्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्।
एते यमाः सनियमा उभयो द्वादश स्मृताः।
पुंसामुपासितास्तात यथा कामं दुहन्ति हि॥

'यम' बारह है। अहिंसा, सत्य, अस्तेय- चोरी न करना, असङ्गता, लज्जा, असञ्चय-आवश्यकता से अधिक धन आदि न जोड़ना, आस्तिकता, ब्रह्मचर्य, मौन, स्थिरता क्षमा और अभय।

नियमों की संख्या भी बारह ही है। शौच बाहर की पवित्रता और भीतरी पवित्रता, जप, तप,

हवन, श्रद्धा, अतिथि सेवा, मेरी पूजा, तीर्थयात्रा, परोपकारी चेष्टा, सन्तोष और गुरु सेवा इस प्रकार 'यम' और 'नियम' दोनों की संख्या बारह बारह हैं। ये सब काम और निष्काम दोनों प्रकार के साधकों के लिए उपयोगी है। उद्धव जी! जो व्यक्ति इनका पालन करते हैं। वे यम और नियम इनके इच्छानुसार उन्हें भोग और मोक्ष दोनों प्रदान करते हैं।

शान्ति आदि— यहाँ पर आदि पद से सुनृततत्त्व सत्य बोलना, एवं सम दर्शन आदि को भी जानना होगा, ये सब भक्ति के अङ्ग नहीं हैं। ये सब भक्त में स्वाभाविक होते हैं॥ २६१-२६३॥

## भक्तिसार-प्रदर्शिनी

गीतोक्तविवेकादीन्येषां भक्त्यधिकारिणां दशाविशेषे विशेषणत्वमेव संश्रयन्ति। नत्वमीषां विवेकादीनामङ्गत्वमुचितमित्यर्थः। यतो यमादयः कृष्णोन्मुखं जनं स्वयमेव प्राप्नुवन्ति, तेषां स्वतःसिद्धा एव यमादयो भवन्तीत्यर्थः। ननु येषां भक्तानां स्वतःसिद्धा यमादयो न भवन्ति, ते किं कृष्णबहिर्मुखा एव, तत्राह— उन्मुखं कृष्ण उत्कृष्टमुखमित्यर्थः। हरिसेवायामभिसर्वतोभावेन कामिनं जनममी गुणाः प्रपद्यन्ते स्वयमेव प्रपन्ना भवन्तीत्यर्थः॥ २६०-२६३॥

## अनुवाद

गीता में उक्त विवेकादि का ग्रहण भक्ति में अधिकारी व्यक्तियों की अवस्था का विशेषण रूप में हुआ है। विवेकादि कभी भी भक्ति का अङ्ग नहीं है। कारण यम आदि कृष्णोन्मुख जन में स्वयं उपस्थित होते हैं। अर्थात् भक्तों के लिए यमादि स्वतः सिद्ध होते हैं।

प्रश्न उठता है कि जिन भक्तों में स्वतः सिद्ध यमादि नहीं होते हैं, वे क्या कृष्ण वहिर्मुख होते हैं? इसके लिये कहते हैं—

कृष्णोन्मुखं स्वयं यान्ति यमाः शौचादयस्तथा।
इत्येषाञ्च न युक्ता स्याद् भक्त्यङ्गान्तरपातिता॥

श्रीकृष्ण के भजन करने के लिए उन्मुख व्यक्तियों में स्वाभाविक रूप से यम, शौचादि उपस्थित होते हैं। इसलिए इन सबों को भक्ति के अङ्ग नहीं कहा जा सकता है।

इसलिए कहते हैं— उन्मुख-कृष्ण ही हैं, उत्कृष्ट मुख-जिन सब भक्तों का, वे सब कृष्णोन्मुख हैं, उनमें स्वाभाविक रूप से यम नियम अहिंसा आदि गुण होते रहते हैं।

श्रीहरि सेवा में सब प्रकार से रत व्यक्ति को ये सब गुण स्वयं ही प्राप्त होते हैं। इसलिए यम नियम शौच आदि को भक्ति के अङ्ग नहीं कहा जा सकता है॥ २५९-२६४॥

## अनुवाद

**सा भक्तिरेकमुख्याङ्गाश्रितानैकाङ्गिकाथवा।**
**स्ववासनानुसारेण निष्ठातः सिद्धिकृद्भवेत्॥ (२६४)**

## अनुवाद

अपनी (भक्त की) वासनानुसार वह भक्ति एक मुख्य अङ्ग वाली अथवा आश्रित अनेक मुख्य

अङ्गों वाली होती है। निष्ठा होने से ये दोनों ही सिद्धि प्रदान करती हैं॥ २६४॥

### भक्तिसार-प्रदर्शिनी

श्रवणकीर्त्तनादीनां मध्ये मुख्यतया क्रियमाणमेकमङ्गं यस्याः सा। तथा चान्याङ्गानि तु गौणतया क्रियमाणानीति लभ्यते। आश्रितान्यनेकाङ्गानि यस्याः सा। अत्र कल्पद्वयमेव श्रेष्ठमित्याह—स्ववासनेति॥ २६४॥

### अनुवाद

श्रवण कीर्त्तनादि भक्ति के अङ्गों के मध्य में यदि एक अङ्ग मुख्यतया अनुष्ठित होती है और अन्यान्य अङ्ग समूह गौण रूप से मिश्रित होते हैं तो इसको एक मुख्याङ्गा भक्ति कहते हैं। जहाँ पर मुख्यतया अनेक भक्त्यङ्ग आश्रित होकर रहते हैं उसे अनेकाङ्गा भक्ति कहते हैं। यहाँ पर कथित एक मुख्याङ्ग और अनेकाङ्गा दोनों ही श्रेष्ठ हैं; क्योंकि स्व-स्व वासना के अनुसार कोई भी निष्ठापूर्वक अनुष्ठित होने पर सिद्धिप्रद होती है॥ २६४॥

**तत्र एकाङ्गा, यथा ग्रन्थान्तरे—**

**श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने,**
**प्रह्लादः स्मरणे तदङ्‌घ्रिभजने लक्ष्मीः पृथुः पूजने।**
**अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः,**
**सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परा॥ (२६५)**

### अनुवाद

ग्रन्थान्तर में एकाङ्गा भक्ति का वर्णन इस प्रकार है—

राजा परीक्षित् श्री विष्णु के श्रीमद्‌भागवत् ग्रन्थ के श्रवण में, श्रीशुकदेव श्रीमद्‌भागवत कीर्त्तन में, प्रह्लाद-स्मरण में, लक्ष्मी भगवच्चरण की सेवा में, पृथु महाराज अर्चन में, अक्रूर-वन्दन में, हनुमान् दास्य में, अर्जुन सख्य में, बलि महाराज सर्वस्व आत्मनिवेदन रत होकर श्रीकृष्ण को प्राप्त कर कृतार्थ हो गये थे॥ २६५॥

### दुर्गमसङ्गमनी

तदङ्‌घ्रिभजन इत्यत्र तथाङ्‌घ्रिभजन इत्येव युक्तम्॥ २६५॥

### अनुवाद

मूल श्लोक में तदङ्‌घ्रिभजन के स्थान पर तथाङ्‌घ्रिभजन अर्थ करना चाहिये। अर्थात्— "और श्रीकृष्ण के चरण कमलों की सेवा में" इस प्रकार कहना चाहिये॥ २६५॥

### अर्थरत्नाल्प-दीपिका

तदित्यव्ययं तस्य प्रसिद्धस्य श्रीविष्णोरिति॥ २६५॥

## अनुवाद

तद् यह अव्यय शब्द है। इसका अर्थ है— प्रसिद्ध श्रीविष्णु के चरण कमलों की सेवा में ॥ २६५॥

## भक्तिसार-प्रदर्शिनी

तदङ्घ्रिभजन इत्यत्र तथाङ्घ्रिभजने इत्यर्थः॥ २६५॥

## अनुवाद

मूल श्लोक में तदङ्घ्रिभजने का अर्थ तथाङ्घ्रिभजने ही करना उचित है॥ २६५॥

**अनेकाङ्गा, यथा श्रीनवमे (भा. ९/४/१८-२०)—**

**स वै मनः कृष्णपदारविन्दयो, र्वचांसि वैकुण्ठगुणानुवर्णने।**
**करौ हरेर्मन्दिरमार्जनादिषु, श्रुतिञ्चकाराच्युतसत्कथोदये॥ (२६६)**
**मुकुन्दलिङ्गालयदर्शने दृशौ, तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्।**
**घ्राणञ्च तत्पादसरोजसौरभे, श्रीमत्तुलस्या रसनां तदर्पिते॥ (२६७)**
**पादौ हरेः क्षेत्रपदानुसर्पणे, शिरो हृषीकेशपदाभिवन्दने।**
**कामञ्च दास्ये न तु कामकाम्यया, यथोत्तमश्लोकजनाश्रया रतिः॥ इति। (२६८)**

## अनुवाद

नवम स्कन्ध (भा. ९/४/१८-२०)में अनेकाङ्गा भक्ति का वर्णन इस प्रकार से है—

अम्बरीष महाराज श्रीकृष्ण चरण युगल में मन को अर्पण किये थे अर्थात् श्रीकृष्ण के सेवादि कार्य्य सम्पादन हेतु सङ्कल्प किये थे। वाक्य समूह को श्रीकृष्ण गुणानुवर्णन में नियुक्त किये थे। हस्तद्वय को श्रीहरि मन्दिर मार्जनादि कार्य्य में रत किये थे। श्रुति अर्थात् श्रवण इन्द्रिय को श्रीविष्णु की पवित्र कथा का श्रवण में नियुक्त किये थे। भक्त गात्र स्पर्श हेतु अङ्ग को नियुक्त किये थे। एवं रसना को महाप्रसाद आस्वादन में रत किये थे। चरण युगल को श्रीहरिक्षेत्र गमन में, मस्तक को हृषीकेश श्रीकृष्ण के चरण वन्दन में एवं काम को अर्थात् सङ्कल्प को भगवत् दास्य लाभ हेतु समर्पण किये थे। किन्तु विषय भोग सम्पादन हेतु कभी सङ्कल्प नहीं किये थे। बल्कि इसलिए कि उन्हें वह भगवत् प्रेम प्राप्त हो जो पवित्र कीर्त्ति भगवान् के निज जनों में ही निवास करता है॥ २६८॥

## दुर्गमसङ्गमनी

लिङ्गानि प्रतिमाः। श्रीमत्याः तुलस्या ययोः पादसरोजयोरर्पितत्वात्तयोः सौरभविशेषयोगः स्यात्तस्मिन्नित्यर्थः। क्षेत्रं श्रीमथुरादि, पदं तदालयादि, तदेतच्च सर्वं तथा चकार यथोत्तमःश्लोकजनाश्रया रतिः स्यात्तेषामभिरुचिः स्यात्तथैवेत्यर्थः॥ २६७, २६८॥

## अनुवाद

लिङ्ग शब्द का अर्थ है— प्रतिमा। जो तुलसी श्रीभगवच्चरणकमलों में अर्पित होकर श्रीचरणों के सौरभ से युक्त हैं, घ्राण को उसमें लगाते थे।

क्षेत्र शब्द का अर्थ है— श्री मथुरादि। पद शब्द का अर्थ है— उनके आलय आदि।

इन सब इन्द्रियों को आपने इस प्रकार नियुक्त किया था, जिससे भगवद्भक्ताश्रया रति उत्पन्न हो सके। अथवा भगवज्जनों को अच्छा लगे॥ २६७,२६८॥

### अर्थरत्नाल्प-दीपिका

लिङ्गानि प्रतिमाः। श्रीमत्यास्तुलस्या ययोः पादसरोजयोरर्पितत्वात् तयोः सौरभविशेषयोगस्तस्मिन्नित्यर्थः। क्षेत्रं श्रीमथुरादि, पदं तदालयम्। कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकारायेत्यर्थः। न तु कामकाम्यया विषयेच्छया। एतत् सर्व्वं तथा चकार यथोत्तमःश्लोकजनाश्रया रतिः स्यात्तेषामभिरुचिः स्यात्तथैवेत्यर्थः। अनेन भगवद्भजनादपि तेषु भक्तेराधिक्यं दर्शितम्॥ २६७-२६८॥

### अनुवाद

लिङ्ग शब्द का अर्थ है— प्रतिमा। जो तुलसी श्री भगवत् चरणारविन्दों में अर्पित हुयी हैं, एवं श्री चरण सरोज के सौरभ से सुवासित है, घ्राण के द्वारा उसकी आस्वादन करते थे।

क्षेत्र शब्द का अर्थ है— श्री मथुरादि। पद शब्द का अर्थ है— भगवत् आलय।

माला, चन्दन आदि की सेवा दास्य के लिए करते थे, अर्थात् भगवत् प्रसादी वस्तु ग्रहण करने के लिए करते थे। विषय भोग की इच्छा से नहीं।

यह सब इसलिए किये थे, जिससे उत्तमश्लोक जनाश्रय रति प्राप्त हो अथवा भगवज्जनों को अच्छा लगे। इससे यह सूचित हुआ कि भगवद्भजन से भी भगवद्भक्तों का भजन अधिक महत्वपूर्ण होता है॥ २६७-२६८॥

### भक्तिसार-प्रदर्शिनी

मुकुन्दस्य लिङ्गानां प्रतिमानाञ्चालयानां मन्दिराणाञ्च मथुरादिनित्यसिद्धधाम्नाञ्च वैष्णवानाञ्चदर्शने, तुलस्यास्तुलसीसम्बन्धिनि पादसरोजसौरभे, तथा च चरणारविन्दार्पितायां तुलस्यां घ्राणसंयोगे सति चरणारविन्दतुलस्योर्द्वयोरेव साक्षात्कारो भवतीति भावः। तदर्पिते महाप्रसादान्ने रसनां जिह्वां। हरेः क्षेत्रं मथुरादि। पदमन्यत्रापि तन्मन्दिरादि, तदनुसर्पणे तत्र-तत्र पुनःपुनर्गमने हृषीकेशस्य पदयोश्चरणयोः पदानां भक्तानाञ्चाभिवन्दने। एतत् सर्वं तथा चकार यथा उत्तमश्लोकजनाः प्रह्लादादयस्तत्र तत्र एवाश्रयो यस्यास्तथाभूता निष्कामैव रतिः स्यात्। न तु कामकाम्यया काम्यवस्तुनः कामनया तत् सर्वं न चकारेत्यर्थः॥ २६७-२६८॥

### अनुवाद

श्रीमुकुन्द की प्रतिमा, उनका मन्दिर, मथुरादि नित्य सिद्ध धामों के वैष्णवों के दर्शन के लिये नयन युगल को लगाये रखे थे। तुलसी सम्बन्धी चरण कमल के सौरभ प्राप्त करने के लिए घ्राण को अर्पण किये थे। तुलसी श्रीचरणारविन्दों में अर्पित होने पर तुलसी में श्रीचरणकमलों का सौरभ व्याप्त हो

जायेगा, एवं अर्पित तुलसी के द्वारा तुलसी एवं श्रीचरण कमल दोनों का साक्षात्कार होगा। श्रीभगवान् को अर्पित जो महाप्रसादान्न उसके आस्वादन करने के लिये जिह्वा को अर्पण किये थे। क्षेत्र अर्थात् श्रीहरि के क्षेत्र मथुरादि का दर्शन करने के लिए चरणों को नियुक्त कर रखे थे। पदम् शब्द से अन्यत्र विद्यमान अन्यान्य मन्दिरों के दर्शनादि के लिये पुनः पुनः गमन को जानना होगा। भगवान् हृषीकेश के चरण वन्दन करने के लिए मस्तक को लगाये रखे थे। एवं भगवद्भक्तों को भी अभिवन्दन करने के लिए मस्तक नियुक्त किये थे।

इन सभी इन्द्रियों को उन्होंने इस प्रकार से नियुक्त कर रखा था कि जिससे उत्तमश्लोकजन अर्थात् प्रह्लादादि भक्तजनों के समान भगवान् में निष्काम रति हो एवं भगवद्भक्तों का भी अभिरुचि हो। उन्होंने काम्य वस्तु की कामना से उन सब कार्यों को नहीं किया॥ २६८॥

**शास्त्रोक्तया प्रबलया तत्तन्मर्य्यादयान्विता।**
**वैधी भक्तिरियं कैश्चिन्मर्यादामार्ग उच्यते॥ (२६९)**

### अनुवाद

शास्त्रोक्त प्रबल मर्यादा युक्त इस वैधी भक्ति को कुछ पण्डितगण 'मर्यादा मार्ग' नाम से कहते हैं॥ २६९॥

### भक्तिसार-प्रदर्शिनी

शास्त्रोक्ता मर्यादा यदि प्रबला भवति, प्रथमतो भक्तिप्रवृत्तौ प्रयोजिका भवति, तदा तया मर्यादयान्विता इयं वैधी भक्तिः। कैश्चिज्जनैर्मर्यादामार्ग इति संज्ञयोच्यते॥ २६९॥

### अनुवाद

शास्त्रोक्त मर्यादा यदि प्रबला होती है तथा भगवद्भक्ति में प्रथम प्रवृत्ति के लिये प्रयोजिका होती हैं, तब उसके द्वारा प्रवर्त्तित मर्यादा युक्त भक्ति को वैधी भक्ति कहते हैं। कुछ व्यक्तिगण इसको मर्यादा मार्ग संज्ञा से कहते हैं॥ २६९॥

**अथ रागानुगा—**

**विराजन्तीमभिव्यक्तं व्रजवासिजनादिषु।**
**रागात्मिकामनुसृता या सा रागानुगोच्यते॥ (२७०)**

### अनुवाद

रागानुगा भक्ति—

व्रजवासीजन एवं व्रज के गो, मृग, शुक आदि में प्रकाश्य रूप से विराजमाना जो भक्ति है उस भक्ति को 'रागात्मिका' नाम से कहते हैं। इस रागात्मिका भक्ति की जो अनुगमन करती है उस भक्ति को 'रागानुगा' नाम से कहते हैं॥२७०॥

### अर्थरत्नाल्प-दीपिका

अथ रागानुगा— विराजन्तीमिति आदि शब्देन गोमृगशुकादयो गृहीताः॥ २७०॥

### अनुवाद

इस वैधी भक्ति निरूपण के बाद अब रागानुगा भक्ति का वर्णन करते हैं—

व्रजवासीजन शब्द से मनुष्य तथा आदि शब्द से गो, मृग, शुक प्रभृति को जानना होगा॥ २७०॥

### भक्तिसार-प्रदर्शिनी

व्रजवासिजनादिषु अभिव्यक्तं यथा स्यात्तथा विराजन्तीं रागात्मिकां भक्तिमनुसृता या, सा रागानुगोच्यते॥ २७०॥

### अनुवाद

व्रजवासीजनादि में अभिव्यक्त रूप से विराजमान जो भक्ति है, उसके अनुसरण कर जो भक्ति होती है, उसको रागानुगा भक्ति कहते हैं॥ २७०॥

**रागानुगाविवेकार्थमादौ रागात्मिकोच्यते॥ (२७१)**

### अनुवाद

रागानुगा भक्ति के यथार्थ ज्ञान के लिए पहले रागात्मिका भक्ति का वर्णन करते हैं॥ २७१॥

### अनुवाद

**इष्टे स्वारसिकी रागः परमाविष्टता भवेत्।**
**तन्मयी या भवेद्भक्तिः सात्र रागात्मिकोदिता॥ (२७२)**

### अनुवाद

इष्ट में स्वाभाविक जो परमाविष्टता होती है उसे राग कहते हैं। उस रागमयी भक्ति को ही यहाँ पर रागात्मिका कहा गया है॥ २७२॥

### दुर्गमसङ्गमनी

इष्टे स्वानुकूल्यविषये स्वारसिकी स्वाभाविकी परमाविष्टता तस्या हेतुः प्रेममयतृष्णेत्यर्थः सा रागो भवेत्, तदाधिक्यहेतुतया तदभेदोक्तिरायुर्घृतमितिवत्। एवमुत्तरत्रापि। तन्मयी तदेकप्रेरिता। तत्प्रकृतवचने मयट्॥ २७२॥

### अनुवाद

इष्ट अर्थात् स्वानुकूल्य विषय में स्वारसिकी अर्थात् स्वाभाविकी जो परमाविष्टता होती है उस परमाविष्टता का जो कारण होता है वह है प्रेममय तृष्णा। इसी प्रेममय तृष्णा को राग कहते हैं।

यहाँ पर परमाविष्टता का आधिक्य होने के कारण प्रेममय तृष्णा अर्थात् राग के साथ अभेदोक्ति है। इस अभेदोक्ति को ''आयुर्घृतम्'' की भाँति जानना होगा। अर्थात् जिस प्रकार ''आयुर्घृतं'' न्याय से घृत आयुवर्धक है न कि आयु है। घी में प्रचुर मात्रा में आयुवर्धक सामग्री होने के कारण धृत को आयु कहा गया है। इसी प्रकार आगे भी समझना होगा।

तन्मयी अर्थात् एकमात्र राग से प्रेरित। तन्मयी में प्रकृत के साथ मयट् प्रत्यय का प्रयोग हुआ है। सूत्र है "तत् प्रकृत वचने मयट।" तन्मयी में मयी का अर्थ है "बना हुआ" अर्थात् जो भक्ति राग की बनी हुयी है उसे रागात्मिका भक्ति कहते हैं॥ २७२॥

## अर्थरत्नाल्प-दीपिका

इष्टे स्वारसिकी स्वभावजा परमाविष्टता रागो भवेत्। तन्मयी रागमयी या भक्तिः सा रागात्मिका॥ २७२॥

## अनुवाद

इष्ट में स्वाभाविक परम आवेश को राग कहते हैं। उस रागमयी भक्ति का नाम रागात्मिका है॥२७२॥

## भक्तिसार-प्रदर्शिनी

रागात्मिका– इष्टे स्वानुकूल्यविषये स्वारसिकी या परमाविष्टता आवेशः। अत्र आविष्टतापदं तद्धेतुपरम्। तथा चावेशजनकीभूतप्रेममयतृष्णेत्यर्थः। सा तृष्णा रागो भवेत्। तन्मयी तदेकप्रचुरा तत्प्रकृतवचने मयट्। तथा चेष्टे स्वारसिकावेशजनकीभूता या प्रेममयतृष्णा, तत्प्रेरिता या माल्यगुम्फनादिपरिचर्या, सा रागात्मिकेति समुदायार्थः। एवं सति तृष्णारूप रागस्यानुसरणासम्भवेऽपि न क्षतिरिति बोध्यम्॥ २७२॥

## अनुवाद

इष्ट में अर्थात् स्वानुकूल्य विषय में स्वाभाविकी-स्वारसिकी जो परम आविष्टता-आवेश होता है उसको राग कहते हैं। यहाँ आविष्टता पद कारण पर है, आवेश का कारण-प्रेममय तृष्णा है। उस तृष्णा को राग कहते हैं। प्रचुर रूप से तृष्णा को प्रकट करने के लिए तत् प्रकृत वचन में मयट प्रत्यय हुआ है।

इस प्रकार इष्ट में स्वाभाविक आवेश के कारण जो प्रेममयी तृष्णा होती है, उससे प्रेरित होकर जो माल्य गुम्फन आदि परिचर्या की जाती है, उसको रागात्मिका कहते हैं।

इस प्रकार से तृष्णा रूप राग का अनुसरण करना सम्भव न होने पर भी हानि नहीं है॥ २७२॥

**सा कामरूपा सम्बन्धरूपा चेति भवेद् द्विधा॥ (२७३)**

## अनुवाद

कामरूपा एवं सम्बन्ध रूपा भेद से रागात्मिका भक्ति दो प्रकार की होती हैं॥ २७३॥

## दुर्गमसङ्गमनी

कामेन रागविशेषरूपेण रूप्यते क्रियत इति, तथा सम्बन्धेन तद्धेतुकेन रागविशेषेण रूप्यते क्रियत इति, तत्तत्प्रेरितेत्यर्थः। यद्यपि कामरूपायामपि सम्बन्धविशेषोऽस्त्येव तथापि पृथगुपादानं सम्बन्धप्राधान्यविवक्षया 'सर्वे समायान्ति राजा चेतिवत्'॥ २७३॥

### अनुवाद

काम अर्थात् राग विशेष के द्वारा जो भक्ति प्रेरित होती है उसे कामरूपा कहते हैं। तथा सम्बन्ध हेतुक राग विशेष के द्वारा जो भक्ति प्रेरित होती है उसे सम्बन्धरूपा कहते हैं। यद्यपि कामरूपा में भी सम्बन्ध विशेष होता है तथापि पृथक कथन से इस काम सम्बन्ध के प्राधान्य होने के कारण अलग नाम दिया गया है। इसे इस कथन की भाँति समझा जा सकता है– "सभी आ रहे हैं, राजा भी आ रहे हैं" ॥ २७३ ॥

### भक्तिसार-प्रदर्शिनी

सा रागात्मिका कामरूपा कामेन रागविशेषस्वरूपेण रूप्यते क्रियत इति तथा। एवं सम्बन्धेन तद्धेतुकरागविशेषेण रूप्यते क्रियत इति। तथा च कामप्रेरिता परिचर्या एवं सम्बन्धप्रेरिता परिचर्येति द्विविधा रागात्मिकेत्यर्थः। यद्यपि कामरूपायामपि सम्बन्धविशेषोऽस्त्येव तथापि पृथगुपादानं सम्बन्धानां मध्ये कामस्य प्राधान्यप्रतिपादनाय। यथा सर्वः समायाति राजा चेत्यत्र राज्ञः सर्वान्तःपातित्वेपि पुनस्तस्य कथनं प्राधान्यप्रतिपादनार्थम्॥ २७३ ॥

### अनुवाद

वह रागात्मिका भक्ति कामरूपा व सम्बन्धरूपा भेद से द्विविध होती है। काम अर्थात् राग विशेष के द्वारा जो प्रेरित होती है उसे कामरूपा कहते हैं, तथा सम्बन्ध के द्वारा अर्थात् सम्बन्ध हेतुक राग विशेष के द्वारा जो भक्ति होती है उसे सम्बन्धरूपा कहते हैं। इसी प्रकार काम प्रेरित परिचर्या एवं सम्बन्ध प्रेरित परिचर्या भेद से रागात्मिका द्विविध होती है, यही कहने का अभिप्राय है। यद्यपि कामरूपा में भी सम्बन्ध विशेष होता है तथापि पृथक रूप से नामकरण जो किया गया है वह सम्बन्धों के मध्य में काम की प्रधानता के प्रतिपादन के लिये है। इसको इस प्रकार से जाना जा सकता है– "सभी आ रहे हैं, राजा भी आ रहे हैं।" यहाँ पर राजा जो है वह सभी के अन्तर्गत आ रहा है तथा पृथक्कथन उसमें प्राधान्य प्रतिपादनार्थ हुआ है॥ २७३ ॥

**तथा हि सप्तमे (भा ७/१/२९, ३०)—**

**कामाद् द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः।**
**आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥ (२७४)**
**कामाद्गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो! इति। (२७५)**

### अनुवाद

श्रीमद्भागवत के सप्तम स्कन्ध १/२९-३० में उक्त है—

जिस प्रकार श्रीभगवान् में भक्ति से मनोनिवेश करके अनेक व्यक्तियों ने उत्तम गति प्रेम को प्राप्त किये हैं , उसी प्रकार काम, द्वेष, भय, स्नेह से ईश्वर में मनोनिवेश करके आवेश के प्रभाव से द्वेष भय हेतु पाप विनाश करके भी अनेक व्यक्ति भगवद्गति प्राप्त किये हैं॥ २७४॥

गोपीगण काम भाव से, कंस भय से, चैद्य आदि राजन्य वर्ग द्वेष से, यादवगण एवं पाण्डवगण स्नेह मूलक सम्बन्ध से, नारदादि हम सब भक्ति से श्रीकृष्ण को प्राप्त कर चुके हैं॥ २७५॥

## दुर्गमसङ्गमनी

कामादिति। अत्र स्वरसत एवोत्पद्यमानानां कामादीनां विधातुमशक्यत्वात्तन्मयीनां कथमपि न वैधीत्वम्। यश्च (भा. ७/१/२५)— तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात्कामेना वा युञ्ज्यादिति—लिङ्प्रत्यय श्रूयते; सोऽपि सम्भावनायामेव सम्भवति। (भा. ७/१/३१)— "तस्मात्केनाप्युपायेनेति"तु अभ्यनुज्ञामात्रम्। यथा यथावत्, तद्गतिं तद्रूपं गम्यं प्राप्ताः। तदघमिति तेषां मध्ये यद्द्वेषभययोरघं भवति, तदपि तदावेशप्रभावेण हित्वेत्यर्थः। न तु कामेऽपीति मन्तव्यं (भा. १०/२९/१३)— "द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रिया" इति तस्य कामस्य द्वेषादिगणपातितामुल्लङ्घ्य स्तुतत्वात्। गोप्य इति— पूर्वरागावस्था ज्ञेयाः। एवं वृष्ण्यादयोऽपि॥ २७५॥

## अनुवाद

स्वाभाविक उत्पन्नशील काम प्रभृति का विधान नहीं किया जा सकता, इसलिए कामादिमयी भक्ति कभी भी वैधी भक्ति में अन्तर्भुक्त नहीं हो सकती।

श्रीमद्भागवत के ७/१/२५ में उक्त है—

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नक्ष्यते पृथक्॥

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों मेंकोई भेद नहीं है।

यहाँ पर लिङ् प्रत्यय प्रयोग हुआ है। यह लिङ् प्रत्यय विधान अर्थ में नहीं हुआ है, केवल सम्भावना अर्थ में हुआ है।

(भा. ७/१/३१) में उक्त है—

कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥

भक्तों के अतिरिक्त जो पांच प्रकार के भगवान् का चिन्तन करने वाले हैं, उनमें से राजा वेन की तो किसी में भी गणना नहीं होती, कारण उसने किसी प्रकार से भगवान् में मन नहीं लगाया था।

सारांश यह कि चाहे जैसे हो अपना मन भगवान् श्रीकृष्ण में तन्मय कर देना चाहिये। यह अनुज्ञा मात्र ही है।

इससे भी यथावत गति की प्राप्ति हुयी। कारण भय द्वेष में जो पाप होता है, श्रीकृष्ण में आवेश के प्रभाव से उसका विनाश हो गया। किन्तु काम के द्वारा आवेश में भय व द्वेष के समान कोई पाप नहीं होता है क्योंकि इसकी स्तुति की गयी है। जैसाकि भागवत (१०/२९/१३) में उक्त है—

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथागतः।
द्विषन्नपि हृषीकेशं किमुताधोक्षज प्रियाः॥

मैं पहले तुमसे कह चुका हूँ कि चेदिराज शिशुपाल भगवान् के प्रति द्वेष भाव रखने पर भी सिद्धि को प्राप्त किया। ऐसी स्थिति में जो अधोक्षज भगवान् श्रीकृष्ण की प्यारी हैं, और उनसे अनन्य प्रेम करती हैं, वे गोपियाँ उन्हें प्राप्त हो जायँ, इसमें कौन सी आश्चर्य की बात है?

द्वेषादि गण में उन सबके काम का पाठ होने पर भी उस श्रेणी से काम को अलग करके स्तुति की गयी है॥ २७४॥

गोपीगण पूर्वरागावस्था को प्राप्त कर श्रीकृष्ण को प्राप्त किये थे। इसी प्रकार वृष्णि प्रभृति स्नेह से श्रीकृष्ण को प्राप्त किये थे॥ २७५॥

### अर्थरत्नाल्प-दीपिका

तद्गतिं तस्य प्रपञ्चागोचरावस्थां गताः प्राप्ता वर्त्तन्ते। अयमर्थः— चैद्यकंसादीनां पूर्व्वजन्मनि भगवद्धस्तमृत्युप्रभावाद्वेणवद्द्वेषफलनरक भोगो न, किन्तु परमभोगप्राप्तिः। जन्मजन्माभ्यासाद्वर्द्धमानेन स्वदेहादिसम्बन्धतया भक्तियोगादपि तीव्रेण द्वेषेण मनोऽभिनिवेशान्मुक्तिः। एतदपि वाचो युक्तिमात्रम्। श्रीकृष्णहस्तमृत्युप्रभाव एव वक्यादिवन्मुक्तिकारणम्। गोप्यादीनां स्वभावसिद्धः परमप्रेमा जन्मलीलायां नवीन इव भासमानोऽभिनिवेशकारणमन्तर्धानलीलापेक्षया तत्प्रापकश्चोक्त इति॥ २७४-२७५॥

### अनुवाद

तद्गतिं अर्थात् प्रपञ्च के अगोचर अवस्था को प्राप्त किया। इसका अर्थ इस प्रकार है— चैद्य, कंस आदियों की पूर्व जन्म में मृत्यु भगवान् के हाथों से हुयी थी, उसके प्रभाव से वेन राजा के विद्वेष के समान विद्वेष फल नरक भोग नहीं हुआ। किन्तु परम भोग प्राप्ति हुई।

जन्म जन्म अभ्यास से वर्द्धित होने पर निज देहादि सम्बन्ध के कारण, भक्ति योग से भी अति तीव्र विद्वेष से मन का अभिनिवेश होने के कारण मुक्ति हुयी है। यह तो कहने की बात है, किन्तु श्रीकृष्ण के हाथों के द्वारा मृत्यु होने के कारण श्रीकृष्ण के हाथों के प्रभाव से ही बकी आदि की मृत्यु के समान उन सबकी मुक्ति हुई।

गोपी आदि का प्रेम स्वभाव सिद्ध है, परम प्रेम है, जन्म लीला में नवीन के तरह प्रतीत हुआ, अभिनिवेश भी ज्यादा हुआ। इसलिए अन्तर्धान लीला की अपेक्षा से भी प्रकट लीला की प्राप्ति अत्यधिक चमत्कार पूर्ण रही॥ २७४-२७५॥

### भक्तिसार-प्रदर्शिनी

कामादिति— अत्र स्वयमेवोत्पद्यमानानां कामानां विधातुमशक्यत्वात् तन्मयीनां कथमपि न वैधीत्वम्। यश्च (भा. ७/१/२५)— तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात्कामेना वा युञ्ज्यादिति— लिङ्प्रत्यय श्रूयते; सोऽपि सम्भावनायामेव सम्भवति-तथा च कामादित्यादिना मनोयोगः सम्भवतीत्यर्थः। तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति वाक्यन्तु पूर्वोक्तस्यानुवादपरमेव, न तु स्वतन्त्रविधिवाक्यम्। यथायथावद्भक्त्या वैधभक्ति साधारणभक्तिसामान्येन तद्गतिं तद्रूपां गतिं गम्यं प्राप्यमिति यावत्, गताः प्राप्ताः। तदघमिति— तेषां मध्ये यद्द्वेषभययोरघं तत् तदावेशप्रभावेण

हित्वेत्यर्थः। न तु कामेऽप्यघं मन्तव्यम्। (भा. १०/२९/१३)– "द्विषन्नपि हृषीकेशं किमुताध ोक्षजप्रिया" इति तस्य कामस्य द्वेषादिगणपातितामुल्लङ्घ्य स्तुतत्वात्।

गोप्य इति– न च नित्यसिद्धानां गोपीप्रभृतीनां कथं कामादेः प्राप्तिरित्युच्यते इति वाच्यम्। कृष्णावतारप्राकट्यसमये पूर्वरागवतीनां तासां कामाधीनानां प्राप्तिरिति विवक्षितत्वात्। एवं वृष्ण्यादयोऽपि॥ २७४, २७५॥

## अनुवाद

स्वयं उत्पन्न होने वाले काम आदि का विधान करना असम्भव है। अतः कामादि प्रचुर भक्तियों को किसी प्रकार से वैधी सिद्ध नहीं किया जा सकता है। किन्तु इन सबों के विषयों में विधि लिङ्ग प्रत्यय हुआ है। वह सम्भावना अर्थ में है।

श्रीमद्भागवत के (७/१/२४) में उक्त है–

तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहाद् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक्॥

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों मेंकोई भेद नहीं है।

विधि लिङ्ग का प्रयोग सम्भावना एवं विधि अर्थ में होता है। यहाँ विधि अर्थ में लिङ्ग प्रत्यय नहीं कर सम्भावना अर्थ में हुआ है। अर्थात् कामादि के द्वारा मनोयोग करना सम्भव है।

श्रीमद्भागवत के ७/१/३१ में कथित है–

कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥

भक्तों के अतिरिक्त जो पांच प्रकार के भगवान् का चिन्तन करने वाले हैं, उनमें से राजा वेन की तो किसी में भी गणना नहीं होती, कारण उसने किसी प्रकार से भगवान् में मन नहीं लगाया था।

सारांश यह है कि चाहे जैसे हो, अपना मन भगवान् श्रीकृष्ण में तन्मय कर देना चाहिये। यह वाक्य पहले वाक्य का अनुवाद पर है। यह स्वतन्त्र विधि लिङ्ग का वाक्य नहीं है।

यथा यथावद् भक्ति से अथवा वैध भक्ति साधारण, भक्ति सामान्य से श्रीकृष्ण में मनोनिवेश करके बहुतों ने श्रीकृष्ण को प्राप्त कर लिये थे।

(भा. १०/२९/१३) में उक्त है–

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथागतः।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः॥

परीक्षित्! मैं तुमसे पहले ही कह चुका हूँ कि चेदिराज शिशुपाल भगवान् श्रीकृष्ण के प्रति विद्वेष रखने पर भी सिद्धि को प्राप्त किया। ऐसी स्थिति में जो समस्त प्रकृति और उनके गुणों से अतीत भगवान् श्रीकृष्ण की प्यारी हैं, और उनसे अनन्य प्रेम करती हैं, वे गोपियाँ उन्हें प्राप्त हो जायँ-इसमें कौन सी आश्चर्य की बात है?

उन सबों के मध्य में जो द्वेष एवं भय से पाप होता है, भगवान् श्रीकृष्ण में आवेश के प्रभाव से पाप को हटाकर अनेकों ने श्रीकृष्ण को प्राप्त कर लिया। कामना में तो पाप है ही नहीं "द्विषन्नपि हृषीकेशं किमुताधोक्षज प्रिया", इस वाक्य में कामना को द्वेष की पङ्क्ति से हटाकर स्तव किया गया है॥ २७४॥

नित्य सिद्ध गोपियों की कामना के द्वारा श्रीकृष्ण प्राप्ति कैसे सम्भव है? इस प्रकार कहा नहीं जा सकता। श्रीकृष्णावतार के समय अर्थात् प्रकट काल में पूर्व रागवती गोपियाँ कामनाधीन होकर ही श्रीकृष्ण को प्राप्त की थीं। इसे आगे ग्रन्थ "इयन्तु व्रजदेवीषु" इत्यादि श्लोक के द्वारा कहेंगे।

इस प्रकार वृष्णि प्रभृति भी स्नेह से श्रीकृष्ण को प्राप्त किये थे॥ २७५॥

**आनुकूल्यविपर्यासाद् भीतिद्वेषौ पराहतौ।**
**स्नेहस्य सख्यवाचित्वाद्वैधभक्त्यनुवर्त्तिता॥ (२७६)**
**किं वा प्रेमाभिधायित्वान्नोपयोगोऽत्र साधने।**
**भक्त्या वयमिति व्यक्तं वैधी भक्तिरुदीरिता॥ (२७७)**

## अनुवाद

आनुकूल्य के अभाव के कारण भय एवं द्वेष को छोड़ दिया गया है। पाण्डवों का स्नेह सख्यमय रागात्मिका में पर्यावसान होने पर भी ऐश्वर्य ज्ञान प्रधान होने के कारण विधि मार्ग में स्थान दिया गया है॥ २७६॥

किंवा स्नेह शब्द का अर्थ प्रेम होने के कारण यहाँ रागानुगा साधन प्रकरण में उसकी उपयोगिता नहीं है।

श्रीनारद जी ने कहा था— "हम सब भक्ति के द्वारा श्रीकृष्ण को प्राप्त किये हैं।" यहाँ पर वैधी भक्ति की प्रतीति होती है। श्रीनारद के पहले जन्म में महदुपासनामयी भक्तियुक्त श्रीनारद में ऐश्वर्य ज्ञान प्रधान रूप से रहने के कारण उन्होंने महापुरुषों के निकट से वैधी भक्ति का ही उपदेश प्राप्त किया था। अतएव मनोनिवेश के कारण रूप में उल्लिखित पञ्चक के मध्य से काम एवं सम्बन्ध ही रागात्मिका का स्वरूप है। अन्य सब नहीं॥ २७७॥

## दुर्गमसङ्गमनी

तदेवं बह्वङ्गत्वे प्राप्ते कामादिद्वयमात्रस्योपादाने कारणान्याह—
आनुकूल्येति द्वाभ्याम्। श्रीनारदेन त्वनयोर्भीतिद्वेषयोरुपादानं भक्तौ कैमुत्योपपादनायैव। तदुक्तम् (भा. ११/५/४८)—

''वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः॥
ध्यायन्त आहृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम्॥'' इति,

तथा च व्याख्यातम् (भ.र.सि. १/२/३)—

''सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदितेति।''

एवमपि; यत्तु (भा. ७/१/२६)—

"यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्। न तथाभक्तियोगेन इति मे निश्चिता मतिः॥" इत्युक्तं; तदपि भावमयकामाद्यपेक्षया विधिमयस्य चित्तावेशहेतुत्वेऽत्यन्तन्यूनत्वमिति व्यञ्जनार्थमेव। येषु भावमयेषु उपायेषु निन्दितोऽपि वैरानुबन्धस्तदावेशाय विधिमयभक्तियोगाच्छेष्ठ इति। तन्मयता ह्यत्र तदाविष्टता, 'स्त्रीमयः कामुक' इतिवत्।

स्नेहस्येति। अयमर्थः— पाण्डवानां यः स्नेहः स सख्यमयरागात्मिकायामेव पर्य्यवस्यति; तादृशव्यवहारश्रवणात्। तथाप्यैश्वर्यज्ञानप्रधानत्वात्तेषां विधिमार्गे प्रधानत्वमेव स्यादिति शुद्धरागानुगायां नोपयोगः। यदि च स्नेह-शब्देन प्रेमसामान्यमुच्यत, तदा तद्विशेषानभिधानात् तत्तत्क्रियानिर्धारणाभावेनानुकरणासम्भव इत्येवमत्र रागानुगाख्ये साधने तस्योपजीव्यत्वाभावेन नोपयोगो विद्यत इति। प्रेमविशेषे तु वाच्ये सम्बन्धरूपायामेव पर्य्यवसानात्पुनरुक्तत्वमिति च ज्ञेयम्।

भक्त्येति पारिशेष्यप्रामाण्येन वैधत्व एव पर्य्यवसानात्। वैधी भक्तिश्चास्य पूर्वजन्मनि महदुपासनालक्षणा ज्ञेया। कामाद् द्वेषादिति पूर्वपद्यानुसारेण पञ्चतयत्वे प्राप्तेऽप्यत्र षट्तयत्वेन व्याख्या श्रीस्वाम्यनुरोधेनैव। वस्तुतस्तु सम्बन्धाद्यः स्नेहस्तस्माद् वृष्णयो यूयञ्चेत्येकमिति बोपदेवानुसारेण ज्ञेयम्। उभयत्र सम्बन्धस्नेहयोरविशेषात्।

एवमेव, (भा. ७/१/३१)—

"कतमोऽपि न वेणः स्यात्पञ्चानां पुरुषं प्रति" इति सुष्ठु सङ्गच्छेत। पुरुषं भगवन्तं प्रतीत्यस्मिन्नेवार्थे सार्थकता स्यादिति॥ २७६, ७७॥

### अनुवाद

यद्यपि भागवतीय श्लोक में अनेक अङ्ग प्राप्त होने पर भी काम एवं सम्बन्ध दो अङ्गों को ही रागात्मिका का उपादान ग्रहण करने का कारण बताते हैं— आनुकूल्य विपर्यसाद् इत्यादि दो पद्यों के द्वारा।

श्रीनारद के द्वारा भीति और विद्वेष का जो ग्रहण भक्ति में किया गया है, वह केवल कैमुत्य को प्रकाश करने के लिए है। कैमुतिक न्याय को दिखाते हैं—

श्रीमद्भागवत के ११/५/४८ पद्य के अनुसार—

वैरेण यं नृपतयः शिशुपालशाल्व
पौण्ड्रादयो गतिविलास विलोकनाद्यैः।
ध्यायन्त आकृतधियः शयनासनादौ
तत् साम्यमापुरनुरक्तधियां पुनः किम्॥

शिशुपाल, पौण्ड्रक और शाल्व आदि राजाओं ने तो वैरभाव से श्रीकृष्ण की गति, विलास, विलोकनादि का ध्यान किया था। वह भी सोते, बैठते, चलते, फिरते स्वाभाविक रूप से ही फिर भी उनकी चित्तवृत्ति श्रीकृष्णाकार हो गयी और वे मुक्ति के अधिकारी हुए। फिर जो लोक प्रेम भाव और अनुराग से श्रीकृष्ण का चिन्तन करते हैं, उन्हें श्रीकृष्ण की प्राप्ति होने में कोई सन्देह है क्या?

इस प्रकार की व्याख्या भक्तिरसामृत सन्धु के १/२/३ में की गयी है—

सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदिता। अर्थात् इस साधन भक्ति को देवर्षि नारद ने सप्तम स्कन्ध (भा. ७/१/२५) में विशेष परिपाटी से कहा है।

यथा भागवत में (७/१/३१) कहा गया है– "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्।" तात्पर्य यह है कि चाहे जैसे ही अपना मन श्रीकृष्ण में तन्मय कर देना चाहिये।

इस पर टीका इस प्रकार है–

नन्वत्र ७/१/२५ "तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा स्नेहात् कामेन वा युञ्ज्यात् कथञ्चित् नेक्षते पृथिगिति" भय द्वेषावपि विहितौ, तर्हि तावपि भक्तीस्यातां, यदि स्यातां तदानुकूल्येनेति विशेषणविरोधः स्यात्तत्राह–भङ्ग्येति। य खलु भयद्वेषयोरपि मङ्गलं विदधीत, तस्मिन्नपि को वा परमपामरो भक्तिं न कुर्व्वीत, प्रत्युत तौ विदधीतेति परिपाट्येत्यर्थः। युञ्ज्यादिति सम्भावनायामेव लिङ् विधानात्, न तु विधौ, भयद्वेषयोर्विधातुमशक्यत्वात्। यद्यपि श्रीकृष्णपरमेवेदं वाक्यं तथापि तदशांदौ च तारतम्येन ज्ञेयम्।"

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों मेंकोई भेद नहीं है।

यहाँ श्री नारद वाक्य से भय, द्वेष के भी विहित होने से इन दोनों के भी भक्ति हो जाने से उत्तमा भक्ति लक्षण में आनुकूल्यमय शब्द के साथ विरोध होता है। इस आशंका के निरास करने के लिए कहते हैं– भङ्गी क्रम से अर्थात् विशेष रीति से। जो भय, द्वेषादि करने वाले को भी मङ्गल प्रदान करते हैं, उन परमेश्वर में कौन परम पामर व्यक्ति भक्ति नहीं करेगा?

भय, द्वेष करने का अभिप्राय न होने पर भी भय, द्वेष करे। क्योंकि भय, द्वेष से भी भगवत् प्राप्ति की सम्भावना है। यानि कि इस परिपाटी से उत्तमा भक्ति का वर्णन श्री नारदजी ने किया है।

यहाँ पर 'युञ्ज्यात्' में सम्भावना अर्थ में लिङ् लकार का विधान है, विधि अर्थ में नहीं। भय, द्वेष का विधान नहीं कर सकते हैं। यद्यपि यह वाक्य श्रीकृष्ण पर है तथापि उनके अंशों में भी तारतम्य से जानना होगा।

श्रीमद्भागवत के ७/१/२६ में उक्त है–

यथावैरानुबन्धेन मर्त्यस्तनमयतामियात्।
न तथा भक्ति योगेन इति में निश्चता मतिः॥

"मेरा तो ऐसा दृढ़ निश्चय है कि मनुष्य वैरभाव से भगवान् में जितना तन्मय हो जाता है, उतना भक्ति योग से नहीं होता।" श्रीनारद जी ने श्रीयुधिष्ठिर को उपरोक्त वचन कहे थे। भावमय कामनादि की अपेक्षा विधिमय के द्वारा चित्त को कृष्ण में आविष्ट करना अत्यन्त न्यून है, इसको ध्वनित करने के लिए ही इस प्रकार कहा गया है। भावमय उपायों में से निन्दित होने पर भी वैरानुबन्ध उस प्रकार आवेश रहने के कारण विधिमय भक्तियोग से भी श्रेष्ठ है।

तन्मयता शब्द का अर्थ है– आविष्टता, जैसे कामुक व्यक्ति स्त्री में आसक्त होता है, इस प्रकार जानना होगा।

स्नेह सख्य वाचि है। पाण्डवों का श्रीकृष्ण के प्रति स्नेह-सख्यमय रागात्मिका में पर्यवसान

होता है, उस प्रकार व्यवहार सुनने में आता है। तथापि ऐश्वर्य ज्ञान प्रधान होने के कारण, विधि मार्ग में ही उसका प्राधान्य है, शुद्ध रागानुगा में उसका उपयोग नहीं होता है।

यदि स्नेह शब्द से प्रेम सामान्य का बोध होता है, तब उसका विशेष कथन न होने के कारण, उस उस क्रियाओं का निर्द्धारण न होने से अनुकरण करना सम्भव नहीं है। इसलिए रागानुगा नामक साधन में वह उपजीव्य न होने से उसका उपयोग नहीं होगा।

स्नेह शब्द से प्रेम विशेष का ग्रहण होने पर सम्बन्ध रूपा में ही वह पर्यवसित हो जायेगा, ऐसा होने पर पुनरुक्त होगा।

"वयं भक्त्या" इस प्रकार कथन पारिशेष्य प्रमाण से वैधी में पर्यवसित होता है। श्रीनारद में जो वैधी भक्ति रही, वह पूर्वजन्म में महद् उपासना का फल है। काम, द्वेष, भय, स्नेह, भक्ति पूर्व पद्य में पाँच सङ्ख्यक होने पर भी छः सङ्ख्यक रूप से व्याख्या श्री स्वामीपाद के अनुरोध से है।

"वस्तुतःसम्बन्धाद्यः स्नेहस्तस्माद् वृष्णयो चेत्येकमिति" कथन बोपदेव के अनुसार हुआ है।

दोनों स्थल में सम्बन्ध और स्नेह के मध्य में विशेषता नहीं है।

इस प्रकार भा. ७/१/३१ में कथित है—

कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥

वैधी भक्ति करने वाले भक्तों के अतिरिक्त जो पाँच प्रकार के भगवान् का चिन्तन करने वाले हैं, उनमें राजा वेन की तो किसी में गिनती नहीं होती, कारण उसने किसी भी प्रकार से भगवान् में मन नहीं लगाया था।

कहने का उद्देश्य यह है कि चाहे जैसे ही अपना मन श्रीकृष्ण में तन्मय कर देना चाहिये। इससे पाँच का समाधान सुन्दर रूप से हुआ। श्लोक में 'पुरुषं प्रति' कहा गया है, इसका अर्थ है— पुरुष अर्थात् भगवान् के प्रति मनोनिवेश करे, इस अर्थ में ही कथन की सार्थकता है॥ २७६-२७७॥

## अर्थरत्नाल्प-दीपिका

एवं षोड़ा स्वभावान् मनोभिनिवेशकारणतया सन्दर्श्य कामसम्बन्धावेव द्विधा रागात्मिकयोः स्वरूपे, नान्ये स्वभावा इत्याह— आनुकूल्येति द्वाभ्याम्। भयेन विरुद्धकरणाद् भीतेर्विपर्य्यासता। प्रेमाभिधायित्वादित्यत्रापि प्रेम्ण ऐशयज्ञानमयत्वात् वैधभक्त्यनुवर्त्तित्वं बोध्यम्। यदा यदा तु शुद्धसम्बन्ध ात्मकः स उदेति, तदा रागात्मिकायां प्रविशतीति च ज्ञेयम्। अत्र रागानुगाख्ये ॥ २७६-२७७॥

## अनुवाद

इस प्रकार छः प्रकार स्वभाव से मनोनिवेश होता है, इसको दिखाकर रागात्मिका का स्वरूप काम एवं सम्बन्ध ही है, अन्य सब नहीं है। इसी को आनुकूल्येनेति दो श्लोकों के द्वारा दिखाते हैं। भय में विरुद्ध आचरण होने से भीति में अनुकूलता नहीं है।

प्रेम का नाम भी स्नेह है। यहाँ प्रेम ऐश्वर्य ज्ञानमय होने के कारण वैध भक्ति का अनुसरण करता

है। जब जब शुद्ध सम्बन्धात्मक होकर वह उदित होता है, तब तब वह रागात्मिका में प्रविष्ट हो जायेगा।

किंवा स्नेह का अर्थ प्रेम होने पर रागानुगा भक्ति के साधन प्रकरण में उसका उपयोग नहीं है॥ २७६-२७७॥

## भक्तिसार-प्रदर्शिनी

ननु कामाद् द्वेषादिति श्लोकें श्रीकृष्णप्राप्तौ रागद्वेषादीनां बहुनामङ्गत्वे प्राप्ते कामादिद्वयमात्रस्योपादाने कारणान्याह— आनुकूल्येति द्वाभ्याम्। श्रीनारदेन त्वनयोर्भीतिद्वेषयोरुपादानं भक्तौ कैमुत्योपपादनायैव। तदुक्तम् (भा. ११/५/४८)—

''वैरेण यं नृपतयः शिशुपालशाल्वपौण्ड्रादयो गतिविलासविलोकनाद्यैः॥
ध्यायन्त आहृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम्॥'' इति,

तथा च व्याख्यातम् (भ.र.सि. १/२/३)—

''सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदितेति।''

एवमपि; यत्तु (भा. ७/१/२६)—

''यथा वैरानुबन्धेन मर्त्त्यस्तन्मयतामियात्। न तथाभक्तियोगेन इति मे निश्चिता मतिः॥'' इत्युक्तं;। तदपि भावमयकामद्वेषादीनां यादृशातिशयचित्तावेशहेतुत्वं तदपेक्षया न्यूनावेशहेतुत्वं वैधभक्तेरिति व्यञ्जनार्थमेव। येषु भावमयेषु उपायेषु निन्दितोऽपि वैरानुबन्धस्तदावेशाय विधिमयभक्तियोगाच्छ्रेष्ठ इति। तन्मयता ह्यत्र तदाविष्टता, 'स्त्रीमयः कामुक' इतिवत्। किं पुनः सर्वैर्वन्द्यमानो रागात्मिकभक्तियोग इति। ननु भक्तिद्वेषयोर्निरासेऽपि तच्छ्लोकस्थस्नेहः कथं शुद्धरागात्मिकामध्ये न गणितस्तत्राह— स्नेहस्येति। अयमर्थः— पाण्डवानां यः स्नेहः स सख्यमयरागात्मिकायामेव पर्य्यवस्यति; तादृशव्यवहारश्रवणात्। तथाप्यैश्वर्यज्ञानप्रधानत्वात्तेषां विधिमार्गे प्रधानत्वमेव स्यादिति शुद्धरागानुगायां नोपयोगः। यदि च स्नेह-शब्देन प्रेमसामान्यमुच्यते, तदा तद्विशेषानभिधानात् तत्तत्क्रियानिर्धारणाभावेनानुकरणासम्भव इत्येवमत्र रागानुगाख्ये साधने तस्योपजीव्यत्वाभावेन नोपयोगो विद्यत इति। प्रेमविशेषे तु वाच्ये सम्बन्धरूपायामेव पर्य्यवसानात्पुनरुक्तत्वमिति च ज्ञेयम्।

भक्त्येति पारिशेष्यप्रामाण्येन वैधीत्वे एव पर्य्यवसानात्। अतो न तस्या अप्यत्र उपयोग इति भावः। नारदस्यैश्वर्यज्ञानप्राधान्यात् पूर्वजन्मनि वैधीभक्तिरेव महद्भिरुपदिष्टेति ज्ञेयम्॥ २७६, २७७॥

## अनुवाद

कामाद् द्वेषादिति श्लोक में श्रीकृष्ण प्राप्ति में राग-द्वेषादि अनेक अङ्ग प्राप्त होने पर भी काम एवं सम्बन्ध दो अङ्गों को ही रागात्मिका का उपादान ग्रहण करने का कारण बताते हैं— आनुकूल्य विपर्यसाद् इत्यादि दो पद्यों के द्वारा।

श्रीनारद के द्वारा भीति और विद्वेष का जो ग्रहण भक्ति में किया गया है, वह केवल कैमुत्य को प्रकाश करने के लिए है। कैमुतिक न्याय को दिखाते हैं—

श्रीमद्भागवत के ११/५/४८ पद्य के अनुसार—

वैरेण यं नृपतयः शिशुपालशाल्व
पौण्ड्रादयो गतिविलास विलोकनाद्यैः।
ध्यायन्त आकृतधियः शयनासनादौ
तत् साम्यमापुरनुरक्तधियां पुनः किम्॥

शिशुपाल, पौण्ड्रक और शाल्व आदि राजाओं ने तो वैरभाव से श्रीकृष्ण की गति, लीला, विलास, विलोकन आदि का स्मरण किया था। वह भी सोते, बैठते, चलते, फिरते स्वाभाविक रूप से ही फिर भी उनकी चित्तवृत्ति श्रीकृष्णकार हो गयी और वे मुक्ति के अधिकारी हुए। फिर जो लोक प्रेम भाव और अनुराग से श्रीकृष्ण का चिन्तन करते हैं, उन्हें श्रीकृष्ण की प्राप्ति होने में कोई सन्देह है क्या?

इस प्रकार की व्याख्या भक्तिरसामृत सन्धु के १/२/३ में की गयी है–

सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदिता। अर्थात् इस साधन भक्ति को देवर्षि नारद ने सप्तम स्कन्ध (भा. ७/१/२५) में विशेष परिपाटी से कहा है।

यथा भागवत में (७/१/३१) कहा गया है– "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्।" तात्पर्य यह है कि चाहे जैसे ही अपना मन श्रीकृष्ण में तन्मय कर देना चाहिये।

इस पर टीका इस प्रकार है–

नन्वत्र ७/१/२५ "तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा स्नेहात् कामेन वा युञ्ज्यात् कथञ्चित् नेक्षते पृथिगिति" भय द्वेषावपि विहितौ, तर्हि तावपि भक्तीस्यातां, यदि स्यातां तदानुकूल्येनेति विशेषणविरोधः स्यात्तत्राह-भङ्ग्येति। य खलु भयद्वेषयोरपि मङ्गलं विदधीत, तस्मिन्नपि को वा परमपामरो भक्तिं न कुर्व्वीत, प्रत्युत तौ विदधीतेति परिपाट्येत्यर्थः। युञ्ज्यादिति सम्भावनायामेव लिङ् विधानात्, न तु विधौ, भयद्वेषयोर्विधातुमशक्यत्वात्। यद्यपि श्रीकृष्णपरमेवेदं वाक्यं तथापि तदशांदौ च तारतम्येन ज्ञेयम्।"

इसलिए चाहे सुदृढ़ वैर भाव से या वैरहीन भाव से, भय से, स्नेह से अथवा कामना से, कैसे भी हो, भगवान् में अपना मन पूर्ण रूप से लगा देना चाहिये। भगवान् की दृष्टि से इन भावों मेंकोई भेद नहीं है।

यहाँ श्री नारद वाक्य से भय, द्वेष के भी विहित होने से इन दोनों के भी भक्ति हो जाने से उत्तमा भक्ति लक्षण में आनुकूल्यमय शब्द के साथ विरोध होता है। इस आशंका के निरास करने के लिए कहते हैं– भङ्गी क्रम से अर्थात् विशेष रीति से। जो भय, द्वेषादि करने वाले को भी मङ्गल प्रदान करते हैं, उन परमेश्वर में कौन परम पामर व्यक्ति भक्ति नहीं करेगा?

भय, द्वेष करने का अभिप्राय न होने पर भी भय, द्वेष करे। क्योंकि भय, द्वेष से भी भगवत् प्राप्ति की सम्भावना है। यानि कि इस परिपाटी से उत्तमा भक्ति का वर्णन श्री नारदजी ने किया है।

यहाँ पर 'युञ्ज्यात्' में सम्भावना अर्थ में लिङ् लकार का विधान है, विधि अर्थ में नहीं। भय, द्वेष का विधान नहीं कर सकते हैं। यद्यपि यह वाक्य श्रीकृष्ण पर है तथापि उनके अंशों में भी तारतम्य से जानना होगा।

श्रीमद्भागवत के ७/१/२६ में उक्त है–

यथावैरानुबन्धेन मर्त्यस्तनमयतामियात्।
न तथा भक्ति योगेन इति में निश्चता मतिः॥

"मेरा तो ऐसा दृढ़ निश्चय है कि मनुष्य वैरभाव से भगवान् में जितना तन्मय हो जाता है, उतना भक्ति योग से नहीं होता।" श्रीनारद जी ने श्रीयुधिष्ठिर को उपरोक्त वचन कहे थे। भावमय कामद्वेषादि के द्वारा चित्त का आवेश अधिक मात्रा में होता है, इसकी अपेक्षा श्लोकोक्त भक्तियेग से चित्त का कृष्ण में आवेश अत्यन्त न्यून है। इस प्रकार यह वैधी भक्ति है, इसको ध्वनित करने के लिए ही इस प्रकार कहा गया है। भावमय उपायों में से निन्दित होने पर भी वैरानुबन्ध विधिमय भक्तियोग से भी श्रेष्ठ है।

तन्मयता शब्द का अर्थ है— आविष्टता, जैसे कामुक व्यक्ति स्त्री में आसक्त होता है, इस प्रकार जानना होगा। फिर तो सबके वन्दनीय रागात्मिका भक्ति का कहना ही क्या?

शङ्का करते हैं कि भक्ति, द्वेष का निरास होने पर भी श्लोकोक्त स्नेह शब्द की गणना शुद्ध रागात्मिकाभक्ति में क्यों नहीं की गयी है? इसके लिये कहते हैं— स्नेहस्येति। स्नेह सख्य वाचि है। पाण्डवों का श्रीकृष्ण के प्रति स्नेह-सख्यमय रागात्मिका में पर्यवसान होता है, उस प्रकार व्यवहार सुनने में आता है। तथापि ऐश्वर्य ज्ञान प्रधान होने के कारण, विधि मार्ग में ही उसका प्राधान्य है, शुद्ध रागानुगा में उसका उपयोग नहीं होता है।

यदि स्नेह शब्द से प्रेम सामान्य का बोध होता है, तब उसका विशेष कथन न होने के कारण, उस उस क्रियाओं का निर्द्धारण न होने से अनुकरण करना सम्भव नहीं है। इसलिए रागानुगा नामक साधन में वह उपजीव्य न होने से उसका उपयोग नहीं होगा।

स्नेह शब्द से प्रेम विशेष का ग्रहण होने पर सम्बन्ध रूपा में ही वह पर्यवसित हो जायेगा, ऐसा होने पर पुनरुक्त होगा।

"वयं भक्त्या" इस प्रकार कथन पारिशेष्य प्रमाण से वैधी में पर्यवसित होता है। पारिशेष्य प्रमाण के अनुसार श्रीनारद की भक्ति वैधी में पर्यवसित है, इसलिए रागात्मिका में उसका भी उपयोग नहीं है। श्री नारद जी ऐश्वर्य ज्ञान प्रधान हैं। पूर्व जन्म में उन्होंने महत् गणों के उपदेश से ऐश्वर्य ज्ञान प्रधान वैधी भक्ति लाभ किये थे। इस प्रकार समझना चाहिये॥ २७७॥

**यदरीणां प्रियाणाञ्च प्राप्यमेकमिवोदितम्।**
**तद्ब्रह्मकृष्णयोरैक्यात् किरणार्कोपमाजुषोः॥ (२७८)**

### अनुवाद

शत्रुओं को और प्रियजनों को एक ही श्रीकृष्ण की प्राप्ति का जो कथन हुआ है वह किरण और सूर्य के ऐक्य के उपमा से ब्रह्म और कृष्ण में ऐक्य की तरह कथित हुआ है॥ २७८॥

### दुर्गमसङ्गमनी

तत्र तद्गतिं गता (भ.र.सि. १/२/२७४, भा. ७/१/२९) इत्युक्तौ सन्देहान्तरं निरस्यति— यदरीणामिति। प्रियाणां श्रीगोपीवृष्ण्यादीनाम्, अनयोः किरणार्कोपमाने ब्रह्मसंहिता यथा—

यस्य प्रभा प्रभवतो जगदण्डकोटि-कोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद्ब्रह्मनिष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि॥ इति,

श्रीभगवद्गीता च (१४/२७)– "ब्रह्मणो हि प्रतिष्ठाहमि"ति। (प्रतिष्ठा आश्रय:)। तथैव स्वामिटीका च दृश्या। तच्च युक्तम्, एकस्यापि तस्याधिकारिविशेषं प्राप्य सविशेषाकारभगवत्त्वेनोदयाद् घनत्वं, निर्विशेषाकारब्रह्मत्वेनोदयादघनत्वमिति, प्रभास्थानीयत्वात् प्रभा इति ज्ञेयम्। अतएवात्मारामाणामपि भगवद्गुणेनाकर्षणमुपपद्यते। विशेषजिज्ञासा चेच्छ्रीभगवत्सन्दर्भो दृश्य:॥ २७८॥

## अनुवाद

भा. (७/१/२९) में उक्त है–

कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मन:।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गता:॥

अनेकों मनुष्य काम से, द्वेष से, भय से और स्नेह से अपने मन को भगवान् में लगाकर एवं अपने सारे पाप धोकर उसी प्रकार भगवान को प्राप्त हुए हैं, जैसे भक्त भक्ति से।

'तद्गतिं गता' उनकी गति को प्राप्त किये थे। इस कथन में जो सन्देह है, उसका निरसन करने के लिए कहते हैं– यदरीणां प्रियाणाञ्च इत्यादि। प्रियाणाम् अर्थात् श्रीगोपी, वृष्णी आदि जन।

ब्रह्म और कृष्ण के ऐक्य को किरण व सूर्य के ऐक्य के द्वारा ब्रह्म संहिता में निम्न प्रकार दिखाया गया है–

यस्य प्रभा प्रभवतो जगदण्डकोटि कोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि॥

कोटि कोटि ब्रह्माण्ड में पृथिवी, जल, तेज, वायु एवं आकाशादि पृथक् पृथक् भूत रूप में जो विभूति है, उससे भिन्न विभूति रूप निष्कल, अनन्त एवं अशेष प्रकार से अवस्थित ब्रह्म भी जिन प्रभावान् आदि पुरुष गोविन्द की देह प्रभा है, मैं उनका भजन करता हूँ।

श्रीमद्भगवद्गीता १४/२७ में भी उक्त है– "ब्रह्मणोहि प्रतिष्ठाहम्" मैं ब्रह्म की प्रतिष्ठा हूँ। प्रतिष्ठा शब्द का अर्थ है– आश्रय। स्वामीजी की टीका देखना आवश्यक है। यह ठीक ही है– एक तत्त्व अधिकारी विशेष को प्राप्त कर सविशेषाकार भगवत्त्व रूप से उदय होने पर घन है और निर्विशेषाकार ब्रह्मत्व रूप से उदय होने के कारण अघन है। प्रभा स्थानीय होने के कारण प्रभा है। इस प्रकार जानना होगा। अतएव आत्माराम मुनिगणों का भी आकर्षण श्रीभगवद्गुणों से होता है। विशेष जिज्ञासा होने पर श्री भगवत्सन्दर्भ देखना आवश्यक है॥ २७८॥

## अर्थरत्नाल्प-दीपिका

प्रियाणां गोप्यादीनां चतुर्विधभक्तानां प्राप्यमेकमिवोदितं 'बहवस्तद्गतिं गता' इत्यत्र॥ २७८॥

## अनुवाद

बहवस्तद्गतिमित्यादि श्लोक को समझाने के लिये 'यदरीणामित्यादि पद्य जो कहा गया है उसमें 'प्रियाणाम्' शब्द से प्रिया गोपी प्रभृति चतुर्विध भक्तों का प्राप्य एक ही कहा गया है॥ २७८॥

## भक्तिसार-प्रदर्शिनी

तत्र 'बहवस्तद्गतिं गता' इत्युक्तौ सन्देहान्तरं निरस्यति— यदरीणामिति। अरीणां प्रियाणाञ्च प्राप्यमेकमिव मुनिना यदुक्तं, तद्ब्रह्मकृष्णयोरैक्यात्। वस्तुतस्तु स्वरूपद्वयाभावेन द्वयोरैक्येऽपि रसमयस्य कृष्णस्य माधुर्याधिक्यादेव ब्रह्मणः सकाशादाधिक्यमस्त्येव। अतएवारेः सकाशादपि प्रियाणामाधिक्यं स्वयमेव। सिद्धमेतदेवाभिन्नयोरपि सूर्यतत्किरणयोर्मध्ये किरणापेक्षया माहात्म्यादिबहुतरगुणेनाधिकस्य सूर्यस्य दृष्टान्तेन द्रढयति— किरणार्कोपमाजुषोरिति। अनयोः किरणार्कोपमाने ब्रह्मसंहिता (५/४०) यथा—

यस्य प्रभा प्रभवतो जगदण्डकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद्ब्रह्मनिष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि॥

अस्यार्थो यथा— प्रभवतो यस्य गोविन्दस्य तद्ब्रह्म प्रभा, ब्रह्म कीदृशम्? ब्रह्माण्डकोटिकोटिषु अशेषपृथ्वीजलादिविभूतेः सकाशाद् भिन्नम्। तदपि अशेषभूतं अशेषविभूतिस्वरूपम्। निष्कलं कला अंशस्तद्रहितम्।

श्रीभगवद्गीता च (१४/२७)— "ब्रह्मणो हि प्रतिष्ठाहमि"ति। तथैव स्वामिटीका च दृश्या। प्रभास्थानीयत्वात् प्रभेति ज्ञेयम्। अतएवात्मारामाणामपि भगवद्गुणैराकर्षणमुपपद्यते॥ २७८॥

## अनुवाद

भा. (७/१/२९-३०) में उक्त है—

कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥

अनेकों मनुष्य काम से, द्वेष से, भय से और स्नेह से अपने मन को भगवान् में लगाकर एवं अपने सारे पाप धोकर उसी प्रकार भगवान को प्राप्त हुए हैं, जैसे भक्त भक्ति से।

'तद्गतिं गता' उनकी गति को प्राप्त किये थे। इस कथन में जो सन्देह है, उसका निरसन करने के लिए कहते हैं— यदरीणां इत्यादि। मुनि के द्वारा शत्रुओं और प्रियजनों की प्राप्ति के साम्य का कथन ब्रह्म और कृष्ण के ऐक्य से हुआ है। वस्तुतः स्वरूपद्वय का अभाव होने के कारण दोनों में ऐक्य होने पर भी रसमय कृष्ण के माधुर्य का आधिक्य होने से ब्रह्म से कृष्ण का आधिक्य है। सुतरां शत्रुओं की अपेक्षा प्रियजनों का आधिक्य स्वयं सिद्ध हुआ। इसी को ग्रन्थकार अभिन्न होने पर भी सूर्य एवं उसके किरण के मध्य में, किरण की अपेक्षा सूर्य के माहात्म्यादि बहुतर गुण को "किरणार्कोपमाजुषोरित्यादि" श्लोक से व्यक्त किये हैं।

ब्रह्म और कृष्ण के ऐक्य को किरण व सूर्य के ऐक्य के द्वारा ब्रह्म संहिता में निम्न प्रकार दिखाया गया है—

यस्य प्रभा प्रभवतो जगदण्डकोटि कोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि॥

कोटि कोटि ब्रह्माण्ड में पृथिवी, जल, तेज, वायु एवं आकाशादि पृथक् पृथक् भूत रूप में जो

विभूति है, उससे भिन्न विभूति रूप निष्कल, अनन्त एवं अशेष प्रकार से अवस्थित ब्रह्म भी जिन प्रभावान् आदि पुरुष गोविन्द की देह प्रभा है, मैं उनका भजन करता हूँ।

इसका अर्थ इस प्रकार है–

प्रभाशील गोविन्द की प्रभा ब्रह्म हैं। ब्रह्म किस प्रकार है? कोटि कोटि ब्रह्माण्ड की अशेष पृथिवी जलादि विभूति से भिन्न है। ऐसा होने पर भी अशेष विभूति स्वरूप हैं। निष्कलं अर्थात् कला अंश रहित है।

श्री भगवद् गीता में भी कहा गया है (१४/२७) ब्रह्म की प्रतिष्ठा अर्थात् आश्रय मैं ही हूँ। श्रीधरस्वामीपाद की टीका देखना आवश्यक है। प्रभा स्थानीय होने से ब्रह्म को प्रभा जानना है। इसलिए भगवद्गुणों के द्वारा आत्मारामगण भी आकृष्ट होते हैं॥ २७८॥

**ब्रह्मण्येव लयं यान्ति प्रायेण रिपवो हरेः।**
**केचित् प्राप्यापि सारूप्याभासं मज्जन्ति तत्सुखे॥ (२७९)**

### अनुवाद

श्रीहरि के शत्रुगण प्रायः करके ब्रह्म में लीन होते हैं। पूतना, शृगाल वासुदेवादि कुछ व्यक्ति सारूप्याभास को प्राप्त कर ब्रह्म सुख में मग्न होते हैं॥ २७९॥

### दुर्गमसङ्गमनी

अरीणां ब्रह्मगतिमेव विवृणोति– ब्रह्मण्येवेति॥ २७९॥

### अनुवाद

शत्रुओं की ब्रह्म गति का वर्णन करते हैं,– ब्रह्मण्येवेति के द्वारा॥ २७९॥

### अर्थरत्नाल्प-दीपिका

अरीणां ब्रह्मगतिं विवृणोति– ब्रह्मण्येवेति। प्रायेणेत्यस्य विवरणं केचिदित्यर्द्धकेन। केचित् पूतनादयः तत्सुखे ब्रह्मसुखे॥ २७९॥

### अनुवाद

श्रीहरि के शत्रुगण ब्रह्मगति को प्राप्त करते हैं, इसी का वर्णन 'ब्रह्मण्येवेति' श्लोक से करते हैं। प्रायेण– प्रायः करके हरि के रिपुगण ब्रह्म में लय को प्राप्त होते हैं। केचित् अर्थात् पूतनादि सारूप्याभास को प्राप्त करके भी ब्रह्म सुख में निमग्न होते हैं॥ २७९॥

### भक्तिसार-प्रदर्शिनी

अरीणां ब्रह्मगतिमेव विवृणोति– अरीणां मध्ये केचिद्धरेः रिपवः ब्रह्मण्येव लयं यान्ति। केचिच्छृगालवासुदेवादयः सारूप्याभासं प्राप्यापि तत्सुखे मज्जन्ति॥ २७९॥

### अनुवाद

शत्रुओं के ब्रह्मगति का वर्णन करते हैं। शत्रुओं के मध्य में हरि के कुछ शत्रु ब्रह्म में लीन होते हैं

तथा कुछ शृगाल-वासुदेवादि सारूप्याभास को प्राप्त कर ब्रह्मसुख में निमग्न होते हैं॥ २७९॥

**तथा च ब्रह्माण्डपुराणे—**

**सिद्धलोकस्तु तमसः पारे यत्र वसन्ति हि।**
**सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हताः॥ इति। (२८०)**

## अनुवाद

ब्रह्माण्ड पुराण में शत्रुओं की गति का प्रमाण इस प्रकार है—

प्रकृति के उस पार में सिद्ध लोक हैं। उस सिद्ध लोक में सिद्ध मुनिगण एवं श्रीहरि के द्वारा मारे गये दैत्यगण ब्रह्म सुख में निमग्न होकर रहते हैं॥ २८०॥

## दुर्गमसङ्गमनी

तत्र पूर्वस्य प्रमाणं निभृतमरुदित्याद्यर्द्धं वक्ष्यत (१/२/२८२) इत्यभिप्रायेणोत्तरस्याह— तथा चेति। तमसः प्रकृतेः॥ २८०॥

## अनुवाद

श्रीहरि के शत्रुगण ब्रह्म में लीन होते हैं— इसका प्रमाण भा. १०/८७/२३ के निभृत इत्यादि आधे पद्य से आगे कहेंगे।

कुछ लोग भगवल्लोक को प्राप्त करके भी ब्रह्मसुख में निमग्न होते हैं, उसी को यहाँ पर कहते हैं, तथा च ब्रह्माण्डपुराणे श्लोक से। तमसः अर्थात् तमोरूपी प्रकृति के बाद सिद्ध लोक है, वहाँ पर सिद्ध मुनि लोक एवं दैत्यगण, जिन लोकों को श्रीहरि ने मारा है, वे सब ब्रह्म सुख में निमग्न होकर निवास करते रहते हैं॥ २८०॥

## अर्थरत्नाल्प-दीपिका

तमसः प्रकृतेः॥ २८०॥

## अनुवाद

तमस का अभिप्राय यहाँ पर प्रकृति से है॥ २८०॥

## भक्तिसार-प्रदर्शिनी

तत्र ब्रह्मणि लयप्राप्तानां प्रमाणं निभृतमरुदित्यर्द्धश्लोकेन वक्ष्यते इत्यभिप्रायेण प्राप्तसालोक्यानां प्रमाणमाह— तथा चेति। तमसः प्रकृतेः, सिद्धा मुनयः। तथा दैत्याश्च ब्रह्मसुखे मग्नाः सन्तः तत्र वसन्ति॥ २८०॥

## अनुवाद

ब्रह्म में विलय प्राप्त का प्रमाण "निभृतम्" इस अर्द्ध श्लोक के द्वारा आगे कहेंगे, इस अभिप्राय से सालोक्य प्राप्त व्यक्तियों का प्रमाण कहते हैं— तथा च इत्यादि श्लोक।

प्रकृति का अपर नाम तमः है। मुनियों का नाम सिद्ध है। श्रीहरि के द्वारा बध किये गये दैत्यगण, एवं सिद्ध मुनिगण उस सिद्ध लोक में ब्रह्म सुख में निमग्न होकर रहते हैं॥ २८०॥

**रागबन्धेन केनापि तं भजन्तो व्रजन्त्यमी।**
**अङ्घ्रिपद्मसुधाः प्रेमरूपास्तस्य प्रियाजनाः॥ (२८१)**

### अनुवाद

श्रीभगवान् के प्रिय व्यक्तिगण किसी अनिर्वचनीय अनुराग से श्रीभगवान् का भजन करते हैं, इसलिए वे श्रीभगवान् के चरण कमल के प्रेमरूप सुधा को प्राप्त करते हैं॥ २८१॥

### दुर्गमसङ्गमनी

तत्र प्रियाणां (गोपीनां) विशेषमाह— रागबन्धेनेति॥ २८१॥

### अनुवाद

उसके मध्य में प्रिया गोपियों की विशेषता को कहते हैं, कि वे किसी अनिर्वचनीय अनुराग के साथ श्रीहरि का भजन करके श्रीहरि के चरण कमल के प्रेमरूप सुधा को प्राप्त करती रहती हैं॥ २८१॥

### अर्थरत्नाल्प-दीपिका

चतुर्णां मध्ये श्रीगोपीनां श्रीकृष्णप्राप्तिमाह— रागबन्धेनेति॥ २८१॥

### अनुवाद

उन चार के मध्य में गोपियों का श्रीकृष्ण प्राप्ति को कहते हैं—

श्रीहरि के प्रियजन गोपीगण भजन करके श्रीहरि के श्री चरणकमल की प्रेमरूप सुधा को प्राप्त कर लेती हैं॥ २८१॥

### भक्तिसार-प्रदर्शिनी

तत्र गोपीनां विशेषमाह— रागबन्धेनेति। तस्य प्रिया जनास्तं भजन्तः सन्तस्तदङ्घ्रिपद्मसुधा व्रजन्ति प्राप्नुवन्ति॥ २८१॥

### अनुवाद

उनके मध्य में गोपियों के वैशिष्ट्य का वर्णन करते हैं। उनके प्रियजन अनुराग से उनका भजन करते हुए उनके चरण कमल की सुधा को प्राप्त करते हैं॥ २८१॥

**तथा हि श्रीदशमे (भा. १०/८७/२३)—**

**निभृतमरुन्मनोक्षदृढयोगयुजो हृदि य-**
**न्मुनय उपासते तदरयोऽपि ययुः स्मरणात्।**
**स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधिया,**
**वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥ इति। (२८२)**

## अनुवाद

मन, प्राण, इन्द्रिय संयम पूर्वक दृढ़ योग युक्त मुनिगण हृदय में उपासना के द्वारा जिस तत्व को प्राप्त करते हैं, शत्रुगण उस तत्व को निरन्तर अनिष्ट चिन्तन से आपका स्मरण करके प्राप्त करते हैं। और अनन्त के शरीर की भाँति आपके भुजदण्ड के मध्य में विषक्त बुद्धि सम्पन्न कामासक्त गोपीगण एवं अपरिच्छिन्न रूप में अवलोकनकारी श्रुत्यभिमानी देवता हम सब भी आपके चरणारविन्द को प्राप्त किये हैं, कारण आपके निकट सब ही व्यक्ति समान हैं॥ २८२॥

## दुर्गमसङ्गमनी

तत्र ब्रह्मण्येवेति पद्यार्द्धेन रागबन्धेनेति पद्येन च दशमस्थश्रुतिवाक्यं तुलयति— तथा हीति। निभृतेति प्रतियुग्मान्तःस्थस्यापिशब्दस्य द्वयेन युग्मद्वयं पृथगवगम्यते। ततश्च हृदि यद्ब्रह्माख्यं तत्त्वं मुनय उपासते, तदरयोऽपि स्मरणाद् ययुः। स्त्रियः श्रीगोपसुन्दर्य्यः, तासामेव तथाप्रसिद्धेः। ता अङ्घ्रिसरोजसुधास्तत्प्रेममयमाधुर्य्याणि ययुर्वयमपि समदृशस्ताभिः समभावाः सत्यः समास्ताभिस्तुल्यतां प्राप्ता व्यूहान्तरेण गोप्यो भूत्वा ते तवाङ्घ्रिसरोजसुधाः ययिमेत्यर्थः। अर्थविशेषस्त्वस्य दशमटिप्पण्यां वैष्णवतोषणीनाम्न्यां दृश्यः।

तथा च बृहद्वामनपुराणे श्रुतिभिः प्रार्थ्यगोपिकात्वं प्राप्तमिति प्रसिद्धिः। (भ.र.सि. १/२/२८१) कारिकायां 'भजन्त' इत्यादिना जनसामान्यनिर्देशस्तु एतदुपलक्षणतया कृतः। तदेवं स्त्रिय इत्यनेन वक्ष्यमाणा कामरूपा, वयमित्यनेन कामानुगा, चोट्टङ्किता। तदेतदनुसारेण वृष्ण्यादीनामपि तत्प्राप्तिविशेषो ज्ञेयः॥ २८२॥

## अनुवाद

ब्रह्मण्येव लयं यान्ति प्रायेण रिपवो हरेः— प्रायःकर श्रीहरि के शत्रुगण ब्रह्म में विलय प्राप्त होते हैं। रागबन्धेन केनापि तं भजन्तो व्रजन्त्यमी— अनिर्वचनीय राग बन्ध के द्वारा श्रीहरि का भजन करके उनके चरण कमल को प्राप्त किये हैं।

इन दोनों वाक्यों के साथ श्रुति वाक्य की तुलना करते हैं— तथाहीति।

निभृत पङ्क्ति में तदरयोऽपि में अपि शब्द तथा वयमपि पङ्क्ति में अपि शब्द इन अपि शब्द युगल के द्वारा दो पृथक् वाक्य की सूचना की गयी है।

अतएव अर्थ इस प्रकार होता है— जिस ब्रह्माख्य तत्त्व की उपासना हृदय में मुनिगण करते हैं, भगवान के शत्रुगण भी उसी तत्त्व को स्मरण करके प्राप्त किये हैं।

स्त्रियः अर्थात् श्रीगोपसुन्दरीवृन्द। जैसाकि प्रकरण से स्पष्ट है। उन सबने आपके चरण कमल की सुधा अर्थात् आपके प्रेममय माधुर्य को प्राप्त किया है। हम सब श्रुतियाँ भी गोपियों के समभावापन्न होकर उनके समान होकर व्यूहान्तर को प्राप्तकर गोपी देह प्राप्त कर तुम्हारे श्रीचरणकमल की सुधा को प्राप्त कर लेंगी।

इस पद्य के अर्थ विशेष को श्रीमद्भागवत की टीका दशम टिप्पणी वैष्णव तोषणी में देखना

आवश्यक है।

बृहद् वामन पुराण में भी उक्त है कि श्रुतियों ने अपने को गोपिका स्वरूप प्राप्त करने की प्रार्थना की व उसे प्राप्त किया।

श्रीभक्तिरसामृतसिन्धु (१/२/२८१) कारिका में उक्त है– "राग बन्धेन केनापितं भजन्तो ब्रजन्त्यमी" इसमें जन सामान्य का निर्देश होने से उपलक्षण किया गया है। अतएव 'स्त्रिय 'इसके द्वारा अग्रिम ग्रन्थ में कहेंगे– कामरूपा, 'वयम्' हम सब के द्वारा कामानुगा को जानना होगा। इसके अनुसार वृष्णि आदि का भी कृष्ण प्राप्ति विशेष को जानना होगा॥ २८२॥

## अर्थरत्नाल्प-दीपिका

निभृतेति– स्त्रियन्तर नित्यप्रेयस्यः श्रीराधादयः ते तवाङ्घ्रिसरोजसुधास्तदीयस्पर्शमाधुर्य्याणि यान्ति, वयमपि समदृशः श्रीमन्नन्दव्रजगोपीभावानुगतभावाः सत्यः समास्तु तुल्यरूपाः सत्यो ययिम॥ २८२॥

## अनुवाद

स्त्रियः शब्द का अर्थ नित्य प्रेयसी श्रीराधा आदि है। उन्होंने तुम्हारी चरण कमल सुधा अर्थात् चरणकमल स्पर्श माधुर्य की प्राप्ति की है। हम सब भी समदृश अर्थात् श्रीमन्नन्द व्रज गोपीभाव के अनुगत भावापन्न होकर, तुल्य रूपा होकर श्रीचरण सुधा को प्राप्त करेंगी॥ २८२॥

## भक्तिसार-प्रदर्शिनी

तत्र ब्रह्मण्येव लयमिति पद्यार्धेन रागबन्धेनेति पद्येन च सह दशमस्थश्रुतिवाक्यं तुलयति– निभृतेति प्रतियुग्मान्तःस्थस्यापिशब्दस्य द्वयेन युग्मद्वयं पृथगवगम्यते। ततश्च निभृतैर्नितरां धृतैरर्थाद्धारणादिना वशीकृतैर्मरुन्मनोक्षैः करणैर्दृढयोगयुक्ता मुनयः यद्ब्रह्माख्यं तत्वमुपासतेमात्रं, प्राप्तौ तु सम्भावना एव, तदरयोऽपि स्मरणाद् ययुः प्रापुः। उरगशरीरतुल्ये कृष्णस्य भुजदण्डे विषक्तधियः। स्त्रियः श्रीगोपसुन्दर्य्यः, तासामेव तथाप्रसिद्धेः। ता अङ्घ्रिसरोजसुधास्तत्प्रेममयमाधुर्य्याणि ययुर्वयमपि समदृशस्ताभिः समभावाः सत्यः समास्ताभिस्तुल्यतां प्राप्ता व्यूहान्तरेण गोप्यो भूत्वा ते तवाङ्घ्रिसरोजसुधाः ययिमेत्यर्थः। अर्थविशेषस्त्वस्य दशमटिप्पण्यां वैष्णवतोषणीनाम्न्यां दृश्यः।

तथा च बृहद्वामनपुराणे श्रुतिभिः प्रार्थ्यगोपिकात्वं प्राप्तमिति प्रसिद्धिः। (भ.र.सि. १/२/२८१) कारिकायां 'भजन्त' इत्यादिना जनसामान्यनिर्देशस्तु एतदुपलक्षणतया कृतः। तदेवं स्त्रिय इत्यनेन वक्ष्यमाणा कामरूपा, वयमित्यनेन कामानुगा, चोट्टङ्किता। तदेतदनुसारेण वृष्ण्यादीनामपि तत्प्राप्तिविशेषो ज्ञेयः॥ २८२॥

## अनुवाद

ब्रह्मण्येव लयं यान्ति प्रायेण रिपवो हरेः– प्रायःकर श्रीहरि के शत्रुगण ब्रह्म में विलय प्राप्त होते हैं। रागबन्धेन केनापि तं भजन्तो व्रजन्त्यमी– अनिर्वचनीय राग बन्ध के द्वारा श्रीहरि का भजन करके उनके चरण कमल को प्राप्त किये हैं।

इन दोनों वाक्यों के साथ श्रुति वाक्य की तुलना करते हैं— तथाहीति।

निभृत पङ्क्ति में तदरयोऽपि में अपि शब्द तथा वयमपि पङ्क्ति में अपि शब्द इन अपि शब्द युगल के द्वारा दो पृथक् वाक्य की सूचना की गयी है।

अतएव अर्थ इस प्रकार होता है। धारणा आदि के द्वारा प्राण वायु मन इन्द्रिय को वशीभूत करके योग साधना के द्वारा मुनिगण जिस ब्रह्म तत्त्व की उपासना मात्र करते रहते हैं। वस्तु प्राप्ति करने की सम्भावना मात्र ही है। उस तत्त्व को शत्रुगण, शत्रुभाव से स्मरण कर प्राप्त कर लेते हैं। सर्प शरीर के समान श्रीकृष्ण के भुजदण्ड से आसक्त बुद्धि होकर गोपीगण ने श्रीकृष्ण को प्राप्त किया है। हम सब भी गोपीगण के आनुगत्य से श्रीकृष्ण के श्री चरण माधुर्य को प्राप्त कर सकेंगी।

इस पद्य के अर्थ विशेष को श्रीमद्भागवत की टीका दशम टिप्पणी वैष्णव तोषणी में देखना आवश्यक है।

बृहद् वामन पुराण में भी उक्त है कि श्रुतियों ने अपने को गोपिका स्वरूप प्राप्त करने की प्रार्थना की व उसे प्राप्त किया।

श्रीभक्तिरसामृतसिन्धु (१/२/२८१) कारिका में उक्त है— "राग बन्धेन केनापितं भजन्तो ब्रजन्त्यमी" इसमें जन सामान्य का निर्देश होने से उपलक्षण किया गया है। अतएव 'स्त्रिय 'इसके द्वारा अग्रिम ग्रन्थ में कहेंगे— कामरूपा, 'वयम्' हम सब के द्वारा कामानुगा को जानना होगा। इसके अनुसार वृष्णि आदि का भी कृष्ण प्राप्ति विशेष को जानना होगा॥ २८२॥

**तत्र कामरूपा—**

**सा कामरूपा सम्भोगतृष्णां या नयति स्वताम्।**
**यदस्यां कृष्णसौख्यार्थमेव केवलमुद्यमः॥　　(२८३)**

## अनुवाद

कामरूपा रागात्मिका भक्ति—

यहाँ पर कामरूपा का वर्णन हो रहा है,—

जो भक्ति सम्भोग तृष्णा को निज स्वरूपता अर्थात् प्रेममयता प्राप्त कराता है उसको कामरूपा रागात्मिका भक्ति कहते हैं, कारण इसमें केवल कृष्ण के सुख के लिये उद्यम होता है॥ २८३॥

## दुर्गमसङ्गमनी

तत्र कामरूपेति। कामोऽत्र स्वेष्टविषयरागात्मकप्रेमविशेषत्वेनाग्रे (१/२/२८४)निरूपणीयः, तदेवाह— सेति। सा प्रसिद्धा प्रेमरूपैवात्र कामरूपा, न त्वन्येत्यर्थः। या सम्भोगतृष्णां प्रसिद्धं काममपि स्वस्वरूपतां नयति। तत्र प्रेमरूपत्वे हेतुः— यदस्यां कृष्णसौख्यार्थमेव केवलमुद्यम इति॥ २८३॥

## अनुवाद

कामरूपा भक्ति का वर्णन करते हैं। काम शब्द का अर्थ है— निज इष्ट विषयक रागात्मक प्रेम विशेष, इसका निरूपण अग्रिम ग्रन्थ (१/२/२८४) में किया गया है। 'सा' अर्थात् प्रसिद्ध प्रेमरूपा ही

यहाँ पर कामरूपा है, न कि अन्य कोई। जो कामरूप से प्रसिद्ध सम्भोगतृष्णा को स्वरूपता अर्थात् प्रेममयता को प्राप्त कराती है। इसके प्रेमरूपत्व के कारण को कहते हैं– इस सम्भोगतृष्णा में केवल कृष्ण को सुखी करने के लिये सर्वत्र उद्यम देखा जाता है॥ २८३॥

### अर्थरत्नाल्प-दीपिका

सम्भोगे अङ्गसङ्गादौ तृष्णां स्वसुखाभिलाषं स्वतां रागात्मिकतां, यत् यतो हेतोः॥ २८३॥

### अनुवाद

जो भक्ति सम्भोग अर्थात् अङ्ग-सङ्गादि में तृष्णा अर्थात् स्वसुखाभिलाष को रागात्मिका रूप प्राप्त कराती है उसको कामरूपा कहते हैं, कारण इसमें केवल श्रीकृष्ण को सुखी करने के लिये उद्यम होता है॥ २८३॥

### भक्तिसार-प्रदर्शिनी

अत्र कामरूपेति– कामोऽत्र स्वेष्टविषयकरागात्मिकप्रेमविषेषत्वेनाग्रे निरूपणीयः। कामस्य वक्ष्यमाणप्रेमरूपत्वमेवात्राह– सा प्रसिद्धा प्रेमरूपैवात्र कामरूपा, न त्वन्यविधा इति कामरूपायाः लक्षणं ज्ञेयम्। तस्याः कार्यमाह– या कामत्वेन प्रसिद्धां सम्भोगतृष्णां स्वतां स्वरूपताम् अर्थात् प्रेममयतां नयति। तस्याः प्रेमरूपत्वे हेतुः– यद् यस्मादस्यां सम्भोगतृष्णायां सत्यां कृष्णसौख्यार्थमेव केवलं व्रजसुन्दरीणां सर्वत्रोद्यमः॥ २८३॥

### अनुवाद

अत्र कामरूपेति– काम यहाँ पर स्वेष्ट विषयक रागात्मिक प्रेम विशेष है। इसका वर्णन अग्रिम ग्रन्थ में किया जायेगा।

वक्ष्यमाण प्रेमरूप रूपी जो काम है उसी को यहाँ पर कह रहे हैं– 'सा' अर्थात् प्रसिद्ध प्रेमरूपा ही यहाँ पर कामरूपा है, न कि अन्य कोई। इस प्रकार से कामरूपा का लक्षण जानना चाहिये।

इस कामरूपा के कार्य को कहते हैं– जो कामरूप से प्रसिद्ध सम्भोगतृष्णा को स्वरूपता अर्थात् प्रेममयता को प्राप्त कराती है। इसके प्रेमरूपत्व के कारण को कहते हैं– इस सम्भोग तृष्णा में केवल कृष्ण को सुखी करने के लिए ब्रजसुन्दरियों का सर्वत्र उद्यम देखा जाता है॥ २८३॥

**इयन्तु व्रजदेवीषु सुप्रसिद्धा विराजते।**
**आसां प्रेमविशेषोऽयं प्राप्तः कामपि माधुरीम्।**
**तत्तत्क्रीडानिदानत्वात् काम इत्युच्यते बुधैः॥** (२८४)

### अनुवाद

यह कामरूपा भक्ति व्रजदेवियों में सुप्रसिद्ध रूप से विराजित है। इन सबों का प्रेम विशेष किसी प्रकार एक अनिर्वचनीय माधुरी को प्राप्त होकर उस उस क्रीड़ा का कारण होने से पण्डितगण इस प्रकार प्रेम विशेष को काम शब्द से कहते हैं॥ २८४॥

## दुर्गमसङ्गमनी

तदेव दर्शयति— इयं त्विति। सुप्रसिद्धत्वञ्च (भा. १०/३१/१९)— "यत्ते सुजातचरणाम्बुरुहं स्तनेषु" इत्यादितद्वाक्यदर्शनात्। नन्वत्र कामरूपाशब्देन कामात्मिकैवोच्यते; सा च क्रियैव, न तु भावः। ततस्तस्यास्तृष्णायाः स्वरूपतानयने सामर्थ्यं न स्यात्। उच्यते— क्रियापीयं मानसक्रियारूपेण स्वांशेन तत्र समर्था स्यात्, सा च मत्तोऽस्य सुखं स्यादिति भावनारूपेति ज्ञेयम्। एवमेव च स्वतानयनं सिध्यति॥ २८४॥

## अनुवाद

कामरूपा भक्ति को दिखाते हैं— इयं त्विति पद्य द्वारा।

यह कामरूपा भक्ति व्रजदेवियों में सुप्रसिद्ध है। श्रीमद्भागवत के १०/३१/१९ में इसका वर्णन इस प्रकार से है—

यत्ते सुजात चरणाम्बुरुहं स्तनेषु<br>
भीताः शनैः प्रिय दधीमहि कर्कशेषु।<br>
तेनाटवीमटसि तद् व्यथते न किंस्वित्<br>
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥

हे प्रिय! तुम्हारे सुकुमार चरण कमल हमारे कठिन वक्षोज से व्यथित न हो इस भय से धीरे-धीरे हम सब धारण करती रहती हैं, किन्तु तुम तो उसी चरण से वन भ्रमण करते रहते हो। वह पदाम्बुज क्या करिल काँटे, कङ्कड़ों से व्यथित नहीं होता है? कैसे व्यथित नहीं होगा? हमारे जीवन सर्वस्व तुम्हीं हो, उस भ्रमण वृत्तान्त को सोचकर हमारी बुद्धि घूमने लगती है, अर्थात् दुःखी होती है।

इस प्रकार वाक्य से देखने में आता है कि गोपियों में स्व सुख वाञ्छा नहीं है, केवल कृष्ण सुख के लिए ही उद्यम है।

यहाँ पर शङ्का है कि कामरूपा शब्द से कामात्मिका का बोध होता है, वह क्रिया मात्र है, भाव नहीं है, अतएव वह क्रिया सम्भोग तृष्णा को कामात्मिका रूप भक्ति को प्राप्त कराने में सक्षम नहीं है।

इसके लिये कहते हैं— यह क्रिया रूप होने पर भी मानस क्रिया रूप स्वांश के द्वारा सम्भोग तृष्णा को स्वस्वरूप अर्थात् भक्ति स्वरूप प्राप्त कराने में समर्थ है। इस भक्ति में भावना इस प्रकार होती है— मुझसे श्रीकृष्ण का सुख हो, यह भक्ति है, श्रीकृष्ण से मेरा सुख हो इस प्रकार भावना प्राकृत काम है। इस रीति से गोपिकागण की सम्भोग तृष्णा की स्वतानयन अर्थात् प्रेममयता सिद्ध होती है॥ २८४॥

## अर्थरत्नाल्प-दीपिका

सुप्रसिद्धत्वञ्च— यत्ते सुजातचरणाम्बुरुहं स्तनेषु (भा. १०/३१/१९) इत्यादि तद्वाक्यात्। "निजाङ्गमपि या गोप्यो ममेति समुपासते। ताभ्यः परं न मे पार्थ! निगूढप्रेमभाजनमिति" (आदिपुराणे) श्रीकृष्णवाक्यादेश्च।

ननु गोप्यः कामादित्यादिभिस्तासां प्रेमविशेषः कामशब्देन कथं नारदादिभिर्मृग्यते इत्यत्राह— आसामिति॥ २८४॥

### अनुवाद

श्रीमद्भागवत (१०/३१/१९) में श्रीगोपिकाओं का निम्न वाक्य सुप्रसिद्ध है—

यत्ते सुजात चरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु।
तेनाटवीमटसि तद् व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥

हे प्रिय! तुम्हारे सुकुमार चरण कमल हमारे कठिन वक्षोज से व्यथित न हो इस भय से धीरे-धीरे हम सब धारण करती रहती हैं, किन्तु तुम तो उसी चरण से वन भ्रमण करते रहते हो। वह पदाम्बुज क्या करिल काँटे, कङ्कड़ों से व्यथित नहीं होता है? कैसे व्यथित नहीं होगा? हमारे जीवन सर्वस्व तुम्हीं हो, उस भ्रमण वृत्तान्त को सोचकर हमारी बुद्धि घूमने लगती है, अर्थात् दुःखी होती है।

आदि पुराण में भी श्रीकृष्ण के वाक्य से सिद्ध है—

निजाङ्गमपि या गोप्यो ममेति समुपासते।
ताभ्यः परं न मे पार्थ! निगूढ़प्रेमभाजनमिति॥

गोपियां अपने अङ्गों (शरीर) को भी मेरा ही समझकर उसका भलीभाँति देख-रेख करती रहती हैं। हे पार्थ! उनको छोड़कर मेरे निगूढ़ प्रेम का और कोई पात्र नहीं है।

यहाँ प्रश्न उठता है कि पहले कहा गया है कि जिसको गोपियों ने काम से प्राप्त किया उसे ही नारदादि ने भी भक्ति से प्राप्त किया, यह कैसे सम्भव है क्योंकि गोपियों का काम प्रेम विशेष है? इसके लिए कहते हैं—

आसां प्रेमविशेषोऽयं प्राप्तः कामपि माधुरीम्।
तत्तत् क्रीड़ानिदानत्वात् काम इत्युच्यते बुधैः॥

इन सबों का प्रेम विशेष किसी प्रकार एक अनिर्वचनीय माधुरी को प्राप्त होकर उस उस क्रीड़ा का कारण होने से पण्डितगण इस प्रकार प्रेम विशेष को काम शब्द से कहते हैं॥ २८४॥

### भक्तिसार-प्रदर्शिनी

तदेव दर्शयति— इयन्त्विति। ननु तादृशप्रेमा कथं शास्त्रकारैः कामशब्देनोच्यते? तत्राह— तत्तदिति। कामजन्यतत्तत्क्रीड़ाया निदानत्वात् कारणत्वाद् बुधैः कामशब्देनोच्यते॥ २८४॥

### अनुवाद

कामात्मिका का वर्णन करते हैं, 'इयं तु' इत्यादि श्लोक से।

शङ्का है कि शास्त्रकार ने गोपियों के प्रेम को काम शब्द से क्यों कहते हैं? उसके उत्तर में ग्रन्थकार ने कहा कि तत् तत् क्रीडानिदानत्वात् — क्योंकि यह प्रेम गोपियों की काम परक क्रीडाओं का कारण है, इसलिये पण्डितगण इसे काम शब्द से कहते हैं॥ २८४॥

**तथा च तन्त्रे—**

**प्रेमैव गोपरामाणां काम इत्यगमत् प्रथाम्। इति। (२८५)**

### अनुवाद

तन्त्र में उक्त है—

गोपरामाओं का प्रेम काम नाम से प्रसिद्ध हुआ है॥ २८५॥

### अर्थरत्नाल्प-दीपिका

प्रथां ख्यातिम्॥ २८५॥

### अनुवाद

तन्त्र में उक्त है—

गोपरामाओं का प्रेम काम शब्द से प्रथां अर्थात् ख्याति (प्रसिद्धि) को प्राप्त हुआ है॥ २८५॥

**इत्युद्धवादयोऽप्येतं वाञ्छन्ति भगवत्प्रियाः॥ (२८६)**

### अनुवाद

इसी कारण से भगवत् प्रिय उद्धवादि भक्तगण भी इसकी वाञ्छा करते रहते हैं॥ २८६॥

### दुर्गमसङ्गमनी

(भा. १०/४७/५८)— "एताः परं तनुभृतः" इत्यनुसृत्य, तत्र हेतुमाह— इतीति। एतम् एतादृशेन कान्तत्वाभिमानरूपेण भावेनोपलक्षितो यः प्रेमातिशयस्तमेवेति ज्ञेयं; तादृशेन विशिष्टं तमिति तु न ज्ञेयं; मुमुक्षुमुक्तभक्तानामैकमत्ये भावभेदव्यवस्थानुपपत्तेः, तादृशप्रेमातिशयप्रापकं तद्भावं विनैव हि तत्प्रेमातिशयं वाञ्छन्तीत्येवोक्त्वा तत्प्राप्तिर्नाभिमतेति॥ २८६॥

### अनुवाद

श्रीमद्भागवत के १०/४७/५८ में उक्त है—

एताः परं तनुभृतो भुवि गोपवध्वो
गोविन्द एव निखिलात्मनि रूढ़भावाः।
वाञ्छन्ति यद् भवभियो मुनयो वयञ्च
किं ब्रह्मजन्मभिरनन्तकथारसस्य॥

इस पृथ्वी पर केवल इन गोपियों का ही शरीर धारण करना श्रेष्ठ एवं सफल है। क्योंकि ये सर्वात्मा भगवान् श्रीकृष्ण के परम प्रेममय दिव्य महाभाव में स्थित हो गयी हैं। प्रेम की यह ऊँची से ऊँची स्थिति संसार के भय से भीत मुमुक्षु जनों के लिए ही नहीं, अपितु बड़े-बड़े मुनियों, मुक्त पुरुषों तथा हम भक्तजनों के लिए भी अभी वाञ्छनीय ही है। हमें इसकी प्राप्ति नहीं हो सकी। सत्य है, जिन्हें भगवान् श्रीकृष्ण की लीला कथा के रस का स्वाद लग गया है उन्हें कुलीनता की द्विजाति समुचित संस्कार की

और बड़े-बड़े यज्ञादि में दीक्षित होने की क्या आवश्यकता है? अथवा यदि भगवान् की कथा का रस नहीं मिला, उसमें रुचि नहीं हुई, तो अनेक महाकल्पों तक बार-बार ब्रह्मा होने से ही क्या लाभ है?

इसी श्लोक को अनुसरण करके गोपियों का काम प्रेम है, इसके हेतु के लिये इतीति आदि कहते हैं। गोपियों का काम प्रेम है, इसी कारण से भगवत्प्रिय उद्धवादि भक्तगण इस प्रेम की वाञ्छा करते रहते हैं। यहाँ पर एतं शब्द से गोपियों के सदृश कान्तत्वाभिमानरूप भाव के द्वारा उपलक्षित जो प्रेमातिशय है उसी को जानना चाहिये, न कि गोपियों के समान कान्तत्वाभिमान विशिष्ट प्रेमातिशय को। कारण मुमुक्षु, मुक्त और भक्तगणों का समान अभिप्राय होने से भावभेद की जो व्यवस्था है वह सम्भव नहीं होगी। अतः उद्धवादि भगवत्प्रिय जन कान्तत्वाभिमानमय गोपीप्रेम के बिना ही तादृश प्रेमातिशय की वाञ्छा करते रहते हैं, यही उनका अभीष्ट है। कान्तत्वाभिमानमय गोपी प्रेम उनका अभिमत नहीं है॥ २८६॥

### अर्थरत्नाल्प-दीपिका

इति सम्भोगतृष्णायाः स्वतानयनाद्धेतोः॥ २८६॥

### अनुवाद

क्योंकि यह कामरूपा भक्ति सम्भोग तृष्णा को अपना स्वरूप प्राप्त करा देती है इसलिये उद्धवादि महाजन भी इस भक्ति की प्रार्थना करते हैं॥ २८६॥

### भक्तिसार-प्रदर्शिनी

'एताः परं तनुभृतः' इति दशमस्थपद्यमनुसृत्य कामस्य प्रेमरूपत्वे हेतुमाह— इतीति। इति हेतोर्भगवत्प्रिया उद्धवादयोऽपि॥ २८६॥

### अनुवाद

भागवत पुराण के दशम स्कन्ध के ४७/५८ श्लोक 'एताः परं तनुभृतः' का अनुसरण कर गोपियों का काम प्रेमरूप है, इस हेतु के कारण उद्धव आदि भक्तजन भी इस प्रेम की प्रार्थना करते रहते हैं॥ २८६॥

**कामप्राया रतिः किन्तु कुब्जायामेव सम्मता॥ (२८७)**

### अनुवाद

किन्तु पण्डितों के मत में कुब्जा में जो श्रीकृष्ण विषयक रति है, वह कामप्राया नामक रति है॥ २८७॥

### दुर्गमसङ्गमनी

कामप्रायेति (भा. १०/३१/१९)"यत्ते सुजात" इत्यादिशुद्धप्रेमरीत्यदर्शनात्। प्रत्युत (भा. १०/४२/९-१०)— उत्तरीयान्तमाकृष्येत्यादिकामरीतिमात्रदर्शनात्, तथापि रतिस्तदुपाधितयांशेन ज्ञेया॥ २८७॥

### अनुवाद

कामप्राया रति कुब्जा में है कारण–

यत्ते सुजात चरणाम्बुरुहं स्तनेषु
भीता: शनै: प्रिय दधीमहि कर्कशेषु।
तेनाटवीमटसि तद् व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां न:॥

हे प्रिय! तुम्हारे सुकुमार चरण कमल हमारे कठिन वक्षोज से व्यथित न हो इस भय से धीरे-धीरे हम सब धारण करती रहती हैं, किन्तु तुम तो उसी चरण से वन भ्रमण करते रहते हो। वह पदाम्बुज क्या करिल काँटे, कङ्कड़ों से व्यथित नहीं होता है? कैसे व्यथित नहीं होगा? हमारे जीवन सर्वस्व तुम्हीं हो, उस भ्रमण वृत्तान्त को सोचकर हमारी बुद्धि घूमने लगती है, अर्थात् दु:खी होती है।

इस प्रकार की शुद्ध प्रेम रीति कुब्जा में देखने में नहीं आती। बल्कि (भा. १०/४२/९-१०) के अनुसार काम रीति ही दिखाई देती है।

ततो रूप गुणौदार्य सम्पन्ना प्राह केशवम्।
उत्तरोयान्तमाकृष्य स्मयन्ती जातहृच्छया॥

उसी समय कुब्जा रूप गुण और उदारता से सम्पन्न हो गयी। उसके मन में भगवान् के मिलने की कामना जाग उठी। उसने दुपट्टा का छोर पकड़कर मुस्कराते हुये कहा–

एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे।
त्वयोन्मथितचित्ताया: प्रसीद पुरुषार्षभ॥

वीर शिरोमणि! आईये घर चलें। अब मैं आपको यहाँ नहीं छोड़ सकती। क्योंकि आपने मेरे चित्त को मथ डाला है। पुरुषोत्तम मुझ दासी पर प्रसन्न होइये॥

कुब्जा के इस प्रकार के कथन से उसमें काम रीति देखने में आती है, तथापि रति है, कृष्ण विषयक उपाधि रूप से एक अंश में है। यह जानना होगा॥ २८७॥

### अर्थरत्नाल्प-दीपिका

कामप्राया सम्भोगेच्छाबहुला। साक्षात् कृष्णात् सुखाभिलाषो रत्या न विरुध्यते, अत: कामप्रायेति रतेर्विशेषणं कुब्जायामेव, न तु कामशब्दभ्रमात्तास्वित्यर्थ:॥ २८७॥

### अनुवाद

सम्भोगेच्छा बहुला रति कुब्जा में है। इसे कामप्राया कहते हैं। यहाँ पर साक्षात् कृष्ण से स्वसुखाभिलाष रति का विरुद्ध नहीं है, इसलिये कामप्राया रति का विशेषण कुब्जा में ही घटता है। काम शब्द के प्रयोग को देखकर ब्रजगोपियों की रति को भ्रम से नहीं समझना चाहिये॥ २८७॥

### भक्तिसार-प्रदर्शिनी

कामप्रायेति "यत्ते सुजात" इत्यादिशुद्धप्रेमरीत्यदर्शनात्। प्रत्युत (भा. १०/४२/९)–

उत्तरीयान्तमाकृष्येत्यादिकामरीतिमात्रदर्शनात्। तथापि रतिः कृष्णविषयकत्वादंशेन ज्ञेया॥ २८७॥

## अनुवाद

कामप्राया रति कुब्जा में है कारण—

यत्ते सुजात चरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु।
तेनाटवीमटसि तद् व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥

हे प्रिय! तुम्हारे सुकुमार चरण कमल हमारे कठिन वक्षोज से व्यथित न हो इस भय से धीरे-धीरे हम सब धारण करती रहती हैं, किन्तु तुम तो उसी चरण से वन भ्रमण करते रहते हो। वह पदाम्बुज क्या करिल काँटे, कङ्कड़ों से व्यथित नहीं होता है? कैसे व्यथित नहीं होगा? हमारे जीवन सर्वस्व तुम्हीं हो, उस भ्रमण वृत्तान्त को सोचकर हमारी बुद्धि घूमने लगती है, अर्थात् दुःखी होती है।

इस प्रकार की शुद्ध प्रेम रीति कुब्जा में देखने में नहीं आती। बल्कि (भा. १०/४२/९-१०) के अनुसार काम रीति ही दिखाई देती है।

ततो रूप गुणौदार्य सम्पन्ना प्राह केशवम्।
उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया॥

उसी समय कुब्जा रूप गुण और उदारता से सम्पन्न हो गयी। उसके मन में भगवान् के मिलने की कामना जाग उठी। उसने उत्तरीय का छोर पकड़कर मुस्कराते हुये कहा—

एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे।
त्वयोन्मथितचित्तायाः प्रसीद पुरुषार्षभ॥

वीर शिरोमणि! आईये घर चलें। अब मैं आपको यहाँ नहीं छोड़ सकती। क्योंकि आपने मेरे चित्त को मथ डाला है। पुरुषोत्तम मुझ दासी पर प्रसन्न होइये॥

कुब्जा के इस प्रकार के कथन से उसमें काम रीति देखने में आती है, तथापि कृष्ण विषयक उपाधि रूप से एक अंश में रति है। इस प्रकार समझना होगा॥ २८७॥

**तत्र सम्बन्धरूपा—**

**सम्बन्धरूपा गोविन्दे पितृत्वाद्यभिमानिता।**
**अत्रोपलक्षणतया वृष्णीनां वल्लवा मताः।**
**यदैश्यज्ञानशून्यत्वादेषां रागे प्रधानता॥ (२८८)**

## अनुवाद

सम्बन्ध रूपा भक्ति का वर्णन करते हैं—

श्री गोविन्द में पितृत्वादि का अभिमान, अर्थात् मैं गोविन्द के पिता, माता, सखा, दास हूँ, इस प्रकार मनन करना ही सम्बन्ध रूपा भक्ति है।

'सम्बन्ध से वृष्णिगण' इस वाक्य में वृष्णि शब्द उपलक्षण में प्रयोग हुआ है। इसके द्वारा गोपगण को भी ग्रहण करना होगा। कारण गोपगण में ईश्वरत्व ज्ञानहीनता है। एवं राग विषय में वृष्णि गण से भी गोपों का प्राधान्य है॥ २८८॥

## दुर्गमसङ्गमनी

पितृत्वाद्यभिमानितेति तत्प्रभवरागप्रेरितेत्यर्थः। (भ.र.सि. १/२/२७५) "सम्बन्धाद्वृष्णय" इत्यत्र। वृष्णीनामुपलक्षणतया ये वल्लवाः प्राप्तास्तएव अजहल्लक्षणया मताः।
"अट्कुप्वाङ्नुमव्यवायेऽपी"ति (पाणिनी ८/४/२) सूत्रे यथा नुम् उपलक्षणत्वेनानुस्वारमात्रं गृह्यते, तद्वदिति भावः। तत्र हेतुमाह— यदिति, एषां वल्लवानाम्॥ २८८॥

## अनुवाद

पितृत्वादि अभिमान से उत्पन्न जो राग उससे प्रेरित जो भक्ति है उसे सम्बन्धरूपा भक्ति कहते हैं। पद्य में इस प्रकार उल्लेख है—

कामाद् गोप्यो भयात् कंसो द्वेषाद् चैद्यादयो नृपाः।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो!

यहाँ पर सम्बन्ध से वृष्णिगणों का आवेश कथित है। वृष्णीयों का उपलक्षण में वल्लवगण, गोपगण का ग्रहण हुआ है। यह अजहल्लक्षणा के द्वारा हुआ है, जिस प्रकार पाणिनि के सूत्र में अट्कुप्वाङ्नुमव्यवायेऽपीति सुनने से नुम् को उपलक्षण मानकर 'नुमा अनुस्वारमात्र गृह्य' अर्थात् नुम से अनुस्वार मात्र ग्रहण होता है; इसी प्रकार वृष्णि शब्द से गोपों का ग्रहण करना आवश्यक है। इसमें कारण बताते हैं— गोपों का कृष्ण में ईश्वर ज्ञान न होकर राग प्रधान रूप से है॥ २८८॥

## अर्थरत्नाल्प-दीपिका

पितृत्वाद्यभिमानिता— अहं गोविन्दस्य पिता, आदिशब्दात् सखा दास इत्यभिमानित्वम्। लालनादयस्त्वनुभावाः। अत्र सम्बन्धाद् वृष्णय इत्यत्र वृष्णीनामुपलक्षणतया ये वल्लवाः प्राप्तास्त एवाजहल्लक्षणया मताः। अट्कुप्वाङ्नुमव्यवायेऽपीति (पाणिनि अष्टाध्यायी ८/४/२) सूत्रे यथा नुम् उपलक्षणत्वेनानुस्वारमात्रं गृह्यते, तद्वदिति भावः। यद् यस्मात्। एषां वल्लवानां रागे प्रधानता वृष्णिभ्यः श्रैष्ठ्यम्। वृष्णीनां सम्बन्धस्यैश्यज्ञानेन मध्ये मध्ये आवरणात्॥ २८८॥

## अनुवाद

मैं गोविन्द का पिता हूँ, आदि शब्द से दास, सखा हूँ। इस प्रकार अभिमान को सम्बन्ध कहते हैं। इसमें लालन पालन करना अनुभाव होता है।

यहाँ पर श्लोक में—

कामाद् गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो॥

'सम्बन्धाद् वृष्णयः' कहना उपलक्षण है, अजहल्लक्षणा से गोपों का ग्रहण होता है, जिस प्रकार (पाणिनि ८/४/२) सूत्र में कहा गया है "अट् कुप्वाङ्नुमव्यवायेऽपीति" सूत्र में नुम् उपलक्षण के द्वारा अनुस्वार मात्र का ग्रहण होता है, इसी प्रकार वृष्णि शब्द के द्वारा गोपों को ग्रहण करना चाहिये। कारण राग प्रधान होने के कारण वृष्णि से गोपगण श्रेष्ठ हैं। वृष्णियों का सम्बन्ध ज्ञान का आवरण मध्य-मध्य में ईश्वर ज्ञान से होता रहता है॥ २८८॥

### भक्तिसार-प्रदर्शिनी

अत्रोपलक्षणतयेति— 'सम्बन्धाद् वृष्णय' इत्यत्र वृष्णीनामुपलक्षणतया वल्लवा मताः प्राप्ताः। अत्र वृष्णिपदस्य वृष्णिवल्लवोभयपरलक्षणायां वीजमाह— यदिति। एषां वल्लवानाम्। अयं भाव :— 'भक्त्या वयमि'त्यत्र पारिशेष्याद् वैधीभक्तिरेव व्याख्याता, तद्व्यतिरिक्तरागभक्तौ वक्तुमुचितायां प्रथमतो यथा रागविशेषकामात्मिकानामुदाहरणे प्रधानत्वात् गोप्य उक्तास्तथैव रागविशेषस्य सम्बन्धस्याप्युदाहरणे प्रधानत्वाद् वल्लवा निवेशनीयाः। अन्यथा क्रमभङ्गो न्यूनतापत्तिश्च॥ २८८॥

### अनुवाद

कामाद् गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो?

यहाँ पर "सम्बन्धाद् वृष्णयः" पद उपलक्षण है। इससे गोपों का ग्रहण होता है।

यहाँ वृष्णि पद से वृष्णि वल्लव दोनों का ग्रहण होने का कारण बताते हैं— यदित्यादि से। गोपों को प्रधानता राग में है।

कहने का अभिप्राय इस प्रकार है—

"भक्त्या वयं" यहाँ पर पारिशेष्य न्याय से जिस प्रकार वैधी भक्ति का ग्रहण हुआ है, उसको छोड़कर पहले राग भक्ति सम्पन्न व्यक्ति का कहना आवश्यक था। राग विशेष कामात्मिका का उदाहरण में गोपी का प्राधान्य कहा गया है। उस प्रकार राग विशेष सम्बन्ध का उदाहरण में राग प्रधान होने के कारण वल्लवों का निवेश करना आवश्यक है। अन्यथा क्रम भङ्ग एवं न्यूनता दोष होगा॥ २८८॥

**कामसम्बन्धरूपे ते प्रेममात्रस्वरूपके।**
**नित्यसिद्धाश्रयतया नात्र सम्यग्विचारिते॥ (२८९)**

### अनुवाद

कामरूपा एवं सम्बन्धरूपा भक्ति का स्वरूप प्रेममात्र होता है। यह भगवान् के नित्यसिद्ध परिकरों को आश्रय करके रहता है, अतः इस साधन प्रकरण में इसका सम्यक् विचार नहीं हुआ है॥ २८९॥

### दुर्गमसङ्गमनी

प्रेममात्रं स्वरूपं कारणं ययोः, नित्यसिद्धाः श्रीव्रजेश्वरादय एव आश्रया मूलस्थानानि ययोस्तयोर्भावस्तत्ता तया हेतुना। अत्र साधनप्रकरणे न सम्यग्विचारिते, किन्तु तत्प्रकरण एव

विचारयिष्येते इत्यर्थः॥ २८९॥

### अनुवाद

कामरूपा एवं सम्बन्धरूपा भक्ति का स्वरूप प्रेममात्र है। एवं श्रीव्रजेश्वर आदि नित्यसिद्धों को आश्रय करके रहती है। मूल स्थान श्रीव्रजेश्वरादि ही हैं। इसलिए साधन प्रकरण में सम्यक् रूप से उसका विचार नहीं किया गया है। किन्तु उसके प्रकरण में ही उसका विचार करेंगे॥ २८९॥

### अर्थरत्नाल्प-दीपिका

स्वरूपमात्मा नित्यसिद्धाः श्रीराधादयः श्रीनन्दादयश्च, अत्र साधनप्रकरणे॥ २८९॥

### अनुवाद

नित्यसिद्ध श्रीराधादि एवं श्रीनन्दादि को आश्रय करके कामरूपा एवं सम्बन्ध रूपा भक्ति रहती है। इसलिए इस साधन प्रकरण में उन दोनों का विचार सम्यक् रूप से नहीं किया गया है॥ २८९॥

### भक्तिसार-प्रदर्शिनी

ननु कामसम्बन्धयोर्बहवो भेदाः सन्ति, तेषां भेदः कथं नोक्तस्तत्राह— कामेति। ते द्वे कामसम्बन्धरूपे प्रेममात्रस्वरूपिके प्रेममात्रस्वरूपं ययोस्तथाभूते। नित्यसिद्धाः श्रीव्रजेश्वरादय एवाश्रया मूलस्थानानि ययोस्तयोर्भावस्तत्ता तया हेतुना। अत्र साधनप्रकरणे न सम्यग्विचारिते, किन्तु तत्प्रकरण एव विचारयिष्येते इत्यर्थः॥ २८९॥

### अनुवाद

काम रूपा भक्ति एवं सम्बन्धरूपा भक्ति के अनेक भेद हैं। उन दोनों का भेद का कथन क्यों यहाँ पर नहीं हुआ ? इसके लिए कहते हैं—वे दोनों प्रेममात्र स्वरूप के होते हैं। एवं इन दोनों के मूलस्थान आश्रय नित्यसिद्ध श्री व्रजेश्वरादि होते हैं। इसलिए इस साधन प्रकरण में उन दोनों का सम्यक् विचार नहीं किया गया है। किन्तु उसके प्रकरण में उन दोनों का विचार करेंगे॥ २८९॥

**रागात्मिकाया द्वैविध्याद् द्विधा रागानुगा च सा।**
**कामानुगा च सम्बन्धानुगा चेति निगद्यते॥ (२९०)**

### अनुवाद

रागात्मिका भक्ति—कामात्मिका और सम्बन्धात्मिका भेद से दो प्रकार होने से उसकी अनुगता रागानुगा भक्ति भी कामानुगा, सम्बन्धानुगा भेद से दो प्रकार हैं॥ २९०॥

### भक्तिसार-प्रदर्शिनी

प्रसङ्गतो रागात्मिकाया लक्षणमुक्त्वा प्रस्तुताया रागानुगाया लक्षणमाह— रागात्मिकाया इति॥ २९०॥

### अनुवाद

प्रसङ्ग क्रम से रागात्मिका भक्ति का लक्षण कहकर अब रागानुगा का लक्षण कहते हैं॥ २९०॥

तत्र अधिकारी—

**रागात्मिकैकनिष्ठा ये व्रजवासिजनादयः।**
**तेषां भावाप्तये लुब्धो भवेदत्राधिकारवान्॥ (२९१)**

### अनुवाद

कामानुगा एवं सम्बन्धानुगा भक्ति का अधिकारी निर्णय करते हैं—

रागात्मिका भक्ति में ही निष्ठा प्राप्त व्रजवासिजन के श्रीकृष्ण में जो भाव है, उस जातीय भाव को प्राप्त करने के लिए लुब्ध व्यक्ति ही इस रागानुगा मार्ग का अधिकारी होता है॥ २९१॥

### अर्थरत्नाल्प-दीपिका

रागात्मिकैकनिष्ठा— अत्र एकशब्देन महिमज्ञानभिद्यमानस्नेहादद्वारकादिनित्यसिद्धभक्ता निरस्ताः॥ २९१॥

### अनुवाद

रागानुगा भक्ति के लक्षण में रागात्मिकैक निष्ठा शब्द में जो एक शब्द का प्रयोग किया गया है, उसका अर्थ है— महिम ज्ञान युक्त होने से आवृत स्नेह के कारण द्वारकादि के नित्य सिद्ध परिकरगण को यहाँ ग्रहण नहीं किया गया है॥ २९१॥

### भक्तिसार-प्रदर्शिनी

रागात्मिकाभक्तौ एकनिष्ठा येषां तेषां व्रजवासिनां श्रीकृष्णे यो भावस्तत्सजातीयभावाप्तये लुब्ध इत्यर्थः॥ २९१॥

### अनुवाद

रागात्मिका भक्ति में निष्ठाशील जो व्रजवासी जन हैं उनका श्रीकृष्ण में जो भाव है उस भाव के सजातीय भाव प्राप्त करने के लिये लुब्ध व्यक्ति रागानुगा भक्ति का अधिकारी होता है॥ २९१॥

**तत्तद्भावादिमाधुर्य्ये श्रुते धीर्यदपेक्षते।**
**नात्र शास्त्रं न युक्तिञ्च तल्लोभोत्पत्तिलक्षणम्॥ (२९२)**

### अनुवाद

व्रजवासियों के उन उन भावादि माधुर्य को सुनकर उसके लिये बुद्धि यदि शास्त्र व युक्ति की अपेक्षा नहीं रखती है तो इसे लोभोत्पत्ति का लक्षण जानना चाहिये॥ २९२॥

### दुर्गमसङ्गमनी

तत्तद्भावादिमाधुर्य्ये श्रीभागवतादिषु सिद्धनिर्देशशास्त्रेषु श्रुते श्रवणद्वारा यत्किञ्चिदनुभूते सति यच्छास्त्रं विधिवाक्यं नापेक्षते, युक्तिञ्च न, किन्तु प्रवर्त्तत एवेत्यर्थः। तदेव लोभोत्पत्तेर्लक्षणमिति॥ २९२॥

### अनुवाद

श्रीमद्भागवतादि सिद्ध निर्देश शास्त्रों से व्रजवासिओं के श्रीकृष्ण विषयक भाव, रूप, गुण,

लीला आदि के माधुर्य को सुनकर, उन उन माधुर्य का यत्किञ्चित् अनुभव होने से शास्त्रीय विधि वाक्य की अपेक्षा नहीं रहती है, युक्ति की भी अपेक्षा नहीं रहती है, किन्तु उन उन भावों की प्राप्ति के लिये प्रवृत्ति होता है तो वह लोभोत्पत्ति का लक्षण है॥ २९२॥

### अर्थरत्नाल्प-दीपिका

तत्तद्भावस्य आदिग्रहणाद् रूपगुणादेश्च माधुर्य्ये श्रीकृष्णसर्वेन्द्रियप्रीतिहेतुत्वे श्रुते श्रीभागवतादिषु तदर्थमयरसिकभक्तकृततत्तल्लीलाद्यात्मकग्रन्थेषु च श्रवणद्वारा यत्किञ्चिदनुभूते सति। श्रुत इति प्राचुर्य्यादुक्तिः, सम्भोगेच्छामय्यां कामानुगायां श्रीमूर्त्तिमाधुरीदर्शनमपि ज्ञेयम्। यदपेक्षते अत्रापेक्षणे शास्त्रं विधिवाक्यं युक्तिमनुकूलतर्कञ्च नापेक्षते तच्छास्त्रयुक्तिनिरपेक्षतत्तद्भावादिमाधुर्य्याभिलषनं लोभोत्पत्तेर्लक्षणमित्यर्थः॥ २९२॥

### अनुवाद

आदि शब्द के ग्रहण से श्रीकृष्ण के रूप गुण आदि के माधुर्य जो सर्वेन्द्रिय का प्रीतिकर होता है, इसको श्रीभागवतादि से एवं श्रीमद्भागवत के अर्थमय लीलादि ग्रन्थ जो कि रसिक भक्तों के द्वारा रचित हैं, उनको सुनकर यत्किञ्चित् अनुभव होने के बाद यदि शास्त्रादि विधिवाक्य व अनुकुल युक्ति तर्क की अपेक्षा नहीं रहती है अर्थात् शास्त्र युक्ति की अपेक्षा न रखकर उस उस माधुर्य को प्राप्त करने की जो अभिलाषा होती है, वही लोभोत्पत्ति का लक्षण है।

यहाँ पर श्रुत शब्द के प्रयोग से श्रवण की प्रचुरता का कथन हुआ है। ऐसा होने पर भी सम्भोगेच्छामयी कामानुगा भक्ति में श्रीमूर्त्ति के माधुरी के दर्शन को भी लोभोत्पत्ति का लक्षण जानना चाहिये॥ २९२॥

### भक्तिसार-प्रदर्शिनी

तत्तद्भावादिमाधुर्ये श्रीभागवतादिप्रसिद्धावतारलीलावर्णनमयशास्त्रसामान्ये श्रुते श्रवणद्वारा यत्किञ्चिदनुभूते सति यच्छास्त्रं विधिवाक्यं नापेक्षते, युक्तिञ्च न, किन्तु प्रवर्त्तत एवेत्यर्थः। तदेवं लोभोत्पत्तेः लक्षणमनुमापकं, तादृशहेतु ज्ञानादेव लोभोत्पत्तिरनुमीयत इत्यर्थः। नत्वत्र लक्षणं लोभोत्पत्तेः स्वरूपमिति व्याख्यातुं शक्यं, शास्त्रयुक्त्यपेक्षाभावस्य स्वरूपत्वाभावात्॥ २९२॥

### अनुवाद

तत्तद्भावादिमाधुर्य— श्रीमद्भागवतादि प्रसिद्धावतार लीला वर्णनमय शास्त्रों को सुनने से यत्किञ्चित् अनुभव होने से उनके भावों को प्राप्त करने के लिये यदि स्वाभाविक इच्छा होती है, उसमें प्रेरणात्मक विधि वाक्य, एवं युक्ति की अपेक्षा नहीं होती है, तो उसको लोभोत्पत्ति का लक्षण कहते हैं। यहाँ पर कारिका में लक्षण शब्द अनुमापक है, कारण शास्त्र युक्ति निरपेक्ष हेतु ज्ञान के द्वारा लोभोत्पत्ति का अनुमान होता है। इस लक्षण को लोभोत्पत्ति का स्वरूप लक्षण नहीं कहा जा सकता है। इसका कारण यह है कि शास्त्र युक्ति की अपेक्षा का अभाव होने से स्वरूप लक्षण का अभाव होता है॥ २९२॥

**वैधभक्त्यधिकारी तु भावाविर्भावनावधिः।**
**अत्र शास्त्रं तथा तर्कमनुकूलमपेक्षते॥ (२९३)**

### अनुवाद

इस साधन प्रकरण में वैध भक्ति का अधिकारी व्यक्ति भाव—रति के आविर्भाव पर्यन्त शास्त्र एवं अनुकूल तर्क की अपेक्षा रखता है॥ २९३॥

### दुर्गमसङ्गमनी

ननु रागानुगाधिकारिणो रागात्मिकानुगामित्वात् निरवधिरेव तादृशी भक्तिः, वैधभक्त्यधिकारिणस्तु किमवधिर्वैधीभक्तिस्तत्राह— वैधभक्तीति। भावो रतिः। तदुक्तं श्रीभगवता (भा. ११/२०/३६)— "न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणा"। इति॥ २९३॥

### अनुवाद

रागानुगा भक्ति के अधिकारी लोग रागात्मिका भक्ति का अनुगामी होने के कारण निरवधि रागानुगा भक्ति करते हैं। किन्तु वैधी भक्ति के अधिकारी लोगों की वैधी भक्ति की अवधि कहाँ तक है? कहते हैं— वैध भक्ति के अधिकारी व्यक्ति को भाव आविर्भाव पर्यन्त तक शास्त्र तथा अनुकूल तर्क की आवश्यकता होती है। भाव से यहाँ तात्पर्य रति से है।

श्रीमद्भागवत के ११/२०/३६ में श्री भगवान कृष्ण स्वयं ही कहे हैं—

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्॥

मेरे अनन्य भक्तों का और समदर्शी महात्माओं का, जो बुद्धि से अतीत परम तत्त्व को प्राप्त हो चुके हैं, इन विधि और निषेध से होने वाले पुण्य और पाप से कोई सम्बन्ध ही नहीं होता॥ २९३॥

### भक्तिसार-प्रदर्शिनी

अत्र साधनप्रकरणे वैधभक्त्यधिकारी तु भावस्य रतेराविर्भावपर्यन्तं शास्त्रं तथानुकूलतर्कं चापेक्षते; रत्युत्तरन्तु नापेक्षते; रागभक्तौ तु प्रथमप्रवृत्तिमारभ्य लोभोत्पत्तौ कदापि नापेक्षत इति महानुत्कर्षः। किन्तु यत्र लोभो जातस्तत्प्राप्त्यर्थं शास्त्राद्यनुसन्धानम्, एवं शास्त्रोक्तसाधनानुसन्धानञ्चावश्यकर्त्तव्यमेव॥ २९३॥

### अनुवाद

इस साधन प्रकरण में वैध भक्ति का अधिकारी रति अर्थात् भाव आविर्भाव पर्यन्त शास्त्र एवं अनुकूल तर्क की अपेक्षा रखता है। भाव आविर्भाव होने के बाद शास्त्र की प्रेरणा एवं अनुकूल तर्क की अपेक्षा वैधी भक्ति अधिकारी के लिये नहीं रहती है। किन्तु रागानुगा भक्ति में प्रथम प्रवृत्ति लोभोत्पत्ति होने से कभी भी शास्त्र, युक्ति, तर्क की अपेक्षा नहीं रहती है। इससे रागानुगा भक्ति का महान उत्कर्ष सूचित होता है।

किन्तु जिसमें लोभ उत्पन्न हुआ है उसे प्राप्त करने के लिए शास्त्र आदि का अनुसन्धान एवं शास्त्रोक्त साधन का अनुसन्धान करना अवश्य ही कर्त्तव्य है॥ २९३॥

**कृष्णं स्मरन् जनञ्चास्य प्रेष्ठं निजसमीहितम्।**
**तत्तत्कथारतश्चासौ कुर्य्याद्वासं व्रजे सदा॥ (२९४)**

### अनुवाद

निज प्रियतम श्रीनन्दनन्दन श्रीकृष्ण का एवं सजातीय भाव युक्त निज अभीष्ट श्रीकृष्ण के भक्तजन का स्मरण करते-करते एवं उन सबके लीला कथा में रत होकर साधक भक्त सदा व्रज में निवास करे॥ २९४॥

### दुर्गमसङ्गमनी

अथ रागानुगायाः परिपाटीमाह— कृष्णमित्यादिना। सामर्थ्ये सति व्रजे श्रीमन्नन्दव्रजावासस्थाने वृन्दावनादौ शरीरेण वासं कुर्य्यात्, तदभावे मनसापीत्यर्थः॥ २९४॥

### अनुवाद

रागानुगा भक्ति की परिपाटी अर्थात् आचार संहिता को कहते हैं— कृष्णं स्मरन् इत्यादि तीन कारिकाओं के द्वारा। सामर्थ्य होने पर शरीर से व्रज में श्रीमन्नन्द के व्रज आवास स्थान वृन्दावनादि में वास करना चाहिये। सशरीर सामर्थ्य के अभाव होने पर मन से भी श्रीवृन्दावनादि में निवास करना चाहिये॥ २९४॥

### अर्थरत्नाल्प-दीपिका

अथ रागानुगाङ्गान्याह— कृष्णमिति त्रिभिः। कृष्णस्य विशेषणं प्रेष्ठं, जनस्य च निजसमीहितमिति। (निजसमीहितमिति कृष्णतज्जनयोर्विशेषणमिति क्वचित्)। व्रजे श्रीमन्नन्दवासस्थाने श्रीवृन्दावनादौ च शरीरेण वासं कुर्य्यात् साधकरूपेण व्रजे अन्यत्र वा स्थितेन देहेन॥ २९४॥

### अनुवाद

कृष्णमित्यादि तीन श्लोकों के द्वारा रागानुगा भक्ति के अङ्ग समूह का वर्णन करते हैं। श्रीकृष्ण का विशेषण है— प्रेष्ठ, अर्थात् परम प्रियतम श्रीकृष्ण। उन परमप्रिय श्रीकृष्ण व समान वासना वाले उनके भक्त जनों का स्मरण करते हुये (क्वचित् निज समीहित पद कृष्ण एवं कृष्ण के जनों का विशेषण है) श्रीमन्नन्द वास स्थान श्रीवृन्दावन आदि में शरीर से निवास करना चाहिये। व्रज में साधक रूप से वास करे। सशरीर सामर्थ्य के अभाव होने पर मन से ही श्रीवृन्दावनादि में निवास करना चाहिये॥ २९४॥

### भक्तिसार-प्रदर्शिनी

अथ रागानुगायाः परिपाटीमाह— कृष्णमित्यादिना। प्रेष्ठं स्वप्रियतमं किशोरं नन्दनन्दनं स्मरन् एवमस्य तादृशकृष्णस्य भक्तजनम्, अथच स्वस्य सम्यगीहितं स्वसमानवासनमिति यावत्। तथा च

तादृशं जनं स्मरन् व्रजे वासं कुर्यात्। सामर्थ्ये सति श्रीमन्नन्दव्रजावासस्थाने वृन्दावनादौ शरीरेण वासं कुर्य्यात्। तदभावे मनसापीत्यर्थः॥ २९४॥

### अनुवाद

कृष्णं स्मरन् जनञ्चास्य प्रेष्ठं निज समीहितम्।
तत्तत् कथारतश्चासौ कुर्याद् वासं व्रजे सदा॥

कृष्णमित्यादि कारिका के द्वारा रागानुगा भक्ति की आचार संहिता को कहते हैं। यहाँ पर निज प्रियतम किशोर नन्दनन्दन प्रेष्ठ हैं। उन श्रीकृष्ण का एवं उनके भक्त जनों का जो कि स्व समान वासना वाले हों उन सबका स्मरण करते हुये व्रज में वास करना चाहिये। सामर्थ्य होने पर श्रीमन्नन्द व्रजवास स्थान श्री वृन्दावन आदि में शरीर से वास करना चाहिये। सशरीर वास के सामर्थ्य का अभाव होने पर मन से भी उसी रीति से व्रज में वास करना चाहिये॥ २९४॥

**सेवा साधकरूपेण सिद्धरूपेण चात्र हि।**
**तद्भावलिप्सुना कार्य्या व्रजलोकानुसारतः॥ (२९५)**

### अनुवाद

व्रज के निज अभीष्ट श्रीनन्दनन्दन श्रीकृष्ण के प्रति समान वासना युक्त व्रजजन का जो भाव विशेष है, उसको चाहने वाले व्यक्ति को व्रजलोकों का अनुसरण करके साधक रूप से एवं सिद्ध रूप से सेवा करनी चाहिये॥ २९५॥

### दुर्गमसङ्गमनी

साधकरूपेण यथावस्थितदेहेन। सिद्धरूपेण अन्तश्चिन्तिताभीष्टतत्सेवोपयोगिदेहेन। तस्य व्रजस्थस्य निजाभीष्टस्य श्रीकृष्णप्रेष्ठस्य यो भावो रतिविशेषस्तल्लिप्सुना। व्रजलोकास्त्वत्र कृष्णप्रेष्ठजनास्तदनुगताश्च तदनुसारतः॥ २९५॥

### अनुवाद

'साधक रूप से' अर्थात् 'यथावस्थित देह से' एवं 'सिद्ध रूप से' अर्थात् 'अन्तश्चिन्तित निज अभीष्ट सपरिकर कृष्ण की सेवा के उपयोगी देह से' को जानना होगा। 'तद्भावलिप्सुना' के द्वारा व्रजस्थ निज अभीष्ट श्रीकृष्ण प्रेष्ठ का जो भाव रति विशेष को प्राप्त करने की इच्छा करने वाले रागानुगा के अधिकारी को जानना होगा। यहाँ पर 'व्रजलोक' से कृष्णप्रेष्ठजन तथा उनके अनुगत जनों को जानना होगा। रागानुगा साधक को इन लोगों के अनुगत होकर सेवा करनी चाहिये॥ २९५॥

### अर्थरत्नाल्प-दीपिका

सिद्धरूपेण मनश्चिन्तितस्वाभीष्टतत्सेवोपयोगिदेहेन अत्र हि व्रज एव, न तु यत्र स्थितस्तत्र तस्य निजसमीहितकृष्णजनस्य यो भावः कामसम्बन्धरूपः तं लिप्सुना प्राप्तुमिच्छुना व्रजलोकानुसारतः व्रजजनसेवानुगत्येत्यर्थः॥ २९५॥

## अनुवाद

सिद्धरूपेण का अर्थ है मन से चिन्तित अपने अभीष्ट श्रीकृष्ण व उनके निजजन के सेवा के उपयोगी देह; अत्र अर्थात् यहाँ व्रज में ही रहकर न कि जहाँ पर वास्तव में रहता है वहाँ। निज समीहित श्रीकृष्ण के जनों का कामरूप एवं सम्बन्धरूप जो भाव उसको प्राप्त करने के इच्छुक रागानुगा साधक व्रजलोकों के अनुसार अर्थात् व्रजजनों के सेवा के आनुगत्य से सेवा करे॥ २९५॥

## भक्तिसार-प्रदर्शिनी

साधकरूपेण यथावस्थितदेहेन, सिद्धरूपेण अन्तश्चिन्तिताभीष्टतत्सेवोपयोगिदेहेन। तस्य व्रजस्थस्य निजाभीष्टस्य श्रीकृष्णस्य यो भावो रतिविशेषस्तल्लिप्सुना। व्रजलोकास्तत्तत् कृष्णप्रेष्ठजना श्रीराधाललिताविशाखाश्रीरूपमञ्जर्य्याद्यास्तदनुगताः श्रीरूपसनातनगोस्वामिप्रभृतयश्च तेषामनुसारतः। तथा च सिद्धरूपेण मानसीसेवा श्रीराधाललिताविशाखाश्रीरूपमञ्जर्यादीनामनुसारेण कर्त्तव्या। साधकरूपेण कायिक्यादिसेवा तु श्रीरूपसनातनादिव्रजवासिजनानामनुसारेण कर्त्तव्येत्यर्थः। एतेन व्रजलोकपदेन व्रजस्थ श्रीराधाचन्द्रावल्याद्या एव ग्राह्याः। तासामनुसारेणैव साधकदेहेन कायिक्यादि सेवापि कर्त्तव्या। एवं सति ताभिर्गुरुपादाश्रयणैकादशीव्रतशालग्रामतुलसीसेवादयो न कृताः, तदनुगतैरस्माभिरपि न कर्त्तव्या इत्याधुनिकसौरम्यमतमपि निरस्तम्। अतएव श्रीजीवगोस्वामिचरणैरप्यस्य ग्रन्थस्य टीकायां दुर्गमसङ्गमनीनाम्न्यां तथैवोक्तम्; तद्यथा— व्रजलोकास्त्वत्र कृष्णप्रेष्ठजनास्तदनुगताश्च तदनुसारत इति॥ २९५॥

## अनुवाद

'साधक रूप से' अर्थात् 'यथावस्थित देह से' एवं 'सिद्ध रूप से' अर्थात् 'अन्तश्चिन्तित निज अभीष्ट सपरिकर कृष्ण की सेवा के उपयोगी देह से' को जानना होगा। 'तद्भावलिप्सुना' के द्वारा व्रजस्थ निज अभीष्ट श्रीकृष्ण प्रेष्ठ का जो भाव रति विशेष को प्राप्त करने की इच्छा करने वाले रागानुगा के अधिकारी को जानना होगा। 'व्रजलोक' से कृष्णप्रेष्ठजन तथा उनके अनुगतजन श्रीराधा-ललिता-विशाखा-श्रीरूपमञ्जरी आदि और उनके अनुगत श्रीरूप, श्रीसनातन गोस्वामी आदि के अनुसार सेवा करना आवश्यक है। और भी सिद्ध रूप से मानसी सेवा श्रीराधा, ललिता, विशाखा श्रीरूप मञ्जरी आदि के अनुसार करना कर्त्तव्य है। साधक रूप से कायिक्यादि के द्वारा सेवा श्रीरूप, श्रीसनातनादि व्रजवासिजनों के अनुसार करना कर्त्तव्य है।

इस प्रकार निर्णय होने से—व्रजलोक शब्द से व्रजस्थ श्रीराधा चन्द्रावली आदि को ही लेना चाहिये। उन सबों के अनुसार ही साधक देह से कायिक्यादि सेवा करना भी कर्त्तव्य है। ऐसा होने पर उन सबों ने गुरु पादाश्रय, श्रीएकादशी व्रत, शालग्राम सेवा, तुलसी सेवा आदि नहीं किया, उन सबों के अनुगत हम सबके लिये भी उन सबका आचरण करना आवश्यक नहीं है, इस प्रकार का आधुनिक सौरम्य (सूरमा) मत भी निरस्त हुआ। अतएव इस ग्रन्थ की टीका में श्रीजीव गोस्वामिपाद ने इसी प्रकार कहा है, जो कि इस प्रकार है—"व्रजलोकास्तत्तत्कृष्णप्रेष्ठजनास्तदनुगताः तदनुसारतः" अर्थात् यहाँ पर 'व्रजलोक'

शब्द से श्रीकृष्णप्रेष्ठजन तथा उनके अनुगत जनों को जानना होगा। रागानुगा साधक को इन लोगों के अनुगत होकर सेवा करनी चाहिये॥ २९५॥

**श्रवणोत्कीर्त्तनादीनि वैधभक्त्युदितानि तु।**
**यान्यङ्गानि च तान्यत्र विज्ञेयानि मनीषिभिः॥ (२९६)**

### अनुवाद

वैधी भक्ति में श्रवण, कीर्त्तन आदि भक्ति के जिन अङ्गों का वर्णन हुआ है, इस रागानुगा भक्ति में भी मनीषिगण निज निज भावोचित उन अङ्गों को ग्रहण कर लें अर्थात् आचरण करें॥ २९६॥

### दुर्गमसङ्गमनी

वैधभक्त्युदितानि स्वस्वयोग्यानीति ज्ञेयम्॥ २९६॥

### अनुवाद

वैधी भक्ति में जिन सब भक्ति के अङ्गों का वर्णन किया गया है, अपनी अपनी भाव के योग्य-अनुकूल उन उन अङ्गों का ग्रहण विज्ञ व्यक्तिगण करें॥ २९६॥

### अर्थरत्नाल्प-दीपिका

यानि वैधभक्त्युदितानि श्रवणोत्कीर्त्तनादीनि तानि च मनीषिभिरिति स्वस्वभावपोषकाण्येव विचार्य्य कार्य्याणीत्यर्थः। चकारोऽन्वाचये॥ २९६॥

### अनुवाद

श्रवण कीर्त्तन आदि वैधी भक्ति के लिए जो सब अङ्ग कहे गये हैं, विज्ञ व्यक्तिगण विचारपूर्वक निज निज भाव के पोषक रूप उन भक्ति के अङ्गों का अनुष्ठान करें। यहाँ पर 'यानि अङ्गानि च' में चकार का प्रयोग गौण अर्थ में है॥ २९६॥

### भक्तिसार-प्रदर्शिनी

श्रवणोत्कीर्त्तनादीनि— गुरुपादाश्रयणादीनि त्वाक्षेपलब्धानि। तानि विना व्रजलोकानुगत्यादिकं किमपि न सिद्ध्येदित्यर्थः। मनीषिभिरिति मनीषया विमृश्यैव स्वीयभावसमुचितान्येव तानि कार्याणि, न तु तद्विरुद्धानि। तानि चार्चनभक्तावहङ्ग्रहोपासनमुद्रान्यासद्वारकाध्यानरुक्मिण्यादिपूजनानि आगमशास्त्रविहितान्यपि नैव कार्याणि। भक्तिमार्गेऽस्मिन् किञ्चित् किञ्चिदङ्गवैकल्येऽपि दोषाभावश्रवणात्। यदुक्तमेकादशे (भा. ११/२/३५)—

'यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे'ति॥

(भा. ११/२९/२०)— 'नह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्येत्यादि॥ २९६॥

### अनुवाद

श्रवण कीर्त्तन आदि शब्द से गुरु पादाश्रय आदि को भी रागानुगा भक्ति के अङ्ग रूप से जान

लेना चाहिये। क्योंकि गुरुपादाश्रयादि के बिना व्रज लोकों का आनुगत्य करना किसी प्रकार से सम्भव नहीं है। मनीषिगण विवेक के द्वारा विचार करके अपने भाव के अनुकूल भक्ति के अङ्गों का आचरण करेंगे। भाव विरुद्ध अङ्गों का आचरण नहीं करेंगे। अर्चन भक्ति में अहंग्रह उपासना, मुद्रा, न्यास, द्वारका ध्यान, रुक्मिणी आदि का पूजन आगम शास्त्र में विहित होने पर भी रागानुगा भक्त के लिये आचरणीय नहीं है। कारण इस रागानुगा भक्ति मार्ग में कुछ कुछ अङ्गों का अनुष्ठान न होने पर भी दोष नहीं होता है।

जैसाकि एकादश स्कन्ध में ११/२/३५ कहा गया है—

यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह॥

हे राजन्! इन भागवत धर्मों का अवलम्बन करके मनुष्य कभी भी विघ्नों से पीड़ित नहीं होता, और नेत्र बंद करके दौड़ने पर भी अर्थात् जाने अनजाने किसी किसी अंग का अनुष्ठान न करने पर भी मार्ग से स्खलित नहीं होता है। न तो पतित यानि फल से वञ्चित ही होता है।

और भी (भा. ११/२९/२०) में उक्त है—

न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि।
मया व्यवसितः सम्यङ् निर्गुणत्वादनाशिषः॥

उद्धवजी! यह मेरा भागवत धर्म है, इसको एक बार आरम्भ कर देने के बाद फिर किसी प्रकार की विघ्न बाधा से इसमें रत्तीभर भी अन्तर नहीं पड़ता, क्योंकि यह धर्म निष्काम है, और मैंने ही इसे निर्गुण होने के कारण सर्वोत्तम निश्चय किया है॥ २९६॥

**तत्र कामानुगा—**

**कामानुगा भवेत्तृष्णा कामरूपानुगामिनी॥ (२९७)**

### अनुवाद

कामानुगा भक्ति—

कामरूपा भक्ति की अनुगामिनी तृष्णा को कामानुगा भक्ति कहते हैं॥ २९७॥

### दुर्गमसङ्गमनी

कामरूपानुगामिनी तृष्णा तदात्मिका भक्तिः कामानुगा भवेत्॥ २९७॥

### अनुवाद

काम रूपा भक्ति की अनुगामिनी जो तृष्णा उसको कामानुगा भक्ति कहते हैं॥ २९७॥

### अर्थरत्नाल्प-दीपिका

कामरूपा या सम्भोगतृष्णां स्वतां नयतीत्युक्ता, तस्या अनुगामिनी तृष्णा कामानुगा भवेत्॥ २९७॥

### अनुवाद

कामरूपा भक्ति सम्भोगतृष्णा को निजस्वरूपता अर्थात् प्रेममयता को प्राप्त कराती है, इस

प्रकार कहा गया है। इस कामरूपा भक्ति की अनुगामिनी तृष्णा कामानुगा भक्ति है॥ २९७॥

## भक्तिसार-प्रदर्शिनी

कामेति— कामरूपानुगामिनी तृष्णा कामानुगा भवेदित्यन्वयः। अत्र पूर्वव्याख्यातकामरूपापदस्य कामप्रेरिताक्रियापरत्वादत्रापि साधकभक्तनिष्ठतृष्णापदस्य काममयतृष्णाप्रेरितक्रियापरत्वं वाच्यम्। तथा च व्रजसुन्दरीनिष्ठकामप्रेरिता या क्रिया तस्या अनुगामिनी अनुसारिणी या साधकभक्तनिष्ठकाममयतृष्णाप्रेरिता परिचर्यामयी, सा कामानुगाभक्तिः। क्रिया चात्र द्विविधा— भावनामयी मानसी, परिचर्यामयी बहिरिन्द्रियव्यापाररूपा च। न च व्रजसुन्दरीणां क्रियानुसारेणैव क्रियायाः साधकभक्तस्य कर्त्तव्यत्वेन विहितं तत् कथं ताभिः क्रियमाणा सूर्यपूजा शुद्धभक्तैर्न क्रियते? यदि च क्रियते तदा भक्तेः शुद्धत्वहानिः? कथं वा ताभिर्न कृतम्, अथच महानुभावैः श्रीरूपगोस्वामिप्रभृतिभिः कृतं वन्दनैकादश्यादिव्रतं साधकभक्तैः क्रियत इति वाच्यम्। अनुगामिनी अनुसारिणीत्यवार्थो, न त्वनुकारिणीति व्याख्यातत्वात्। तथा च तासां मतस्यानुकूल्येनानुसरणमात्रं, न तु सामस्त्येन कर्त्तव्यत्वं, यथा वेदान्तमालम्व्य युक्त्यादिभिः स्वेनैवाधिकतया क्रियमाणा व्याख्या वेदान्तानुसारिणीत्युच्यते। एतेन पूर्ववदाधुनिकसौरम्यमतमपि निरस्तमिति ज्ञेयम्॥ २९७॥

## अनुवाद

कामरूपा की अनुगामिनी तृष्णा को कामानुगा कहते हैं। इस प्रकार अन्वय करना होगा।

यहाँ पर पहले व्याख्या की गयी कामरूपा पद की काम प्रेरिता क्रिया पर होने के कारण यहाँ पर भी साधक भक्तनिष्ठ तृष्णा पद को काममय तृष्णा प्रेरिता क्रिया परत्व कहा गया है।

इसी प्रकार व्रजसुन्दरीनिष्ठ कामप्रेरित जो क्रिया उसकी अनुगामिनी - अनुसारिणी साधक भक्तनिष्ठ जो काममयतृष्णा प्रेरित परिचर्यामयी भक्ति है, वह रागानुगा भक्ति है।

यहाँ पर क्रिया दो प्रकार की है— प्रथम प्रकार—भावनामयी मानसी, दूसरा प्रकार— परिचर्यामयी बहिरिन्द्रिय व्यापाररूपा। यदि व्रजसुन्दरिओं की क्रिया के अनुसार ही कार्य करना साधक भक्त का कर्त्तव्य है, इस प्रकार कहेंगे, तब व्रजसुन्दरिओं के द्वारा की गयी सूर्य पूजा का अनुष्ठान शुद्ध भक्तगण क्यों नहीं करते हैं? यदि शुद्ध भक्तगण सूर्य पूजा करेंगे, तब शुद्ध भक्ति की हानि होगी। और उन सब व्रजसुन्दरिओं के द्वारा नहीं किया हुआ कार्य, महानुभाव श्रीरूप गोस्वामिपाद आदि कृत वन्दना, एकादशी व्रत आदि का अनुष्ठान साधक भक्तगण क्यों करते रहते हैं? कहते हैं— इस प्रकार कहना ठीक नहीं है। कारण अनुगामिनी का अर्थ अनुसारिणी है, अनुकारिणी नहीं।

अतएव व्रजसुन्दरिओं के मत के आनुकूल्य से अनुसरण मात्र करना है, न कि उन सबों के द्वारा किये जाने वाले समस्त कार्यों को करना है। जिस प्रकार वेदान्त को अवलम्बन करके युक्ति आदि के द्वारा अधिक रूप में की गयी निज व्याख्या को भी वेदान्तानुसारिणी व्याख्या कहते हैं, इस प्रकार से जानना होगा। इस प्रकार के सिद्धान्त के द्वारा पहले की तरह आधुनिक सौरम्य मत (सुरमा मत) भी निरस्त हुआ॥ २९७॥

सम्भोगेच्छामयी तत्तद्भावेच्छात्मेति सा द्विधा॥ (२९८)

## अनुवाद

कामानुगा भक्ति सम्भोगेच्छामयी एवं तत्तद्भावेच्छात्मा भेद से दो प्रकार की होती है॥ २९८॥

## दुर्गमसङ्गमनी

सम्भोगेच्छामयी कामप्रायानुगा ज्ञेया। तत्तद्भावेच्छात्मेति— तस्यास्तस्या निजनिजाभीष्टाया व्रजदेव्या यो यो भावस्तद्विशेषस्तत्र या इच्छा सैवात्मा प्रवर्त्तिका यस्याः सेति मुख्यकामानुगा ज्ञेया। तथा च दर्शितम् (भा. १०/८७/२३)— "स्त्रिय उरगेन्द्रभोगेत्यादि"॥ २९८॥

## अनुवाद

सम्भोगेच्छामयी कामानुगा भक्ति को कामप्राया का अनुगा जानना होगा। निज-निज अभीष्ट व्रजदेवी का जो भाव विशेष है उसके लिये जो इच्छा होती है वह इच्छा ही जिसकी आत्मा अर्थात् प्रवर्त्तिका है उसको तत्तद्भावेच्छात्मिका कामानुगा भक्ति कहते हैं। यह तत्तद्भावेच्छात्मिका कामानुगा ही मुख्य कामानुगा है। इसका उदाहरण भा. १०/८७/२३ में इस प्रकार है—

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधिया,
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥

मन, प्राण, इन्द्रिय संयम पूर्वक दृढ़ योग युक्त मुनिगण हृदय में उपासना के द्वारा जिस तत्व को प्राप्त करते हैं, शत्रुगण उस तत्व को निरन्तर अनिष्ट चिन्तन से आपका स्मरण करके प्राप्त करते हैं। और अनन्त के शरीर की भाँति आपके भुजदण्ड के मध्य में विषक्त बुद्धि सम्पन्न कामासक्त गोपीगण एवं अपरिच्छिन्न रूप में अवलोकनकारी श्रुत्यभिमानी देवता हम सब भी आपके चरणारविन्द को प्राप्त किये हैं, कारण आपके निकट सब ही व्यक्ति समान हैं॥ २९८॥

## अर्थरत्नाल्प-दीपिका

सम्भोगः श्रीकृष्णेन सह तं सुखयितुम् अङ्गसङ्गाद्यनुभावको राधादियूथेश्वरीणां यः प्रेमविशेषस्तदिच्छामयी तदभिलाषात्मा। तत्तद्भावेच्छात्मा तस्यास्तस्या ललितापद्मादिव्रजदेव्या भावो राधाचन्द्रावल्यादीनां कृष्णेनाङ्गसङ्गादौ साहाय्येन स्वसुखातिशयमननात् नायकयोराकर्षको यो भावविशेषस्तस्मिन्नभिलाषस्वरूपा॥ २९८॥

## अनुवाद

श्रीकृष्ण को सुखी करने के लिए उनके साथ श्रीराधादि यूथेश्वरियों के अङ्ग सङ्गादि का अनुभावक जो प्रेम विशेष है तद्विषयक इच्छा-अभिलाषा जिस कामानुगा भक्ति का प्रवर्त्तक है उसको सम्भोगेच्छामयी भक्ति कहते हैं।

और ललिता पद्मादि व्रजदेवियों का जो भाव अर्थात् श्रीकृष्ण के साथ श्रीराधा चन्द्रावली आदि के अङ्ग सङ्गादि कार्य में साहाय करने से ही अपना अतिशय सुख मानकर नायक नायिका का आकर्षक जो भाव विशेष उसमें ही जो अभिलाषमयी भक्ति है, उस भक्ति को तत्तद्भावेच्छात्मा भक्ति कहते हैं॥ २९७,२९८॥

## भक्तिसार-प्रदर्शिनी

सम्भोगेच्छामयी यूथेश्वरीवत् स्वातन्त्र्येण श्रीकृष्णेन सह सम्भोगेच्छाप्रेरिता पूर्वोक्तद्विविधक्रियेत्यर्थः। उदाहरणं यथा शास्त्रे चन्द्रकान्तिप्रभृतयः। तत्तद्भावेच्छात्मिकेति तस्यास्तस्या निजाभीष्टाया व्रजसुन्दर्य्या यो भावः श्रीकृष्ण विषये भावविशेषस्तस्यास्वादनेऽत्र या इच्छा सैवात्मा प्रवर्त्तिका यस्याः सेति। इयं पूर्वतः श्रेष्ठा मुख्यकामानुगा ज्ञेया॥ २९८॥

## अनुवाद

यूथेश्वरी की तरह स्वतन्त्र रूप से श्रीकृष्ण के साथ सम्भोग की इच्छा से प्रेरित भक्ति को सम्भोगेच्छामयी कहते हैं। यह पहले दो प्रकार की क्रिया वाली कही गयी है। शास्त्र में इसका उदाहरण चन्द्रकान्ति प्रभृति हैं।

तत्तद्भावेच्छात्मिका का वर्णन करते हैं— निज अभीष्ट व्रजसुन्दरिओं का श्रीकृष्ण के प्रति जो भाव है अर्थात् भाव विशेष है, उसको आस्वादन करने की जो इच्छा है उस इच्छा से जो प्रवृत्त कामानुगा भक्ति है, उसको तत्तद्भावेच्छात्मिका भक्ति कहते हैं।

यह भक्ति पहले वाली सम्भोगेच्छामयी से श्रेष्ठ है। इसको मुख्य कामानुगा जानना है॥ २८८॥

**केलितात्पर्यवत्येव सम्भोगेच्छामयी भवेत्।**
**तद्भावेच्छात्मिका तासां भावमाधुर्य्यकामिता॥ (२९९)**

## अनुवाद

जिसमें केलि तात्पर्य रहता है, उसको ही सम्भोगेच्छामयी कामानुगा भक्ति कहते हैं। जिसमें व्रज-देवियों के भाव माधुर्य आस्वादन करने की कामना रहती है, उस भक्ति को तत्तद् भावेच्छात्मिका भक्ति कहते हैं।

## दुर्गमसङ्गमनी

सम्भोगोऽत्र सम्प्रयोगः, केलिरपि स एव; भावमाधुर्य्यस्य कामिता यस्यां सा॥ २९९॥

## अनुवाद

इस प्रकरण में सम्भोग शब्द का अर्थ है— सम्प्रयोग, उसी को केलि भी कहते हैं।

जिसमें सम्भोगेच्छा को छोड़कर केवल भावमाधुर्य आस्वादन की कामना रहती है उस भक्ति का नाम तत्तद्भावेच्छात्मिका भक्ति है॥ २९९॥

## अर्थरत्नाल्प-दीपिका

एते व्याख्यायेते— केलीति। केलितात्पर्य्यमस्त्यस्यां तृष्णायामिति केलितात्पर्य्यवती

नायिकाभावाभिलाषस्वरूपेत्यर्थः। एवकारो निर्द्धारणे।

तत्तद्भावेच्छात्मेत्यस्यास्तद्भावेच्छात्मिकेत्यनुवादः। तासां सखीस्वरूपाणां व्रजदेवीनाम्॥ २९९॥

### अनुवाद

सम्भोगेच्छामयी और तद्भावेच्छातिमका की व्याख्या कर रहे हैं— केलीति कारिका के द्वारा। जिस तृष्णा में केलि तात्पर्य होता है उसको केलि तात्पर्यवती कहते हैं। यह नायिका भाव अभिलाष स्वरूप होता है। यहाँ पर 'एव' कार का प्रयोग निर्द्धारण अर्थ में हुआ है।

सखी स्वरूप व्रजदेवियों के भाव माधुर्य कामना को तत्तद्भावेच्छातिमका कामानुगा भक्ति कहते हैं॥ २९९॥

### भक्तिसार-प्रदर्शिनी

सम्भोगोऽत्र सम्प्रयोगः, केलिरपि स एवेत्याह। केलितात्पर्यवती क्रिया एव सम्भोगेच्छामयी भवेदित्यर्थः। तासां श्रीकृष्णेन सह भावमाधुर्यस्यास्वादने कामिता कामना यस्याः सा तत्तद्भावेच्छात्मिका॥ २९९॥

### अनुवाद

इस प्रकरण में सम्भोग शब्द का अर्थ है—सम्प्रयोग। इसका दूसरा नाम केलि भी है। केलि तात्पर्यवती क्रिया ही सम्भोगेच्छामयी भक्ति होती है। और जिस भक्ति में व्रज सुन्दरिओं का श्रीकृष्ण के सहित भाव माधुर्य का आस्वादन करने की कामना रहती है, उस भक्ति को तत्तद्भावेच्छात्मिका भक्ति कहते हैं॥ २९८, २९९॥

**श्रीमूर्त्तेर्माधुरीं प्रेक्ष्य तत्तल्लीलां निशम्य वा।**
**तद्भावाकाङ्क्षिणो ये स्युस्तेषु साधनतानयोः।**
**पुराणे श्रूयते पाद्मे पुंसामपि भवेदियम्॥ (३००)**

### अनुवाद

श्रीमूर्त्ति की माधुरी का दर्शन करने या फिर उन-उन लीलाओं (व्रजदेवियों का श्रीकृष्ण के साथ) को श्रवण करने से जो लोग व्रजदेवियों के उन-उन भावों की प्राप्ति की अभिलाषा करते हैं वे लोग उभयविध कामानुगा भक्ति साधना के अधिकारी होते हैं

पद्म पुराण में कहा गया है कि पुरुषों की भी इस प्रकार की भक्ति हो सकती है॥ ३००॥

### दुर्गमसङ्गमनी

श्रीमूर्त्तेः श्रीकृष्णप्रतिमायाः माधुरीं तत्प्रेयसीभिरपि प्रतिमारूपाभिः सह लीलादिमाधुर्य्यविशेषं प्रेक्ष्य; तस्यास्तत्तद्भावादिमाधुर्य्यं निशम्येति श्रुत्वा, केवलं श्रवणं यत् पूर्वमुक्तम् तत्र तु तस्याः प्रेक्षणेऽपि तस्य श्रवणस्य साहाय्यमवश्यं मृग्यत इत्यभिप्रेतं; यद्विना मूलतत्तद्रूपलीलाद्यस्फूर्त्तेः। तत्तल्लीलाश्रवणन्तु तत्तत्प्रेक्षणं विनापि कार्य्यकरमित्याह— तदिति। अनयोर्द्विविधकामानुगयोः, तेषु साधनता, अतएव

तयोरधिकारिण इत्यर्थः॥ ३००॥

## अनुवाद

श्रीकृष्ण प्रतिमा की माधुरी को देखकर, यदि आस्वादन करने का लोभ होता है।

एवं प्रतिमा रूपा प्रेयसी वर्ग के साथ लीला माधुर्य को देखकर भाव माधुर्य आस्वादन करने का लोभ होता है, तो दो प्रकार भक्ति साधन का अधिकार होता है।

इस प्रकार उन उन माधुर्य को सुनकर यदि भावमाधुर्य आस्वादन करने का लोभ होता है, तो उभयविध भक्ति साधन का अधिकारी होता है।

"तत्तद् भावादि माधुर्य श्रुते" पद्य में केवल श्रवण की बात कही गयी है, और यहाँ पर "श्रीमूर्त्तेर्माधुरीं प्रेक्ष्ण" दर्शन करने की बात कहते हैं, किन्तु दर्शन में भी श्रवण करने की सहायता की आवश्यकता है। जिसके बिना उन उन लीलादि स्फूर्त्ति नहीं होगी।

किन्तु लीला श्रवण दर्शन के बिना भी कार्यकर है। उन उन भावों की आकाङ्क्षा सम्पन्न व्यक्ति ही दो प्रकार कामानुगा भक्ति का साधक होगा। एवं अधिकारी भी होगा॥ ३००॥

## अर्थरत्नाल्प-दीपिका

अनयोर्लोभोत्पत्तेर्द्विविधं कारणं दर्शयन्नधिकारिण आह— श्रीमूर्त्तेरिति। तत्तल्लीलां तां तां प्रसिद्धां पूर्व्वानुरागरासादिकां लीलाम्। तासां नायिकात्वसखीत्वाभ्यां द्विविधानां व्रजदेवीनां भावयोः काङ्क्षिणो लोभिनो ये स्युस्तेषु अनयोः सम्भोगेच्छामयी तत्तद्भावेच्छात्मेति द्विविधकामानुगयोः क्रमेण साधनता, ते अनयोः साधनाधिकारिण इत्यर्थः। ननु श्रीमूर्त्तेर्माधुरीं दृष्वा लुब्धस्त्रीणां सम्भोगेच्छामयी स्यात्, पुंसां तु स्यान्नवेत्यत आह— पुराण इति। इयं सम्भोगेच्छामयी॥ ३००॥

## अनुवाद

सम्भोगेच्छामयी और तद्भावेच्छामयी रूपा दो प्रकार भक्ति के दो प्रकार लोभोत्पत्ति का कारण दिखाकर अधिकारी का वर्णन करते हैं।

श्रीमूर्त्ति की माधुरी को देखकर एवं पूर्वानुराग रास आदि लीलाओं को सुनकर यदि व्रजदेवियों का स्वजातीय भाव माधुर्य आस्वादन करने का लोभ होता है तो वह इस भक्ति का अधिकारी है।

नायिकारूपा एवं सखीरूपा दो प्रकार व्रजदेवियों के भाव को प्राप्त करने के लिए आकांक्षा लोभ यदि होता है, तो सम्भोगेच्छामयी, एवं तत्तद्भावेच्छात्मा इन दोनों कामानुगा को प्राप्त करने के क्रम से साधन का अधिकारी होता है।

श्रीमूर्त्ति की माधुरी को देखकर लुब्ध स्त्रियों को सम्भोगेच्छामयी भक्ति हो सकती है, किन्तु पुरुष शरीर में यह भक्ति होगी कि नहीं? इसके उत्तर में कहते हैं— पद्म पुराण की आख्यायिका के अनुसार सुनने में आता है कि सम्भोगेच्छामयी भक्ति पुरुषों की भी होती है॥ ३००॥

## भक्तिसार-प्रदर्शिनी

श्रीमूर्त्तेः श्रीकृष्णप्रतिमायाः माधुरीं प्रेक्ष्य। एवं तत्प्रेयसीभिरपि प्रतिमारूपाभिः सह शास्त्रे

श्रुतलीलादिमाधुर्य्यमप्यनुभूय च। तस्मात्तत्तद्भावादिमाधुर्य्ये श्रुते धीर्यदपेक्षत इति हि पूर्वग्रन्थे (भ.र.सि. १/२/२९२) यत् केवलं श्रवणमात्रमुक्तं, तत्र श्रीमूर्त्तेर्दर्शनेऽपि श्रवणस्य साहाय्यमवश्यं मृग्यत इत्यभिप्रेतम्। श्रवणं विना मूलभूततत्तद्रूपलीलाद्यस्फूर्त्तेः। तत्तल्लीला श्रवणन्तु श्रीमूर्त्तिप्रेक्षणं विनापि कार्यकरमित्याह— तत्तल्लीलेति। अनयोर्द्विविधकामानुगयोस्तेषु साधनता। अतएव ते जना द्विविधकामानुगा भक्तेरधिकारिण इत्यर्थः॥ ३००॥

## अनुवाद

श्रीकृष्ण प्रतिमा की माधुरी को देखकर यदि माधुर्यास्वादन करने का लोभ मन में होता है तो, वह इस कामानुगा भक्ति का साधक एवं अधिकारी होगा।

एवं प्रतिभा रूपा प्रेयसी वृन्द की श्रीकृष्ण के साथ लीलादि माधुर्यास्वादन का श्रवण शास्त्र से सुनकर उसको प्राप्त करने का लोभ यदि होता है, तो वह व्यक्ति इस भक्ति का साधक एवं अधिकारी होगा।

"तत्तद् भावादि माधुर्य श्रुते धीर्यद पेक्षते" पूर्व ग्रन्थ (१/२/२९२) में केवल श्रवण का ही उल्लेख किया गया है। यहाँ पर दर्शन की बात कहते हैं।

श्री मूक्ति दर्शन में भी श्रवण का साहाय्य अवश्य है। श्रवण के विना मूलभूत उन उन रूप लीलादिओं की स्फूर्त्ति नहीं होगी।

उन उन लीलाओं का श्रवण—श्रीमूर्त्ति के दर्शन के बिना भी कार्यकर है। इसलिए कहते हैं—"तत्तल्लीलां निशम्य वा"

इस प्रकार सम्भोगेच्छामयी एवं तदभावेच्छात्मिका भक्ति का साधक एवं अधिकारी व्रजदेवीओं के भावमाधुर्यास्वादन में लुब्ध व्यक्ति ही होगा॥ ३००॥

**यथा—**

**पुरा महर्षयः सर्वे दण्डकारण्यवासिनः।**
**दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्॥　　(३०१)**

## अनुवाद

प्राचीन काल में दण्डकारण्य वासी महर्षिगण वन में श्रीरामचन्द्र को देखकर उनसे भी परम सुन्दर श्रीकृष्ण को भोग करने के लिए इच्छुक हुए थे॥ ३०१॥

## दुर्गमसङ्गमनी

पुरेति— महर्षयोऽत्र श्रीगोकुलस्थश्रीकृष्णप्रेयस्यनुगतवासनाः त एव सर्व इत्यर्थः। ते च रामं दृष्ट्वा ततोऽपि सुन्दरविग्रहं हरिं श्रीकृष्णं भाव्यवतारमपि तत्प्रतिपादकशास्त्रे विद्वत्प्रसिद्धं गोकुले प्रेयस्यो भूत्वा उपभोक्तुमैच्छन्, मनसा वरं वृण्वते स्म॥ ३०१॥

## अनुवाद

दण्डकारण्य निवासी सभी महर्षिगण श्रीगोकुल स्थित श्रीकृष्ण प्रेयसियों की अनुगत वासना

युक्त थे, इसलिये श्रीराम को देखकर, श्रीराम से भी सुन्दर विग्रह श्रीकृष्ण, जिनके बारे में उन्हें शास्त्र से विद्वत्प्रसिद्धं ज्ञान था कि वे द्वापर में गोकुल में अवतरित होंगे, उनके साथ रमण करने की इच्छा की। मन ही मन श्रीरघुनाथ के निकट इस आशय के वर की प्रार्थना की ॥ ३०१ ॥

## अर्थरत्नाल्प-दीपिका

रामं दृष्ट्वा ततोऽपि सुविग्रहं हरिं स्वोपास्यं श्रीकृष्णं भोक्तुमैच्छन्। रामदर्शनात् श्रीकृष्णे उद्बुद्धरतित्वात् सुष्ठु रिरंसामकुर्व्वन्॥ ३०१ ॥

## अनुवाद

श्रीराम को देखकर उनसे भी सुविग्रह श्रीहरि निज उपास्य श्रीकृष्ण को भोग करने की इच्छा हुई। श्रीराम को देखकर श्रीकृष्ण में रति उद्बुद्ध हो गयी, इस कारण से सुन्दर रूप से रमण करने की इच्छा हुयी॥ ३०१ ॥

## भक्तिसार-प्रदर्शिनी

पुरेति— महर्षयोऽत्र श्रीगोकुलस्थश्रीकृष्णप्रेयसीनाम् अनुगतवासना ज्ञेयाः। ते च रामं दृष्ट्वा ततोऽपि सुन्दरविग्रहं हरिं श्रीकृष्णम् आगाम्यवतारमपि तत्प्रतिपादकशास्त्रे विद्वत्प्रसिद्धं तं गोकुले प्रेयस्यो भूत्वा उपभोक्तुमैच्छन् श्रीरघुनाथनिकटे मनसा तादृशं वरं वृण्वते स्म॥ ३०१ ॥

## अनुवाद

दण्डकारण्य निवासी महर्षिगण श्रीगोकुल स्थित श्रीकृष्ण प्रेयसियों की अनुगत वासना युक्त थे, इसलिये श्रीराम को देखकर, श्रीराम से भी सुन्दर विग्रह श्रीकृष्ण, जिनके बारे में उन्हें शास्त्र से विद्वत्प्रसिद्धं ज्ञान था कि वे द्वापर में गोकुल में अवतरित होंगे, उनके साथ रमण करने की इच्छा की। मन ही मन श्रीरघुनाथ के निकट इस आशय के वर की प्रार्थना की ॥ ३०१ ॥

**ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।**
**हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्॥ इति। (३०२)**

## अनुवाद

वे सभी दण्डकारण्यवासी महर्षिगण स्त्रीत्व को प्राप्त होकर गोकुल में उत्पन्न हुए, और काम के द्वारा हरि को प्राप्त करके भवार्णव से मुक्त हो गये॥ ३०२ ॥

## दुर्गमसङ्गमनी

ते च सर्वे कल्पवृक्षादिव तस्मादवचनेनैव वरं लब्ध्वा देशान्तरगोपीनां गर्भे स्त्रीत्वमापन्नाः सर्वत्र गोकुलनाम्नातिविख्याते श्रीमन्नन्दगोकुले कथञ्चित्ताभ्य एवागताभ्यः सम्यगुत्पन्ना हरिं ततोऽपि मनोहरं श्रीकृष्णमेव कामेन सङ्कल्पमात्रेण सम्प्राप्य ततस्तदनन्तरमेव मुक्ता भवार्णवादिति। (भा. १०/२९/९) "अन्तर्गृहगताः काश्चिदित्यादि"रीत्या ज्ञेयम्॥ ३०२ ॥

## अनुवाद

श्रीरामचन्द्र के कुछ भी न कहने पर भी कल्पवृक्ष के तरह वर प्राप्त कर देशान्तर स्थित गोपियों

के गर्भ से स्त्री होकर उत्पन्न हुये थे। सर्वत्र गोकुल नाम से विख्यात श्रीमन्नन्द गोकुल में किसी प्रकार से समागत गोपियों के गर्भ से सम्यक् रूप से उत्पन्न होकर, श्रीरामचन्द्र से भी मनोहर हरि श्रीकृष्ण को ही काम अर्थात् संकल्प मात्र से प्राप्त कर भवार्णव से मुक्त हो गये थे, इसकी रीति का वर्णन (भा. १०/२९/९) में इस प्रकार है—

अन्तर्गृह गताः काश्चिद् गोप्योऽलब्धविनिर्गमाः।
कृष्णं तद्भावना युक्ता दध्युर्मीलितलोचनाः॥

उस समय कुछ गोपियाँ घरों के भीतर थीं। उन्हें बाहर निकलने का मार्ग ही न मिला। तब उन्होंने नेत्र मूँद लिए और बड़ी तन्मयता से श्रीकृष्ण के सौन्दर्य, माधुर्य और लीलाओं का ध्यान करने लगीं॥ ३०२॥

## अर्थरत्नाल्प-दीपिका

ते सर्वे स्त्रीत्वं स्त्रीभावं सम्भोगेच्छात्मकं प्रेमाणमापन्नाः साधनवशात् प्राप्ताः सन्तो गोकुले समुत्पन्नाः गोप्यो जाताः। कामेन श्रीराधादिगोकुलदेवीसङ्गात् काममपि माधुरीं प्राप्तेनानुरागादिप्रेमविशेषेण हरिं सम्प्राप्य पूर्व्वदेहान् त्यक्त्वा श्रीकृष्णभोगयोग्यशरीराः सत्यः प्रपञ्चागोचरे गोकुलप्रकाशे मनोरथपूर्त्या प्राप्य भवार्णवात् भवार्णवं प्रपञ्चगोचरत्वं परित्यज्य मुक्ताः परमानन्दं प्राप्ता वर्त्तन्त इत्यर्थः। अत्रेदं पतिपद्यते— साधनेन प्रेमैव प्रायो भवति। 'प्रेम्ण एव विलासत्वाद् वैरल्यात् साधकेष्वपि। अत्र स्नेहादयो भावा विविच्य न हि शंसिताः' (भ.र.सि. १/४/१९) इति वक्ष्यमाणत्वात्। तेन गोकुले जन्मैव, न तु तस्य सम्यक् प्राप्तिः। सा तु श्रीकृष्णतत्प्रियाणां कृपया सङ्गादिजातानुरागादिनैव, तथैकादशे च (भा. ११/१२/८)—

"केवलेन हि भावेन गोप्यो गावो नगा मृगाः।
येऽन्ये मूढ़धियो नागाः सिद्धा मामीयुरञ्जसा॥" इति। अस्यार्थः— गोप्यो याः प्रेम्णा जातास्ताः केवलेन भावेन कृष्णकृपया सङ्गादिजातानुरागादिरूपेण प्रेमविशेषेण सिद्धा मामीयुः प्रपञ्चागोचरे गोकुले मां प्राप्ताः सन्ति, गवादयस्तु यथोचितप्रेम्णेयुरिति। दुःसह प्रेष्ठेत्यादि दशमगत (भा. १०/२९/१०) श्लोकद्वये चैतदेव स्पष्टम्॥ ३०२॥

## अनुवाद

वे सभी दण्डकारण्यवासी महर्षिगण स्त्रीभाव अर्थात् सम्भोगेच्छात्मक प्रेम को प्राप्त कर साधन के कारण गोकुल में जन्म ग्रहण करके गोपी हो गये। काम के द्वारा अर्थात् श्रीराधादि गोकुल देवीगणों के सङ्ग से किसी अनिर्वचनीय माधुरी प्राप्त होने से अनुरागादि प्रेम विशेष से हरि को प्राप्त कर पूर्व देह को छोड़कर श्रीकृष्ण के भोग योग्य शरीर को प्राप्त किये। और फिर प्रपञ्च के अगोचर गोकुल प्रकाश में मनोरथ पूर्ण हो जाने से प्रपञ्च गोचर रूप भवार्णव को छोड़कर परमानन्द प्राप्त कर मुक्त हो गये।

यहाँ जानने का विषय यह है— प्रायकर साधन के द्वारा प्रेम ही होता है। 'किन्तु प्रेम के विलास होने के कारण एवं विरल होने कारण साधक शरीर में स्नेहादि नहीं होते हैं। अतएव स्नेहादि भाव का विवेचन यहाँ पर नहीं किया गया है। (४/१९) में इसको कहेंगे।

इसलिए उन सब महर्षियों का गोकुल में जन्म ही हुआ था। किन्तु कृष्ण की सम्यक् प्राप्ति नहीं हुयी। श्रीकृष्ण एवं उनकी प्रियावर्ग के कृपा से सङ्ग जनित अनुराग आदि से ही कृष्ण को प्राप्त किये (भा. ११/१२/८) में उक्त है—

"केवलने हि भावेन गोप्यो गावो नगा मृगाः।
येऽन्ये मूढ़धियो नागाः सिद्धा मामीयुरञ्जसा॥"

"गोपियाँ, गायें, वृक्षगण, व्रज के हरिण आदि पशुगण एवं अपर मूढ़ बुद्धि सर्पगण, एकमात्र मदीय सङ्गजनित भाव अर्थात् प्रीति लक्षण भक्ति द्वारा कृतार्थ होकर सुखपूर्वक मुझको प्राप्त किये थे।"

इसका अर्थ इस प्रकार है—

गोपियों में जो प्रेम हुआ, उसका कारण ही है कि श्रीकृष्ण की कृपा से सत्सङ्ग हुआ। उससे उत्पन्न अनुराग रूप प्रेम विशेष के द्वारा सिद्ध मुनिगण मुझको प्रपञ्च के अगोचर में जो गोकुल है उसमें मुझको प्राप्त किये। गो प्रभृति तो यथायथ रूप से प्रेम के द्वारा मुझको प्राप्त किये थे।

श्रीमद्भागवत के दो श्लोकों (१०/२९/१०,११) से इसका विवरण है—

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः॥
तमेव परमात्मानं जारबुध्यापि सङ्गताः।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः॥

दुःसह प्रिय विरह जनित ताप से उनके समस्त अशुभ विदूरित होने पर ध्यान योग से अच्युत के आलिङ्गन सुख द्वारा उनका मङ्गलमय पुण्य बन्धन भी क्षीण हुआ। ध्यान में उनके सामने भगवान् श्रीकृष्ण प्रकट हुये। उन्होंने मन ही मन बड़े प्रेम से, बड़े आवेग से उनका आलिङ्गन किया। जार बुद्धि होने पर भी उस समय उन्हें इतना सुख, इतनी शान्ति मिली कि उनके सबके गुणमय सब पुण्य के संस्कार एक साथ ही क्षीण हो गये॥ ३०२॥

## भक्तिसार-प्रदर्शिनी

ते च मुनयः कल्पवृक्षादिव रघुनाथादवचनेनैव वरं लब्ध्वा देशान्तरे गोपीनां गर्भे स्त्रीत्वमापन्नाः, सर्वत्र गोकुलनाम्नातिविख्याते श्रीमन्नन्दगोकुले कथञ्चित्ताभ्य एवागताभ्यः सम्यगुत्पन्ना हरिं श्रीकृष्णमेव कामेन सङ्कल्पमात्रेण सम्प्राप्य ततस्तदनन्तरमेव मुक्ता भवार्णवात् प्राकृतत्वांशात्; अतएव रासक्रीड़ायामन्तर्गृहनिरुद्धा निरोधजन्यविरहेणैव तेषां प्राकृतत्वांशो गतः। अस्य विशेषव्याख्या तु दशमटिप्पण्यां द्रष्टव्या। इदन्तु भक्तेरानुसङ्गिकं फलम्॥ ३०२॥

## अनुवाद

वे मुनिगण श्रीरामचन्द्र के कुछ भी न कहने पर भी कल्पवृक्ष के तरह वर प्राप्त कर देशान्तर स्थित गोपियों के गर्भ से स्त्री होकर उत्पन्न हुये थे। सर्वत्र गोकुल नाम से विख्यात श्रीमन्नन्द गोकुल में किसी प्रकार से समागत गोपियों के गर्भ से सम्यक् रूप से उत्पन्न होकर, श्रीरामचन्द्र से भी मनोहर हरि

श्रीकृष्ण को ही काम अर्थात् संकल्प मात्र से प्राप्त करने के बाद ही भवार्णव से अर्थात् प्राकृत अंश से मुक्त हो गये थे, इसकी रीति का वर्णन (भा. १०/२९/९) में इस प्रकार है—

अन्तर्गृह गताः काश्चिद् गोप्योऽलब्धविनिर्गमाः।
कृष्णं तद्भावना युक्ता दध्युर्मीलितलोचनाः॥

उस समय कुछ गोपियाँ घरों के भीतर थीं। उन्हें बाहर निकलने का मार्ग ही न मिला। तब उन्होंने नेत्र मूँद लिए और बड़ी तन्मयता से श्रीकृष्ण के सौन्दर्य, माधुर्य और लीलाओं का ध्यान करने लगीं।

अतएव रासक्रीडा के समय गृह में निरुद्ध गोपियों का निरोधजन्य विरह के द्वारा उनका प्राकृतत्व अंश समाप्त हो गया। इसकी विशेष व्याख्या दशम टिप्पणी में देखना चाहिये। यह प्राकृतत्व नाश भक्ति का आनुसङ्गिक फल है॥ ३०२॥

**रिरंसां सुष्ठु कुर्वन् यो विधिमार्गेण सेवते।**
**केवलेनैव स तदा महिषीत्वमियात्पुरे॥ (३०३)**

### अनुवाद

जो श्रीकृष्ण के सहित सुष्ठु रूप से रमण करने की इच्छा करके केवल विधि मार्ग से ही श्रीकृष्ण की सेवा करता है वह द्वारकापुरी में महिषीत्व अर्थात् महिषिओं का अनुगामी होता है॥ ३०३॥

### दुर्गमसङ्गमनी

य इति पुंलिङ्गत्वेन निर्देशो जनमात्रविवक्षया, स्त्री वा पुमान् वेत्यर्थः। रिरंसां कुर्वन्निति— न तु श्रीव्रजदेवीभावेच्छां कुर्वन्नित्यर्थः, किन्तु सुष्ठ्विति, महिषीवद्भावस्पृष्टतया कुर्वन्, न तु सैरिन्ध्रीवत्तदस्पृष्टतयेत्यर्थः, विधिमार्गेणेति वल्लवीकान्तत्वध्यानमयेन मन्त्रादिनापि, किमुत महिषीकान्तत्वध्यानमयेनेत्यर्थः। केवलेनेति— व्रजादिसम्बन्धलिप्साग्रहं विनेत्यर्थः, महिषीत्वं तद्वर्गानुगामित्वमियादिति। श्रीमद्दशाक्षरादावप्यावरणपूजायां तन्महिषीष्वेव तस्यात्यादरादिति भावः। तदेति— कदाचिद्विलम्बेनैव, न तु रागानुगावच्छैघ्र्येणेत्यर्थः॥ ३०३॥

### अनुवाद

"यो विधि मार्गेण सेवते" यहाँ पर 'य' शब्द का प्रयोग पुल्लिङ्ग (पुरुषोत्तम लिङ्ग) में किया गया है। इससे मनुष्य मात्र का ग्रहण होता है। वह स्त्री हो अथवा पुरुष।

यदि वह रमण करने की इच्छा से प्रेरित होकर तथा व्रजदेवियों के भावेच्छा को ग्रहण न करके यदि विधि मार्ग से श्रीकृष्ण की सेवा करता है तो वह द्वारका में महिषिगणों का परिकर होगा। किन्तु महिषिओं के समान भाव स्पृष्ट रूप से सेवा करता है, तब होगा; किन्तु सैरिन्ध्री के तरह महिषिओं के समान भक्ति न होकर सेवा करने से महिषिओं का परिकर नहीं होगा। किन्तु यदि वह श्रीकृष्ण के दशाक्षर मन्त्र एवं ध्यान के द्वारा भी सपरिकर श्रीकृष्ण की सेवा करता है, तो भी महिषीत्व को प्राप्त करेगा। तो फिर महिषीकान्त ध्यानादि के द्वारा श्रीकृष्ण की सेवा करने से तो द्वारका में महिषिओं का परिकर होगा ही।

इस प्रकार की प्राप्ति व्रजादि सम्बन्ध लिप्सा का आग्रह को छोड़कर केवल विधि मार्ग से श्रीकृष्ण की सेवा करने से होती है। महिषीत्व प्राप्त करता है, इसका अर्थ है, महिषी वर्ग के अनुगामी होगा।

श्रीमद्दशाक्षर मन्त्र की आवरण पूजा में भी अति आदर से महिषिओं को स्थान दिया गया है।

किन्तु यह प्राप्ति कदाचित् होगी, और विलम्ब से ही होगी, रागानुगा भक्ति साधन की तरह सत्वर प्राप्ति नहीं होगी॥ ३०३॥

## अर्थरत्नाल्प-दीपिका

रिरंसां श्रीनन्दनन्दनसुखार्थं रमणेच्छां सुष्ठु कुर्व्वन्नित्यनेन सिद्धरूपेण रागानुगया व्रजे सेवा सुष्ठु दर्शिता। विधिमार्गेणेति— साधकरूपेण वैधभक्त्येति। केवलेनेति— रागानुगामिश्रेण चेत्तदा मथुरायां महिषीत्वमिति भावः। अभिलाषे सत्यपि यथोचितसाधनेनैव तत्प्राप्तिरिति दर्शितम्। 'यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रतेति' (भा. १०/१६/३६), 'वाञ्छन्ति यद् भवभियो मुनयो वयञ्च' (भा. १०/४७/५८) इत्यादिभिस्तद्वाञ्छायां सत्यामपि तदप्राप्तिः साधनवैषम्यादेव॥ ३०३॥

## अनुवाद

श्री नन्दनन्दन को सुखी करने के लिए अच्छी तरह सिद्ध रूप से रागानुगा भक्ति के द्वारा सपरिकर व्रज में श्रीकृष्ण की सेवा का प्रदर्शन उत्तम रूप से किया गया है।

विधि मार्ग से वैधी भक्ति के द्वारा साधक रूप से यदि श्रीकृष्ण की सेवा करता है, तो द्वारका में श्रीकृष्ण की महिषीओं का परिकर होगा।

और रागमिश्रित भक्ति के द्वारा विधि मार्ग से यदि श्रीनन्दनन्दन की सेवा करता है तो मथुरा में महिषीत्व प्राप्त करेगा।

यह प्राप्ति अभिलाष रहने पर भी यथोचित साधन से ही होगी। यह दिखाया गया है।

(भा. १०/१६/३६)—

कस्यानुभावोऽस्य न देव विद्महे, तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रता॥

"भगवन्! हम नहीं समझ पातीं कि इसकी किस साधना का फल है जो यह आपके चरण कमलों की धूल का स्पर्श पाने का अधिकारी हुआ है? आपके चरणों की रज इतनी दुर्लभ है कि उसके लिए आपकी अर्द्धाङ्गिनी लक्ष्मीजी ने भी बहुत दिनों तक समस्त भोगों का त्याग कर नियमों का पालन करते हुए तपस्या किया था।"

(भा. १०/४७/५८) —

एताः परं तनुभृतो भुवि गोपवध्वो, गोविन्द एव निखिलात्मनिरूढ़ भावाः।
वाञ्छन्ति यद भवमियो मुनयो वयञ्च, किं ब्रह्म जन्मभिरनन्तकथा रसस्य॥

"इस पृथ्वी पर केवल इन गोपियों का ही शरीर धारण करना श्रेष्ठ एवं सफल है। क्योंकि ये

सर्वात्मा भगवान् श्रीकृष्ण के परम प्रेममय दिव्य महाभाव में स्थित हो गयी हैं। प्रेम की यह ऊँची से ऊँची स्थिति संसार के भय से भीत मुमुक्षु जनों के लिए ही नहीं, अपितु बड़े-बड़े मुनियों, मुक्त पुरुषों तथा हम भक्तजनों के लिए भी अभी वाञ्छनीय ही है। हमें इसकी प्राप्ति नहीं हो सकी। सत्य है, जिन्हें भगवान् श्रीकृष्ण की लीला कथा के रस का स्वाद लग गया है उन्हें कुलीनता की द्विजाति समुचित संस्कार की और बड़े-बड़े यज्ञादि में दीक्षित होने की क्या आवश्यकता है? अथवा यदि भगवान् की कथा का रस नहीं मिला, उसमें रुचि नहीं हुई, तो अनेक महाकल्पों तक बार-बार ब्रह्मा होने से ही क्या लाभ है?"

इत्यादि के द्वारा वाञ्छा होने पर भी साधन का वैषम्य होने से इस प्रकार वाञ्छा होने पर भी उसकी प्राप्ति नहीं हुयी॥ ३०३॥

## भक्तिसार-प्रदर्शिनी

'य' इति पुंलिङ्गत्वेन निर्देशो जनमात्रविवक्षया स्त्री वा पुमान् वेत्यर्थः। साक्षात् श्रीकृष्णेन सह रमणेच्छायां लोभस्य प्रवर्त्तकत्वेपि निजभावप्रातिकूल्यानि तानि सर्वाणि शास्त्रविहितानीति त्यागानौचित्यमिति बुद्ध्या यदि करोति, तदा द्वारकापुरे महिषीपरिजनत्वं प्राप्नोतीत्याह— रिरंसामिति। केवलेनैव साकल्येनैवति यावत्। न तु निजभावप्रतिकूलान् महिषीपूजाद्वारकाध्यानादीन् कांश्चित् कांश्चित् अंशान् परित्यज्येति। तत्र एवकारार्थः 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयो' रित्यमरः। येषान्तु वृन्दावने राधाकृष्णयोर्माधुर्यास्वादनेऽभिलाषः, अथच न्यासमुद्रादिवैधीमार्गानुसारेण भजनं, तेषां द्वारकायां न रुक्मिणीकान्तस्य प्राप्तिस्तत्राभिलाषाभावात्। न वा वृन्दावने श्रीराधाकृष्णयोः प्राप्तिः, रागमार्गेण भजनाभावत्। तस्मात्तेषां विधिमार्गेण भजनकार्यस्य ऐश्वर्यज्ञानस्य प्राधान्यं यत्र, यथाभूतस्य वृन्दावनस्यांशे गोलोके राधाकृष्णयोः प्राप्तिः, न तु शुद्धमाधुर्यमये वृन्दावने इति ज्ञेयम्। गोलोके श्रीवृन्दावनस्यांशत्वं श्रीप्रभुवरैः रूपगोस्वामिचरणैः स्तवमालायामुपश्लोकितम्। स च श्लोको यथा नन्दापहरणे—

"लोको रम्यः कोऽपि वृन्दाटवीतो नास्ति क्वापीत्यञ्जसा बन्धुवर्गम्।
वैकुण्ठं यः सुष्ठु सन्दर्श्य भूयो गोष्ठं निन्ये पातु स त्वां मुकुन्दः" इति॥ अत्र

वैकुण्ठपदं कृष्णवैकुण्ठगोलोकपरमेव। यतो वृन्दावनस्य माधुर्योत्कर्षदर्शनार्थं बन्धुवर्गाणां गोपानां कृष्णवैकुण्ठे गोलोके श्रीकृष्णप्रेरितगमनं दशमे वर्णितम्। तद्वर्णनं यथा (भा. १०/२८/१५)

"दर्शयामास लोकां स्वां गोपानां तमसः परम्।
ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः।
ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात् पुरा॥
नन्दादयस्तु तद्दृष्ट्वा परमानन्दनिर्वृताः।
कृष्णं च तत्रच्छन्दोभिः स्तूयमानं सुविस्मिताः॥" अत्र ब्रह्मणो

नराकृतिपरब्रह्मणः श्रीकृष्णस्य लोकं गोलोकमेव, न तु रमावैकुण्ठं, पूर्वत्र स्वं लोकमित्यत्र स्वस्य श्रीकृष्णस्य लोकमिति व्याख्यया रमावैकुण्ठस्य कृष्णलोकत्वाभावात् तथा कृष्णञ्च तत्रच्छन्दोभिः स्तूयमानमित्युक्त्या रमावैकुण्ठे कृष्णलीलाया असम्भवाच्च। ब्रह्मलोकपदेन गोलोक एव व्याख्यातः।

वैष्णवतोषण्यामपि तथा व्याख्यातम्। इदमेव लघुभावतामृते विवृतं (१/५/४९८) यथा—

''यत्तु गोलोकनाम स्यात्तत्तू गोकुलवैभवम्।

तदात्मवैभवत्वञ्च तस्य तन्महिमोन्नते'रिति॥ अस्यार्थ:— तु भिन्नोपक्रमे। यद् गोलोकनाम गोलोकसंज्ञकं तच्च तत्तू गोकुलवैभवं, गोकुलस्य महामाधुर्यत्वेन ख्यातस्य वैभवं वैभवरूपोऽंशः। अतएव तस्य गोलोकस्य तदात्मवैभवत्वं गोकुलस्ववैभवरूपत्वं भवति। गोलोको गोकुलस्य स्ववैभवरूपो भवतीत्यर्थः। कुतः? तन्महिमोन्नतेः ततो गोलोकात् सकाशात् महिमाधिक्यादिति। यथा पातालखण्डे—

"अहो मधुपुरी धन्या वैकुण्ठादपि गरीयसी।

दिनमेकं निवासेन हरौ भक्तिः प्रजायते" इति। अत्र वैकुण्ठशब्देन गोलोक एव तैरभिप्रेतो ज्ञेयः। तस्य तन्महिमोन्नतेरित्यनन्तरं यथा पातालखण्डे अहो मधुपुरीत्याद्युक्तेः। तदेति कदाचिद्विलम्बेनैव, न तु रागानुगावच्छैघ्रयेण इत्यर्थः॥ ३०३॥

## अनुवाद

"यो विधिमार्गेण सेवते" श्रीकृष्ण की सेवा करने के लिए मानव मात्र अधिकारी है। स्त्री पुरुष समस्त मानव इस भक्ति में अधिकारी हैं।

साक्षात् श्रीकृष्ण के सहित रमणेचछा में लोभ प्रवर्त्तक होने पर भी निज भाव विरुद्ध आचरण समूह को शास्त्र विहित होने के कारण त्याग करना उचित नहीं—इस बुद्धि से यदि करता है, तो वह व्यक्ति द्वारकापुरी में महिषी परिजन होगा।

सब प्रकार से विधि मार्ग के द्वारा यदि श्रीकृष्ण की सेवा करता है तो वह द्वारकापुरी में महिषी के परिकर होगा। इस प्रकार अर्थ 'केवलेन' शब्द का है।

किन्तु निजभाव के प्रतिकूल महिषी पूजा द्वारका ध्यान आदि के कुछ कुछ अंश को परित्याग करके सपरिकर श्रीकृष्ण की सेवा करने से ही द्वारका में महिषी के परिकरत्व की प्राप्ति नहीं होगी।

'केवलेनैव' यहाँ पर एव कार का अर्थ अमर कोष के अनुसार निर्णीत, केवल, एक एवं कृत्स्न है।

जिसकी अभिलाष—वृन्दावन में श्रीराधाकृष्ण के माधुर्यास्वादन करने के लिए है, अथच न्यास मुद्रादि वैधी मार्गानुसार से भजन होता है, उसकी द्वारका में रुक्मिणीकान्त की प्राप्ति नहीं होगी, कारण अभिलाष नहीं है। न तो वृन्दावन में श्रीराधाकृष्ण की ही प्राप्ति होगी। कारण वह भजन रागमार्ग का नहीं है। इसलिये ऐवश्वर्य ज्ञान प्रधान विधि मार्ग से भजन करने से वृन्दावन के अंश विशेष गोलोक में श्रीराध ाकृष्ण की प्राप्ति होगी। शुद्ध माधुर्यमय वृन्दावन में नहीं, इस प्रकार जानना होगा। गोलोक में वृन्दावन का अंशत्व है। इसका वर्णन श्री प्रभुवर श्रीरूप गोस्वामिचरण ने स्तव माला ग्रन्थ में किया है। उसका श्लोक इस प्रकार है—श्रीनन्द के अपहरण प्रसङ्ग में लिखित है— "वृन्दावन के समान रम्य लोक कहीं नहीं है, इसलिए वन्धुवर्ग की पुनर्वार वैकुण्ठ दिखाकर पुनर्वार मुकुन्द वृन्दावन को ले आये थे, वह मुकुन्द

तुम्हारी रक्षा करें।"

यहाँ पर वैकुण्ठ पद—कृष्ण वैकुण्ठ गोलक ही है। कारण वृन्दावन का माधुर्य उत्कर्ष दिखाने के लिए वन्धु वर्ग गोपों को कृष्ण वैकुण्ठ गोलोक में श्रीकृष्ण के द्वारा ले जाना था।

इसका वर्णन (भा. १०/२८/१५) में इस प्रकार है—

दर्शयामास लोकं स्वं गोपानां तमसः परम्।
तेतु ब्रह्म ह्रदं नीता मग्नाः कृष्णेन चोद्धृताः
ददृशुर्ब्रह्माणो लोकं यत्राक्रूरोऽध्यगात् पुरा॥
नन्दादयस्तु तं दृष्ट्वा परमानन्द निर्वृताः।
कृष्णं च तत्रच्छन्दोभिः स्तूयमानां सुविस्मिताः॥

भगवान् श्रीकृष्ण ने उन गोपों को मायान्धकार से अतीत अपना परम धाम दिखलाया।

जिस जलाशय में अक्रूर को पहले भगवान् ने अपना स्वरूप दिखलाया था, उसी ब्रह्म स्वरूप ब्रह्महृद में भगवान् उन गोपों को ले गये।

वहाँ उन लोगों ने उसमें डुबकी लगायी। वे ब्रह्महृद में प्रवेश कर गये। तब भगवान् ने उसमें से उनको निकालकर अपने परमधाम का दर्शन कराया।

उस दिव्य भगवत् स्वरूप लोक को देखकर नन्द आदि गोप परमानन्द में मग्न हो गये।

वहाँ उन्होंने देखा कि सारे वेद मूर्त्तिमान् होकर भगवान् श्रीकृष्ण की स्तुति कर रहे हैं। यह देखकर वे सबके सब परम विस्मित हो गये।

यहाँ पर नराकृति परम ब्रह्म श्रीकृष्ण का लोक गोलोक ही है। रमा वैकुण्ठ नहीं है। पहले "स्वलोकं" शब्द से श्रीकृष्ण लोक व्याख्या की गई है।

रमा वैकुण्ठ कृष्ण लोक नहीं है। वेदगण वहाँ पर श्रीकृष्ण को स्तव कर रहे थे, इस कथन से प्रतीत होता है कि रमा वैकुण्ठ में कृष्ण लीला की सम्भावना नहीं है।

और ब्रह्मलोक शब्द से गोलोक की ही व्याख्या की गयी है। वैष्णव तोषणी में भी इसकी वैसे ही व्याख्या है। लघु भागवतामृत ग्रन्थ में ही इसका विवरण है—

यत्तु गोलोक नाम स्यात्तत्तु गोकुल वैभवम्।
तदात्म वैभवत्वञ्च तस्य तन्महिमोन्नती।

गोलक नाम स्थान—गोकुल का वैभव है। महिमा के उन्नति को आत्म वैभव कहते हैं।

इसका अर्थ इस प्रकार है 'तु' कार भिन्न उपक्रम में प्रयुक्त होता है।

जिसका नाम गोलोक है, वह गोकुल का वैभव है। गोकुल महामाधुर्य का स्थान होने के कारण ऐवश्वर्य अंश गोलोक है। अतएव गोलोक, गोकुल का वैभव रूप होता है।

गोकुल का ऐश्वर्य प्रधान स्थान गोलोक है।

पातालखण्ड में वर्णित है—अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी। दिनमेकं निवासेन हरौ भक्तिः प्रजायते" इति।

अहो वैकुण्ठ से मधुपुरी श्रेष्ठ व धन्य है, जिसमें एक दिन निवास करने से ही श्रीहरि में भक्ति का उदय हो जाता है।

यहाँ पर आचार्य के मत में वैकुण्ठ शब्द से गोलोक को जानना होगा। पाताल खण्ड में ऐश्वर्य प्रधान कहने के बाद मधुपुरी धन्या कही गयी है।

महिषी परिकर की प्राप्ति कदाचित होगी एवं विलम्ब से होगी। रागानुगा के तरह शीघ्र प्राप्ति नहीं होगी॥ ३०३॥

**तथा च महाकौर्म्मे—**

**अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे।**
**भर्त्तारञ्च जगद्योनिं वासुदेवमजं विभुम्॥ इति। (३०४)**

## अनुवाद

महाकूर्म्म पुराण में कहा गया है कि—

अग्नि के महात्मा पुत्रगण विधि मार्ग से तपस्या करके स्त्रीत्व को प्राप्त कर विभु, अज, जगत् के कारण वासुदेव को पति के रूप में प्राप्त किये थे॥ ३०४॥

## दुर्गमसङ्गमनी

तपसा विधिमार्गेण, अत्र विधिमार्गोपलक्षणत्वेन वासनाविभेदोऽपि ज्ञेयः॥ ३०४॥

## अनुवाद

यहाँ तप शब्द से विधिमार्ग भक्ति को जानना है। विधिमार्ग उपलक्षण के द्वारा वासना के विभेद को भी जानना होगा॥ ३०४॥

## अर्थरत्नाल्प-दीपिका

तपसा विधिमार्गेण, महात्मानो महान् श्रीकृष्णसुखार्थरिरंसाकरणादुत्कृष्ट आत्मा मनो येषां ते तथा॥ ३०४॥

## अनुवाद

यहाँ तप शब्द से विधिमार्ग भक्ति को जानना है। महात्मा शब्द से श्रीकृष्ण को सुख देने के लिए रमणेच्छा करने से जिनका आत्मा व मन उत्कृष्ट है, इस प्रकार के अग्नि के पुत्रगण महान हैं॥ ३०४॥

## भक्तिसार-प्रदर्शिनी

तपसा विधिमार्गेण। अत्र विधिमार्गोपलक्षणत्वेन वासनाभेदोऽपि ज्ञेयः। अत्र भर्त्तारमिति पदमेव तस्य पुरे महिषीत्वप्राप्तिनिश्चयात्मकमिति॥ ३०४॥

## अनुवाद

यहाँ तप शब्द से विधिमार्ग भक्ति को जानना है। विधिमार्ग उपलक्षण के द्वारा वासना के विभेद

को भी जानना होगा। यहाँ पर "भर्त्तारम्" पद ही अग्नि के पुत्रगणों द्वारा द्वारका में महिषीत्व प्राप्त करने का निश्चायक है॥ ३०४॥

**अथ सम्बन्धानुगा—**

**सा सम्बन्धानुगा भक्तिः प्रोच्यते सद्भिरात्मनि।**
**या पितृत्वादिसम्बन्धमननारोपणात्मिका॥ (३०५)**

### अनुवाद

इसके बाद अब सम्बन्धानुगा भक्ति का वर्णन करते हैं—

महात्मागण उस भक्ति को सम्बन्धानुगा भक्ति कहते हैं जो अपने में पितृत्व आदि सम्बन्ध का मनन व आरोपण स्वरूप है॥ ३०५॥

### दुर्गमसङ्गमनी

पितृत्वादिसम्बन्धस्य यन्मननं विशेषचिन्तनं पुनस्तस्यारोपणं स्वस्मिन्नभिमननं तदात्मिकेत्यर्थः॥ ३०५॥

### अनुवाद

तदात्मिका अर्थात् पितृत्वादि सम्बन्ध का जो मनन अर्थात् विशेष चिन्तन, पुनर्वार उसका आरोपण करना अर्थात् अपने में अभिमनन करना, इस प्रकार की जो भक्ति है वह सम्बन्धानुगा है॥ ३०५॥

### अर्थरत्नाल्प-दीपिका

पितृत्वादिसम्बन्धमननं यन्नन्दादौ तस्यारोपात्मिकाभिमननस्वरूपा॥ ३०५॥

### अनुवाद

पितृत्वादि सम्बन्ध का मनन करना जो कि नन्दादि में है, उस सम्बन्ध का आरोप अपने में करना, अर्थात् अभिमनन करना सम्बन्धानुगा भक्ति है॥ ३०५॥

### भक्तिसार-प्रदर्शिनी

पितृत्वादिसम्बन्धस्य यन्मननं विशेषचिन्तनं पुनस्तस्यारोपणं स्वस्मिन्नभेदमननं तदात्मिकेत्यर्थः॥ ३०५॥

### अनुवाद

तदात्मिका अर्थात् पितृत्वादि सम्बन्ध का जो मनन अर्थात् विशेष चिन्तन, पुनर्वार उसका आरोपण करना अर्थात् अपने में अभेद मनन करना, इस प्रकार की जो भक्ति है वह सम्बन्धानुगा है॥ ३०५॥

**लुब्धैर्वात्सल्यसख्यादौ भक्तिः कार्य्यात्र साधकैः।**
**व्रजेन्द्रसुबलादीनां भावचेष्टितमुद्रया॥ (३०६)**

### अनुवाद

वात्सल्य एवं सख्यादि भक्ति में लुब्ध भक्ति के साधकगण इस सम्बन्धानुगा भक्ति में व्रजेन्द्र,

सुबलादि के भाव चेष्टा एवं मुदा परिपाटी को लेकर साधक व सिद्ध देह से श्रीकृष्ण की सेवा करे॥ ३०६॥

## दुर्गमसङ्गमनी

व्रजेन्द्रेति— न तु व्रजेन्द्रादित्वाभिमानेनापीत्यर्थः। पितृत्वाद्यभिमानो हि द्विधा सम्भवति— स्वतन्त्रत्वेन, तत्पित्रादिभिरभेदभावनया च। तत्रान्त्यमनुचितं भगवदभेदोपासनावत् तेषु भगवद्वदेव नित्यत्वेन प्रतिपादयिष्यमाणेषु तदनौचित्यात्। तथा तत्परिकरेषु तदुचितभावनाविशेषेणापराधापातात्॥ ३०६॥

## अनुवाद

व्रजेन्द्र, सुबलादि की भाव चेष्टित मुद्रा से सम्बन्धानुगा भक्ति करना चाहिये। न कि व्रजेन्द्रादित्व के अभिमान से। पितृत्वादि अभिमान दो प्रकार से सम्भव होते हैं। एक स्वतन्त्र रूप से, दूसरा श्रीकृष्ण के पिता आदि के साथ स्वयं के अभेद भावना से। इसके मध्य में द्वितीय प्रकार उपासना सर्वथा अनुचित है।

भगवान् के समान ही भगवान् के परिकर भी नित्य होते हैं, इसका प्रतिपादन आगे किया जायेगा। इसलिए भगवद् परिकरों के साथ अपने को अभेद मानना अनुचित है। कारण, उनके परिकरों के साथ अपने को अभेद भावना विशेष से अपराध ही होता है॥ ३०६॥

## अर्थरत्नाल्प-दीपिका

व्रजेन्द्रसुबलादीनां भावश्चेष्टितमनुभावाश्च तयोर्मुद्रा परिपाटी। भक्तिः साधकसिद्धरूपा सेवा॥ ३०६॥

## अनुवाद

व्रजेन्द्र, सुबल आदि के भाव, चेष्टा अर्थात् अनुभाव एवं इनके मुद्रा अर्थात् परिपाटी को लेकर साधक रूप में एवं सिद्ध रूप में सेवा करना सम्बन्धानुगा भक्ति है॥ ३०६॥

## भक्तिसार-प्रदर्शिनी

व्रजेन्द्रेति— न तु व्रजेन्द्रत्वाभिमानेनापीत्यर्थः। पितृत्वाभिमानो हि द्विधा सम्भवति— स्वतन्त्रत्वेन, तत्पित्रादिभिरभेदभावनया च, तत्रान्त्यमनुचितम्। भगवदभेदोपासनावत् तेषु तदनौचित्यात्। सुबलादौ सायुज्यप्राप्तिः सख्यादिभक्तौ। अहङ्ग्रहोपासनासत्त्वेऽपि व्रजेन्द्रोऽहमित्यहङ्ग्रहोपासना तु केवलं नरकसाधिकेति ज्ञेयम्। तस्या व्रजेश्वर्यादौ विरुद्धभावनाप्रयोजकत्वात्। भक्तिः सेवा, साधकरूपेण सिद्धरूपेण साधकैः कार्या। अतएव सेवा साधकरूपेण सिद्धरूपेण चेत्यत्रापि तथैव व्याख्यातम्। व्रजेन्द्रसुबलादीनां भावचेष्टितमुद्रया सेवा कार्येत्यत्र सिद्धदेहेनैव मानसी सेवा कार्या, न तु साधकैः साधकदेहेन सुबलादीनां भावचेष्टितमुद्रया सेवा कार्येति व्याख्यातुं शक्यम्। सुबलादिभिरकृतानां गुरुपादाश्रयणदण्डवत्प्रणामैकादश्यादीनामकरणे गुर्वाद्यपराधप्रसक्त्या तेषां नरकगमनप्रसङ्गात्। अतएव ग्रन्थकारैरपि (भ.र.सि. १/२/६३)— 'अननुष्ठानतो दोषो भक्त्यङ्गानां प्रजायते' इत्यनेन एकादश्यादि नित्याङ्गानामकरणे दोष उक्तः। तस्मादत्र सिद्धदेहेन मानसीसेवाकरणार्थं

व्रजेन्द्रसुबलादीनां भावचेष्टितं श्रीभागवते प्रसिद्धमेव॥ ३०६॥

### अनुवाद

व्रजेन्द्र, सुबलादि की भाव चेष्टित मुद्रा से सम्बन्धानुगा भक्ति करना चाहिये। न कि व्रजेन्द्रादित्व के अभिमान से। पितृत्वादि अभिमान दो प्रकार से सम्भव होते हैं। एक स्वतन्त्र रूप से, दूसरा श्रीकृष्ण के पिता आदि के साथ स्वयं के अभेद भावना से। इसके मध्य में द्वितीय प्रकार उपासना सर्वथा अनुचित है।

सख्यादि भक्ति में सुबलादि के साथ अभेद भावना से सायुज्य की प्राप्ति होती है।

अहंग्रह उपासना होने पर भी "मैं व्रजेन्द्र हूँ"— इस प्रकार अहंग्रह उपासना केवल नरक को ले जाती है, ऐसा जानना होगा।

कारण, इस प्रकार की उपासना से व्रजेश्वरी आदि के साथ विरुद्ध भावना होती है। भक्ति सेवा है, अतएव यहाँ पर भी इस प्रकार की सेवा साधकों के द्वारा साधक रूप से एवं सिद्ध रूप से करना आवश्यक है। इस प्रकार ही व्याख्या की गयी है।

व्रजेन्द्र, सुबलादि की भाव चेष्टित मुद्रा से सेवा करना आवश्यक है, यहाँ पर सिद्ध देह से ही मानसी सेवा करना आवश्यक है, किन्तु साधकगण साधक देह से सुबल आदि की भाव चेष्टित मुद्रा से सेवा करें, इस प्रकार व्याख्या नहीं कर सकते हैं। कारण, सुबल आदियों ने गुरु पादाश्रयण, दण्डवत् प्रणाम, एकादशी व्रतादि का अनुष्ठान नहीं किये थे, इसलिए साधक द्वारा उस प्रकार आचरण करने से गुरु आदि की अवज्ञा रूप अपराध होगा, और उस अपराध से नरक गमन होगा। अतएव ग्रन्थकार ने भी कहा है कि—भक्ति के अङ्गों का अनुष्ठान न करने से दोष होता है। (१/२/६३) एकादशी आदि भक्ति के नित्य अङ्गों का पालन न करने से दोष होता है। इसलिए इस सम्बन्धानुगा भक्ति में सिद्ध देह से मानसी सेवा करने के लिये व्रजेन्द्र सुबलादि की भाव चेष्टा का विवरण श्रीभागवत में प्रसिद्ध है॥ ३०६॥

**तथा हि श्रूयते शास्त्रे कश्चित् कुरुपुरीस्थितः।**
**नन्दसूनोरधिष्ठानं तत्र पुत्रतया भजन्।**
**नारदस्योपदेशेन सिद्धोऽभूद् बृद्धवार्द्धकी॥ (३०७)**

### अनुवाद

जैसाकि शास्त्रों में सुना जाता है कि हस्तिनापुर स्थित कोई वृद्ध वार्द्धकि नारद के उपदेश से श्रीनन्दनन्दन की प्रतिमा का भजन पुत्र बुद्धि से करके भाव सिद्धि प्राप्त की॥ ३०७॥

### दुर्गमसङ्गमनी

अथ पूर्वमेवोचितमिति दर्शयति— तथाहीति। अधिष्ठानं प्रतिमाम्। सिद्धोऽभूदिति— बालवत्सहरणलीलायां तत्पितृणामिव सिद्धिर्ज्ञेया। एवमेव हि स्कान्दे सनत्कुमारप्रोक्तसंहितायां प्रभाकरराजोपाख्यानम्—

"अपुत्रोऽपि स वै नैच्छत्पुत्रं कर्मानुचिन्तयन्।
वासुदेवं जगन्नाथं सर्वात्मानं सनातनम्॥

अशेषोपनिषद्वेद्यं पुत्रीकृत्य विधानतः।
अभिषेचयितुं राजा स्वराज्य उपचक्रमे॥
न पुत्रमप्यर्थितवान् साक्षाद्भूताज्जनार्द्दनादि''ति॥ ऊर्द्ध्वं भगवद्वरश्च–
"अहं ते भविता पुत्र" इत्यादि॥ ३०७॥

## अनुवाद

पूर्व में कथित विषय का उदाहरण प्रस्तुत करते हैं– अधिष्ठान शब्द का अर्थ है प्रतिमा। सिद्धोऽभूदिति अर्थात् बालवत्स हरण लीला में जिस प्रकार गोपगण पिता बने थे, उस प्रकार सिद्धि हुयी, इस प्रकार जानना होगा।

इसी प्रकार से ही स्कन्द पुराण में सनत्कुमारप्रोक्त संहिता में प्रभाकर राजा के उपाख्यान में है–
राजा अपुत्रक होकर भी अपने कर्मफल की चिन्ताकर पुत्र की इच्छा नहीं की।

राजा ने अपने राज्य के उत्तराधिकारी के रूप में जगन्नाथ सर्वात्मा, सनातन, अशेष उपनिषद् वेद्य, वासुदेव को अभिषिक्त करने की इच्छा की। किन्तु उन्होंने साक्षात जनार्दन से पुत्र की प्रार्थना नहीं की। इसके बाद भगवान् ने राजा को वर दिया– "मैं तुम्हारा पुत्र बनूँगा।" इत्यादि॥ ३०७॥

## अर्थरत्नाल्प-दीपिका

सिद्ध इति व्रजेन्द्रनन्दनानुवर्त्तिनस्तस्य गृहे श्रीकृष्णस्य यथोचितरूपेण स्थितिर्दर्शिता। बहुरूपेणानन्तव्रजजनमनोरथपूरणवत्॥ ३०७॥

## अनुवाद

सिद्धि प्राप्त की, इसका विवरण इस प्रकार है–व्रजेन्द्रनन्दन के अनुवर्ती के घर में यथोचित रूप से श्रीकृष्ण का रहना दिखाया, जिस प्रकार व्रज में बालकों का अपहरण होने से व्रजजनों का मनोरथ पूरण करने के लिए सबके बालक रूप से रह गये थे, उस प्रकार॥ ३०७॥

## भक्तिसार-प्रदर्शिनी

अतः साधकदेहेन साधकभक्तानुसारिसेवानां करणे पुराणं प्रमाणयति– तथाहीति। नन्दसूनोः श्रीकृष्णस्याधिष्ठानं प्रतिमेत्यनेन इयं सेवा न व्रजेन्द्रस्य भावचेष्टितानुसारिणी ज्ञेया। तेन तु साक्षात् श्रीकृष्णस्यैवेति सेवा कृता, न तु तत् प्रतिमायाः। तस्मात् साधकेन तु साक्षाद्दर्शनासम्भवात् तत्प्रतिमाया एव सेवा कर्त्तव्या। अतएव वृद्धवार्द्धकीरपि साधकमहानुभावभक्तानुसारेण पुत्रत्वेन प्रतिमासेवां चकारेति ज्ञेयम्। वार्द्धकिर्वाढइ इति प्रसिद्धः। सिद्धोऽभूदिति वत्सहरणलीलायां यथा सर्वेषां पुत्रोऽभूत्तथैव सिद्धिर्ज्ञेया॥ ३०७॥

## अनुवाद

अनन्तर साधक देह से साधक भक्त के अनुसार सेवा करने का प्रमाण पुराण से देते हैं। नन्दसूनु श्रीकृष्ण का अधिष्ठान अर्थात् प्रतिमा की सेवा पुत्र मानकर की। यह सेवा व्रजेन्द्र की भाव चेष्टा की

अनुसारिणी नहीं थी। श्रीनन्द ने तो साक्षात् श्रीकृष्ण की ही सेवा की, प्रतिमा की सेवा नहीं। अतएव साधक के लिए श्रीकृष्ण का साक्षात् दर्शन असम्भव होने के कारण श्रीकृष्ण की प्रतिमा की ही सेवा करना कर्त्तव्य है।

अतएव वृद्ध वार्द्धकि ने भी साधक महानुभाव भक्त के अनुसार पुत्र रूप में प्रतिमा सेवा की। इस प्रकार जानना होगा। वार्द्धकि को बढ़ई भी कहते हैं।

सिद्ध हुये थे— वत्स हरण लीला में जिस प्रकार श्रीकृष्ण सबके पुत्र हुये थे इस प्रकार से सिद्धि समझनी होगी॥ ३०७॥

**अतएव नारायणव्यूहस्तवे—**

**पतिपुत्रसुहृद्भ्रातृपितृवन्मित्रवद्धरिम्।**
**ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नमः॥ इति। (३०८)**

### अनुवाद

अतएव नारायण व्यूह स्तव में कहा गया है—

जो लोक सर्वदा प्रयत्न के साथ श्रीहरि को पति, पुत्र, सुहृत् निरपेक्ष हितकारी, भ्राता, पिता, मित्र रूप में ध्यान करते रहते हैं, उन सबको मैं बार-बार नमस्कार करता हूँ॥ ३०८॥

### दुर्गमसङ्गमनी

सुहृन्निरपेक्षहितकारी, मित्रं सहविहारीति तयोर्भेदः। तथा च तृतीये (भा. ३/२५/३८)— श्रीकपिलदेववाक्यम्—

"येषामहं प्रिय आत्मा सुतश्च, सखा गुरुः सुहृदो दैवमिष्टमिति"॥ ३०८॥

### अनुवाद

सुहृत् का अर्थ है— निरपेक्ष हितकारी, मित्र अर्थात् सहबिहारी; इस प्रकार दोनों का भेद है। जैसाकि श्रीमद्भागवत के ३/२५/३८ में श्रीकपिलदेवजी ने कहा है—

येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्॥

जिनका एकमात्र मैं ही प्रिय, आत्मा, पुत्र, मित्र, गुरु, सुहृद् और इष्टदेव हूँ॥ ३०८॥

### अर्थरत्नाल्प-दीपिका

सुहृन्निरुपाधिहितकारी, मित्रं सहविहारीति तयोर्भेदः॥ ३०८॥

### अनुवाद

निरुपाधि हितकारी को सुहृत् कहते हैं, और सहबिहारी को मित्र कहते हैं। इस प्रकार दोनों शब्दों का अर्थगत भेद है॥ ३०८॥

### भक्तिसार-प्रदर्शिनी

सुहृन्निरपेक्षहितकारी, मित्रं सहविहारीति द्वयोर्भेदः॥ ३०८॥

## अनुवाद

निरपेक्ष हितकारी को सुहृत् एवं सहबिहारी को मित्र कहते हैं। इस प्रकार दोनों शब्दों का अर्थगत भेद है॥ ३०८॥

**कृष्णतद्भक्तकारुण्यमात्रलाभैकहेतुका।**
**पुष्टिमार्गतया कैश्चिदियं रागानुगोच्यते॥ (३०९)**

**इति श्रीश्रीभक्तिरसामृतसिन्धौ पूर्वविभागे साधनभक्तिलहरी द्वितीया॥ २॥**

## अनुवाद

श्रीकृष्ण एवं उनके भक्तों के करुणा लाभ ही एकमात्र रागानुगा मार्ग में प्रवृत्ति के प्रति एकमात्र कारण है। कुछ व्यक्ति रागानुगा भक्ति मार्ग को पुष्टि मार्ग कहते हैं॥ ३०९॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग स्थित
साधनभक्ति नामक द्वितीया लहरी समाप्त॥ २॥

## दुर्गमसङ्गमनी

कृष्णेति— मात्रपदस्य विधिमार्गे कुत्रचित्कर्मादिसमर्पणमपि द्वारं भवतीति तद्विच्छेदार्थः प्रयोग इति भावः॥ ३०९॥

इति दुर्गमसङ्गमनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके
पूर्वविभागे भावभक्तिलहरी द्वितीया॥ २॥

## अनुवाद

पद्य में जो मात्र पद का प्रयोग किया गया है, उसका अर्थ है—

विधि मार्ग में कभी-कभी कर्मादि समर्पण भी भक्ति मार्ग में प्रवृत्ति का द्वार होता है। किन्तु रागानुगा भक्ति मार्ग में प्रवेश हेतु श्रीकृष्ण एवं श्रीकृष्ण भक्त कृपा ही एकमात्र हेतु है, इसलिए मात्र पद का प्रयोग किया गया है॥ ३०९॥

श्रीभक्तिरसामृतसिन्धु के दुर्गमसङ्गमनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित
साधनभक्ति नामक द्वितीया लहरी समाप्त॥ २॥

## अर्थरत्नाल्प-दीपिका

कृष्णतद्भक्तकारुण्यमात्रलाभ एवैकः सर्व्वोत्तमो हेतुः प्रवृत्तिकारणं यस्यां सा तथा। तयोः कारुण्यमात्र एव लोभोत्पत्तेः सर्वोत्तमं कारणम्। अन्यत् किमपि स्वल्पमपि नेत्यर्थः। श्रीमूर्त्तेरेकवारदर्शनान्निरपराधे सामान्या 'या रतिः सद्धियां भावजन्मन' इति भावजन्मन इत्यत्र दर्शिता, ततोऽपि रागानुगायां लोभस्तु दुर्ल्लभः, केवलकृपयैवेति भावः॥ ३०९॥

इत्यर्थरत्नाल्पदीपिकानाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके
पूर्वविभागे साधनभक्तिलहरी द्वितीया॥ २॥

## अनुवाद

रागानुगा भक्ति में प्रविति के प्रति श्रीकृष्ण एवं श्रीकृष्ण भक्त के कारुण्य मात्र लाभ ही एकमात्र सर्वोत्तम हेतु है, कारण है। कहने का अभिप्राय यह है कि श्रीकृष्ण एवं श्रीकृष्ण भक्त दोनों की करुणा ही एकमात्र लोभोत्पत्ति का सर्वोत्तम कारण है। थोड़ा भी अन्य कारण नहीं है।

श्रीमूर्त्ति का एक बार दर्शन करने पर निरपराधी में तत्काल सामान्य रति होती है। कहा गया है—

दुरूहाद्भुतवीर्य्येऽस्मिन् श्रद्धा दूरेऽस्तु पञ्चके।
यत्र स्वल्पोऽपि सम्बन्धः सद्धियां भावजन्मने॥

श्रीमूर्त्ति के अङ्‌घ्रि सेवा, श्रीमद्‌भागवतार्थस्वाद, श्रीभक्त का सङ्ग, श्रीनाम कीर्त्तन एवं श्री मथुरा वास— ये पाँच दुरूह एवं अद्‌भुत वीर्यशाली हैं, इन पंचकों में श्रद्धा होने की बात तो अलग है, इनसे थोड़ा सम्पर्क होने पर भी निरपराध व्यक्ति के चित्त में सत्त्वर भाव का आविर्भाव होता है।

इस प्रकार के भाव प्राप्ति होने पर भी रागानुगा भक्ति में लोभ होना दुर्लभ है। भाव यह है कि केवल कृपा से ही रागानुगा भक्ति में प्रवृत्ति सम्भव है॥ ३०९॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के अर्थरत्नाल्पदीपिका नामक टीका में लहरीचतुष्टयात्मक
पूर्वविभाग स्थित साधन भक्ति नामक द्वितीया लहरी समाप्त॥ २॥

## भक्तिसार-प्रदर्शिनी

कृष्णेति मात्रपदस्य विधिमार्गे कुत्रचित् कर्मादिसमर्पणमपि द्वारं भवतीति तद्विच्छेदार्थः प्रयोगः इति॥ ३०९॥

इति भक्तिसारप्रदर्शिनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके
पूर्वविभागे साधनभक्तिलहरी द्वितीया॥ ३॥

## अनुवाद

"कृष्णतद्‌भक्तकारुण्यमात्रलाभैकहेतुका" यहाँ पर मात्र पद का प्रयोजन बताते हैं। विधि मार्ग में भक्ति में प्रवेश करने के लिए कहीं-कहीं पर कर्मादि समर्पण भी द्वार रूप होता है, उसको विच्छेद करने के लिए मात्र पद का प्रयोग हुआ है॥ ३०९॥

श्रीभक्तिरसामृतसिन्धु के भक्तिसारप्रदर्शिनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित
साधनभक्ति नामक द्वितीया लहरी समाप्त॥ २॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग में स्थित
साधनभक्ति नामक द्वितीया लहरी का
श्रीहरिदासशास्त्रि कृत
हिन्दी भाषानुवाद समाप्त॥ २॥

# तृतीय लहरी— भावभक्तिः

अथ भावः-

शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥ (१)

## अनुवाद

शुद्ध सत्त्व विशेष स्वरूप, प्रेम रूप सूर्य के उदीयमान किरण के समान; एवं रुचि (भगवत् प्राप्ति अभिलाष, आनुकूल्य आभिलाष एवं सौहार्द्याभिलाष रूप) के द्वारा चित्त की आर्द्रता सम्पादित होने से उसको भाव कहते है॥१॥

## दुर्गमसङ्गमनी

अथ तदेतद्विविच्यते— पूर्वं तावद्भक्तिसामान्यलक्षणे चेष्टारूपा भावरूपा चेति भक्तिर्द्विविधा दर्शिता। तत्र चेष्टारूपा द्विविधा— भावभक्तेः साधनरूपा कार्य्यरूपा च। कार्य्यरूपा तु रसावस्थायां अनुभावरूपा च; तयोः साधनरूपा पूर्वा दर्शिता; उत्तरा रसप्रसङ्गे दर्शयिष्यते।

अथ भावरूपा च द्विविधा रसावस्थायां स्थायिनाम्नी, सञ्चारिरूपा च। तत्र च पूर्वा द्विविधा, क्रोडीकृतप्रणयादिप्रेमनाम्नी, रत्यपरपर्य्यायप्रेमाङ्कुररूपा भावनाम्नी च। तदेवं सत्युत्तरा सञ्चारिरूपापि रसप्रसङ्गे दर्शयिष्यते, सम्प्रति तु स्थायिभावसामान्यरूपं प्रेमनाम्ना प्रणयादिकमपि क्रोडीकुर्वन्तं रत्यपरपर्यायस्थायिभावाङ्कुररूपं भावं लक्षयति— शुद्धसत्त्वेति।
(सा च महाभावपर्यन्ततदूर्द्ध्वावस्थाव्यक्तये भविष्यतीत्यभिप्रेत्य चाह शुद्धसत्त्वेति।) अत्र शुद्धसत्त्वं नाम भगवतः स्वप्रकाशिका स्वरूपशक्तेः संविदाख्या वृत्तिः; न तु मायावृत्तिविशेषः, विवृतं त्वेतत् श्रीभागवतसन्दर्भस्य द्वितीयसन्दर्भे श्रीवैष्णवतोषण्यां द्वितीयाध्याये च। शुद्धसत्त्वविशेषत्वं नाम चात्र या स्वरूपशक्तिवृत्त्यन्तरलक्षणा। "ह्लादिनी सन्धिनी संवित् त्वय्येका सर्वसंस्थितौ। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते।" इति विष्णुपुराणानुसारेण ह्लादिनीनाम्नी
महाशक्तिस्तदीयसारवृत्तिसमवेततत्सारांशत्वमेवेत्यवगन्तव्यं, तयोः समवेतयोः सारत्वं च तन्नित्यप्रिय-जनाधिष्ठानक-तदीयानुकूल्येच्छामयपरमवृत्तित्वम्। ह्लादिनीसारसमवायित्वञ्चास्यैव भावस्य परमपरिणामरूपमोदनाख्ये महाभावे श्रीमदुज्ज्वलनीलमणिमधिकृत्य [स्थायिभावप्रकरणे १७६] व्यक्तीभविष्यति। "राधिकायूथ एवासौ मोदने न तु सर्वतः। यः श्रीमान् ह्लादिनीशक्तेः सुविलासः प्रियो वरः"॥ इति। असौ पदेन चानुकूल्येन कृष्णानुशीलनरूपा सामान्येन लक्षिता भक्तिरेवाकृष्यत इत्यर्थः। सा तु यद्यपि धात्वर्थसामान्यरूपा व्याख्याता, तथाऽप्यत्र चेष्टारूपा न गृह्यते, किन्तु भावरूपैव, विधेयस्य भावस्य साक्षान्निर्दिष्टत्वात्। वक्ष्यते (२-४-२५१) च स्वयमेव भावमात्रस्य लक्षणम्।
"शरीरेन्द्रियवर्गस्य विकाराणां विधायिकाः। भावाविर्भावजनिताश्चित्तवृत्तय ईरिताः" इति॥

चित्तवृत्तयश्चात्र प्रकारान्तरेण चित्तस्य स्थितयः। 'विकारो मानसो भाव' इत्यमरः। तथापि वक्ष्यमाणानां व्यभिचारिणामत्राप्राप्तिस्तेषां योजयिष्यमाणानां चित्तमासृण्यकृत्त्वाभावात्, प्रेमाङ्कुरत्वेन विशेष्यत्वाच्च। ततश्चायमर्थः— असौ सामान्यतो लक्षिता या भक्तिः, सैव निजांशविशेषे भाव उच्यते। स च किंस्वरूपः? तत्राह— कृष्णस्य स्वरूपशक्तिरूपः शुद्धसत्त्वविशेषो यः स एवात्मा तन्नित्यप्रियजनाधिष्ठानतया नित्यसिद्धं स्वरूपं यस्य सः तथाधिष्ठानमात्मसात्कृत्य तत्तादात्म्यापन्नत्वेनानुकूल्यलक्षण-चित्तवृत्तिरूपा च। किञ्च रुचिभिः प्राप्त्यभिलाषस्वकर्तृकानुकूल्याभिलाषसौहार्द्दाभिलाषैश्चित्तार्द्रताकृदिति। एष च वक्ष्यमाणप्रेम्णोऽङ्कुररूप एवेत्याह— प्रेमेति। सूर्य्यस्त्वत्राचिरादुदयिष्यमाणावस्थो गृह्यते। ततश्च तदंशुसाम्यभागिति प्रेम्णः प्रथमच्छविरूप इत्यर्थः, (१-४-१) "भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते" इति हि वक्ष्यते, अस्याप्राकृतत्वं तादृशशुद्धसत्त्वविशेषह्लादिनीसाररूपत्वञ्च मोक्षसुखस्यापि तिरस्कारकत्वात्, श्रीभगवतोऽपि प्रकाशकरत्वादानन्दकरत्वाच्च। अत्र प्रमाणस्य विशेषजिज्ञासा चेत् प्रीतिसन्दर्भो दृश्यः, तदेवं नित्यतत्प्रियजनानां भावे लक्षिते प्रपञ्चगतभक्तानामपि चित्तवृत्तिः श्रीकृष्णतद्भक्तकृपया तादृशी भवतीति तेनैव लक्षितः स्यादित्यलमतिविस्तरेण॥ १॥

## अनुवाद

अनन्तर भाव भक्ति का विवेचन करते हैं। पहले अन्याभिलाषिता शून्यमित्यादि कारिका के द्वारा भक्तिसामान्य लक्षण में चेष्टारूपा भावरूपा द्विविध भक्ति को दिखाया गया है।

इसमें चेष्टारूपा द्विविध है— भाव भक्ति की साधनरूपा एवं कार्यरूपा। कार्यरूपा भक्ति रसावस्था के अनुभावरूपा है। इनके मध्य में साधन रूपा भक्ति का प्रदर्शन पहले किया गया है। अनुभावरूपा भक्ति का वर्णन रस प्रकरण में करेंगे।

भावरूपा भक्ति दो प्रकार है— रसावस्था में स्थायिनाम्नी एवं सञ्चारिरूपा। इनमें स्थायिभाव दो प्रकार का है, क्रोडीकृत प्रणयादि प्रेम नामक और रति का अपर नाम प्रेमाङ्कुर रूप भाव नामक। सञ्चारिरूपा भक्ति का भी प्रदर्शन रस प्रकरण में करेंगे।

सम्प्रति स्थायिभाव सामान्यरूप प्रेम नाम से प्रणयादि का भी ग्रहणकारी, रति का अपर पर्याय स्थायिभावाङ्कुररूप भाव भक्ति का लक्षण करते हैं—

> शुद्ध सत्त्व विशेषात्मा प्रेम सूर्यांशुसाम्यभाक्।
> रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥

अर्थात् शुद्ध सत्त्व विशेष स्वरूप, प्रेम रूप सूर्य के उदीयमान किरण के समान; एवं भगवत् प्राप्ति अभिलाष, आनुकूल्य आभिलाष, सौहार्द्याभिलाष रूप रुचि के द्वारा चित्त की आर्द्रता, स्निग्धता सम्पादित होने से भाव भक्ति होती है। (महाभावभक्ति पर्यन्त समस्त अवस्था में रहने के कारण भाव भक्ति का विशेषण शुद्ध सत्त्व विशेषात्मा दिया गया है।) यहाँ शुद्धसत्व का अभिप्राय भगवान की स्व-प्रकाशिका स्वरूपशक्ति की संविदाख्य वृत्ति है, न कि मायिक वृत्ति विशेष से। अर्थात् इसमें मायिक सत्त्व रजः तमः वृत्ति नहीं है। इसका विशेष विवेचन श्रीभागवत सन्दर्भ के द्वितीय सन्दर्भ में एवं श्री

वैष्णव तोषणी के द्वितीयाध्याय में है।

शुद्धसत्वविशेष से स्वरूप शक्ति की एक अन्यवृत्ति— ह्लादिनी को जानना होगा। विष्णु पुराण में लिखित है—

ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्ज्जिते॥

समस्त शक्तियों के आकर आप में ही ह्लादिनी, सन्धिनी एवं संवित् शक्ति विद्यमान हैं। मायिक गुण वर्जित आप में ह्लाद, तापकारी मिश्रा शक्ति नहीं है। अर्थात् सत्त्व रज: तम: मायिक शक्तिवृत्ति आप में नहीं है।

विष्णु पुराण के इस वचन द्वारा ह्लादिनी नामक महाशक्ति को भगवान की स्वरूप शक्ति के समवेत सार वृत्ति एवं सारांश को जानना होगा। पुन: ह्लादिनी और संवित् के मिलन का सार भगवान् का आनुकूल्य करने की इच्छामय परम वृत्ति स्वरूप है। इसका अधिष्ठान भगवान् के नित्यप्रिय परिकर हैं।

ह्लादिनी सार समवायि का प्रकाश परम परिणाम स्वरूप मोदनाख्य महाभाव के रूप में होता है। इसका वर्णन श्रीउज्ज्वल नीलमणि ग्रन्थ के स्थायिभाव प्रकरण (१७६) में है।

"राधिकायूथ एवासौ मोदने न तु सर्वत:।
य: श्रीमान् ह्लादिनी शक्ते: सुविलास: प्रियो वर:॥"

यह मोदनाख्य महाभाव केवल राधिका के यूथ में विद्यमान है, न कि सर्वत्र। यह श्रीमान् मोदन ही ह्लादिनी शक्ति का प्रिय श्रेष्ठ सुविलास हैं।

'असौ भाव उच्यतें' यहाँ पर असौ पद के द्वारा— आनुकूल्येन कृष्णानुशीलनरूपा सामान्यरूप से कथित भक्ति का ही ग्रहण होगा। इस उत्तमा भक्ति की व्याख्या यद्यपि धात्वर्थ सामान्य रूप में हुई है तथापि यहाँ पर भाव भक्ति के प्रकरण में चेष्टा रूपा भक्ति का ग्रहण नहीं किया गया है, किन्तु भाव रूपा भक्ति का ही ग्रहण किया गया है। क्योंकि विधेय रूप भाव का निर्देश साक्षात् रूप से हुआ है। ग्रन्थकार स्वयं ही भावमात्र का लक्षण (२-४-२५१) में करेंगे।

"शरीरेन्द्रिय वर्गस्य विकाराणां विधायिका:।
भावा विभावजनिताश्चित्तवृत्तय ईरिता:॥"

विभाव जनित शरीर एवं इन्द्रिय वर्ग का विकार विधायक चित्तवृत्तियों को भाव कहते हैं।

यहाँ पर चित्तवृत्ति प्रकारान्तर में चित्त की स्थित होती है। अमर कोष के अनुसार "विकारो मानसो भाव:" अर्थात् मानसिक विकार भाव है। ऐसा होने पर भी वक्ष्यमाण व्यभिचारी भाव की प्राप्ति यहाँ पर नहीं होगी, क्योंकि वहाँ पर चित्त की स्निग्धताकारित्व का अभाव होता है, और इस भाव लक्षण में प्रेमाङ्कुरत्वेन विशेषण देने से भी व्यभिचारी भावों का यहाँ ग्रहण नहीं होगा।

इसलिए इसका अर्थ इस प्रकार है—

अन्याभिलाषिता शून्यमित्यादि कारिका के द्वारा सामान्य रूप से लक्षित जो भक्ति है उसी का निजांश विशेष ही भाव शब्द से कथित है।

मनमोहक श्रीकृष्ण के कैशोर, अतिशय मधुर है, वह किशोर भाव मेरा अतिशय चञ्चल चित्त को हरण कर रहा है, अब मैं क्या करूँ॥ ३९॥

### दुर्गमसङ्गमनी

माधुर्य्यादपि मधुरमतिशयेन मधुरमित्यर्थः। मन्मथतातस्य मन्मथोत्पादकस्येत्यर्थः। यद्वा तस्य कैशोरमेव मन्मथता मन्मथस्य धर्म्म इत्यर्थः।

### अनुवाद

माधुर्य्य से भी मधुर अर्थात् अतिशय मधुर। मन्मथतातस्य अर्थात् मन्मथ का उत्पादक है। अथवा उनका कैशोर ही मन्मथ का धर्म है॥ ३९॥

### अर्थरत्नाल्प-दीपिका

मधुरस्य धर्मो माधुर्य्यं तस्मादपि मधुरं लक्षणयातिमधुरमित्यर्थः। मन्मथतातस्य मन्मथोत्पादकस्येत्यर्थः। यद्वा— तस्य कैशोरमेव मन्मथता मन्मथस्य धर्म इत्यर्थः॥३९॥

### अनुवाद

मधुर का धर्म है माधुर्य, उससे भी मधुर अर्थात् अति मधुर है।

मन्मथ का पिता है अर्थात् मन्मथ का उत्पादक है। अथवा उनका कैशोर ही मन्मथ का धर्म है॥ ३९॥

### भक्तिसार-प्रदर्शिनी

मन्मथ-तातस्य मन्मथोत्पादकस्य तस्य कैशोरं माधुर्यादपि मधुरम् अतिशयमधुरमित्यर्थः। यद्वा किमप्यनिर्वचनीया मन्मथता मन्मथस्य धर्म इत्यर्थः मम चेतो हरति॥३९॥

### अनुवाद

मन्मथ उत्पादक उनका कैशोर माधुर्य से भी मधुर है, अर्थात् अतिशय मधुर है। अथवा किसी अनिर्वचनीय मन्मथ का धर्म है, जो मेरे चित्त को हरण कर रहा है॥ ३९॥

**तद्वसतिस्थले प्रीतिर्यथा पद्यावल्याम्—**

**अत्रासीत्किल नन्दसद्म शकटस्यात्राभवद्भञ्जनं,**
**बन्धच्छेदकरोऽपि दामभिरभूद्बद्धोऽत्र दामोदरः।**
**इत्थं माथुरवृद्धवक्त्रविगलत्पीयूषधारां पिब,-**
**न्नानन्दाश्रुधरः कदा मधुपुरीं धन्यश्चरिष्याम्यहम्? (४०)**

### अनुवाद

भगवान् के निवास स्थल में प्रीति का वर्णन पद्यावली में इस प्रकार है—

यहाँ पर गोपराज नन्द का घर था। यहाँ शकट भञ्जन हुआ था। भव बन्धन छेदनकारी होते हुए भी दामोदर यहाँ पर दाम बद्ध हुए थे। इस प्रकार मथुरावासी वृद्ध व्यक्तियों के मुख से वाक्यामृत धारा का

पान करते करते आनन्दाश्रु जल से वक्षःस्थल को प्लावित करके कब मैं मथुरा मण्डल में विचरण कर अपने को धन्य करुँगा ? ॥ ४० ॥

### दुर्गमसङ्गमनी

मधुपुरीं तदुपलक्षितं मथुरामण्डलमित्यर्थः। ब्रजभुवमिति वा पाठः।

### अनुवाद

मधुपुरी शब्द से मथुरा मण्डल को जानना होगा। मधुपुरी के स्थान में 'ब्रजभुवं' पाठ भी है॥ ४० ॥

### अर्थरत्नाल्प-दीपिका

मधुपुरीं तदुपलक्षितमथुरामण्डलमित्यर्थः॥ ४० ॥

### अनुवाद

मधुपुरी शब्द से मथुरा मण्डल को जानना होगा॥ ४० ॥

### भक्तिसार-प्रदर्शिनी

मधुपुरीं तदुपलक्षितं मथुरामण्डलमित्यर्थः। ब्रजभुवमिति वा पाठः॥ ४० ॥

### अनुवाद

मधुपुरी शब्द से मथुरा मण्डल को जानना होगा। मधुपुरी के स्थान पर 'ब्रजभुवं' पाठ भी है॥ ४० ॥

**अपि च—**

**व्यक्तं मसृणतेवान्तर्लक्ष्यते रतिलक्षणम्।**
**मुमुक्षुप्रभृतीनाञ्चेद्भवेदेषा रतिर्न हि ॥ (४१)**

### अनुवाद

इस सम्बन्ध में और भी कहते हैं—

अन्तःकरण की स्निग्धता रति का लक्षण है। मुमुक्षु आदि में यदि स्पष्टरूप में मसृणता के समान रति चिह्न देखी जाती है तो भी उसको रति नहीं कहा जाएगा॥ ४१ ॥

### दुर्गमसङ्गमनी

तदेवं तदेकस्पृहत्वमेव रतेर्लक्षणं मुख्यमित्युक्तम्। यदि त्वन्यस्पृहा स्यात्तदा तल्लक्षणान्तरसात्त्विकादेः सद्भावेऽपि रतिर्न मन्तव्येत्याह— अपि चेति। च शब्दोऽत्र "तु" शब्दार्थे, व्यक्तमिति— या अन्तर्मसृणता आर्द्रता सा, अन्यत्र व्यक्तं यद् रतिलक्षणं तदिव मुमुक्षुप्रभृतीनां यदि लक्ष्यते, तथापि तेषु रतिर्न स्यात् न मन्तव्येत्यर्थः। तत्र हेतुः— मुमुक्षुप्रभृतीनामित्येव, न ह्यन्यत्र स्पृहा अन्यत्र रतिरिति युज्यते इति भावः॥ ४१ ॥

## अनुवाद

एकमात्र श्रीकृष्ण विषयक स्पृहा ही रति का मुख्य लक्षण है। यदि अन्य विषयक स्पृहा रहती है, और रति के अन्य सात्त्विकादि लक्षण देखने में आता है तो उसको श्रीकृष्ण रति नहीं मानना चाहिये। इसी को व्यक्त करने के लिए अपि च इत्यादि कहा गया है।

यहाँ चकार का प्रयोग 'तु' शब्द के अर्थ में हुआ है।

अन्यत्र भक्तों में व्यक्त रति का लक्षण जो अन्तर्मसृणता अथवा आर्द्रता है, यदि उस प्रकार मुमुक्षु आदि में दिखाई देता है तो भी उनमें रति नहीं होता है। उसका कारण यह है कि मुमुक्षु आदि की स्पृहा मोक्षदि अन्य विषयों में होती है।

यहाँ ऐसा नहीं समझना चाहिये कि कृष्ण भिन्न अन्य विषयक स्पृहा होने पर अन्य विषयक रति होगी। भाव यह है कि रति कृष्ण विषयक ही होती है॥ ४१ ॥

## अर्थरत्नाल्प-दीपिका

रुचिभिश्चित्तमासृण्यकृदित्यनेन मसृणता रतेर्लक्षणमुक्तम्। अन्यकामिष्वपि तद्वीक्ष्यते चेत्तदा तेष्वपि किं रतिर्मन्तव्येत्यत्राह— अपि चेति। भक्तानां व्यक्तं यथा स्यात्तथा या मसृणता मुमुक्षुप्रभृतीनाञ्चेत् सैव रतिलक्षणं तदा एषा हि निश्चितं रतिर्न॥ ४१ ॥

## अनुवाद

रुचिभिश्चित्तमासृण्यकृत् अर्थात् 'रुचि के द्वारा चित्त आर्द्र होने से'— यहाँ मसृणता को रति का लक्षण कहा गया है। अन्य कामी व्यक्तियों में भी यदि इस प्रकार लक्षण दिखाई देता है, तो क्या उसको भी रति मानना पड़ेगा?

इसके उत्तर में कहते हैं- अपि च इत्यादि। चित्त की मसृणतारूपी रति का लक्षण जो भक्तों में व्यक्त होता है, उस प्रकार यदि मुमुक्षु आदि में दिखाई देता है तो निश्चित ही उसको रति नहीं मानना चाहिये॥ ४१ ॥

## भक्तिसार-प्रदर्शिनी

तदेवं तदेकस्पृहत्वमेव रतेर्मुख्यं चिह्नमित्युक्तम्। यदि त्वन्यस्य स्पृहा स्यात्तदा तच्चिह्नान्तरस्य सात्त्विकादेः सद्भावेऽपि रतिर्न मन्तव्येत्याह— अपि चेति। त्वर्थे चशब्दः। व्यक्तमिति— या अन्तर्मसृणता आर्द्रता सा अन्यत्र व्यक्तं यद् रतिलक्षणं तदिव मुमुक्षुप्रभृतीनां चेद् यदि लक्ष्यते, तदपि तेषु रतिर्न स्यात् न मन्तव्येत्यर्थः। तत्र हेतुर्मुमुक्षुप्रभृतीनामित्येव, न ह्यन्यत्र स्पृहा नान्यत्र रतिर्युज्यत इति भावः॥४१ ॥

## अनुवाद

एकमात्र श्रीकृष्ण विषयक स्पृहा ही रति का मुख्य चिह्न है। यदि अन्य विषयक स्पृहा रहती है, और रति के अन्य सात्त्विकादि लक्षण देखने में आता है तो भी उसको श्रीकृष्ण रति नहीं मानना चाहिये।

इसी को व्यक्त करने के लिए अपि च इत्यादि कहा गया है।

यहाँ चकार का प्रयोग 'तु' शब्द के अर्थ में हुआ है।

अन्यत्र भक्तों में व्यक्त रति का लक्षण जो अन्तर्मसृणता अथवा आर्द्रता है यदि उस प्रकार मुमुक्षु आदि में दिखाई देता है तो भी उनमें रति नहीं होता है, और उसको रति नहीं मानना चाहिए। उसका कारण यह है कि मुमुक्षु आदि की स्पृहा मोक्षदि अन्य विषयों में होती है।

यहाँ ऐसा नहीं समझना चाहिये कि कृष्ण भिन्न अन्य विषयक स्पृहा होने पर अन्य विषयक रति होगी। भाव यह है कि रति कृष्ण विषयक ही होती है॥ ४१॥

**विमुक्ताखिलतर्षैर्या मुक्तैरपि विमृग्यते।**
**या कृष्णेनातिगोप्याशु भजद्भ्योऽपि न दीयते॥ (४२)**
**सा भुक्तिमुक्तिकामत्वाच्छुद्धां भक्तिमकुर्वताम्।**
**हृदये सम्भवत्येषां कथं भागवती रतिः॥ (४३)**

### अनुवाद

मुक्त व्यक्तिगण भी निखिल कामना वर्ज्जन करके जिस रति का अन्वेषण करते रहते हैं, श्रीकृष्ण भी अतिगोप्य जिस रति को भजन परायण व्यक्तियों को भी शीघ्र प्रदान नहीं करते हैं। भुक्ति-मुक्ति कामनायुक्त, विशुद्ध भक्ति को न करने वालों के हृदय में उस भागवती रति के उदय की सम्भावना कैसे हो सकती है?॥ ४२-४३॥

### दुर्गमसङ्गमनी

हेतुमेव विशिष्य दर्शयति— विमुक्तेत्यादिना। भुक्तिमुक्तिकामत्वात् कथं सा रतिः सम्भवेत् तस्मादेव हेतोः साधनगतमपि दोषमाह— शुद्धां भक्तिमकुर्वतामिति, शुद्धां ज्ञानकर्म्माद्यमिश्राम्॥ ४२-४३॥

### अनुवाद

मुमुक्षु प्रभृति में रति का लक्षण अश्रु प्रभृति दिखाई देने पर भी उसको रति नहीं कहते हैं, इसके कारण को विमुक्ताखिलतर्षैरित्यादि श्लोक से विश्लेषण करके कहते हैं। भुक्ति-मुक्ति कामी होने के कारण उनमें रति की सम्भावना भला कैसे हो सकती है? इनके साधनगत दोष भी कहते हैं— शुद्ध भक्ति का आचरण नहीं करते हैं। शुद्धां का तात्पर्य है ज्ञान कर्मादि के मिश्रण से रहित॥ ४२-४३॥

### अर्थरत्नाल्प-दीपिका

तदेतत् सहेतुकमाह— विमुक्तेति श्लोकद्वयेन। शुद्धाम् अन्याभिलाषितेत्यादिरूपां किन्तु कर्मयोगमिश्रामेव कुर्व्वताम्॥ ४२-४३॥

### अनुवाद

रति न होने का कारण कहते हैं— विमुक्त इत्यादि दो श्लोकों के द्वारा। शुद्धां अर्थात् अन्याभिलाषिता शून्यं ज्ञानकर्माद्यनावृतम् इत्यादि रूपा भक्ति न करके कर्मयोग मिश्र भक्ति का ही आचरण करने वाले में

भागवती रति कैसे हो सकती है? ॥ ४२-४३ ॥

### भक्तिसार-प्रदर्शिनी

हेतुमेव विशिष्य दर्शयति— विमुक्तेत्यादिना। भुक्तिमुक्तिकामत्वात् कथं सा रतिः सम्भवेत् तस्मादेव हेतोः साधनगतमपि दोषमाह— शुद्धां भक्तिमकुर्वतामिति। शुद्धां ज्ञानकर्म्माद्यमिश्राम्॥ ४२-४३ ॥

### अनुवाद

मुमुक्षु प्रभृति में रति का लक्षण अश्रु प्रभृति दिखाई देने पर भी उसको रति नहीं कहते हैं, इसके कारण को विमुक्ताखिलतर्षैरित्यादि श्लोक से विश्लेषण करके कहते हैं। भुक्ति-मुक्ति कामी होने के कारण उनमें रति की सम्भावना भला कैसे हो सकती है? इनके साधनगत दोष भी कहते हैं— शुद्ध भक्ति का आचरण नहीं करते हैं। शुद्धां का तात्पर्य है ज्ञान कर्मादि के मिश्रण से रहित॥ ४२-४३ ॥

**किन्तु बालचमत्कारकारी तच्चिह्नवीक्षया।**
**अभिज्ञेन सुबोधोऽयं रत्याभासः प्रकीर्त्तितः॥ (४४)**

### अनुवाद

रति चिह्न (सामान्य पुलक अश्रु रूप) को देखकर अज्ञ जनता मुग्ध हो जाती है, किन्तु अभिज्ञ व्यक्तिगण के लिए यह सुबोध होता है। वे इसको रत्याभास कहते हैं॥ ४४॥

### अर्थरत्नाल्प-दीपिका

तर्हि किमेतत्तत्राह— किन्त्विति। तस्याश्चिह्नं स्वल्पाश्रु स्वल्पपुलको वा द्वयं वा॥ ४४॥

### अनुवाद

तो फिर यह क्या है? इसके उत्तर में कहते हैं कि ये थोड़े अश्रुपात या थोड़ा पुलक या दोनो ही रति न होकर रत्याभास हैं॥ ४४॥

**प्रतिबिम्बस्तथा च्छाया रत्याभासो द्विधा मतः॥ (४५)**

### अनुवाद

प्रतिबिम्ब एवं छाया भेद से रत्याभास दो प्रकार के होते हैं॥ ४५॥

### अर्थरत्नाल्प-दीपिका

प्रतिबिम्बो यथा पुरुषावयवानां दर्पणे, छाया यथा तेषां सूर्य्यातपे, प्रतिबिम्ब एव पूर्णत्वापूर्णत्वाभ्यां द्विधा ज्ञापितः॥ ४५॥

### अनुवाद

प्रतिबिम्ब का उदाहरण है— पुरुष के शरीर के अवयवों का दर्पण में दिखाई पड़ना। छाया का उदाहरण है— सूर्य के प्रकाश में पुरुष के शरीर की परछाईं। प्रतिबिम्ब ही पूर्णत्व व अपूर्णत्व के द्वारा दो प्रकार कहा गया है॥ ४५॥

**तत्र प्रतिबिम्बः—**

**अश्रमाभीष्टनिर्वाही रतिलक्षणलक्षितः।**
**भोगापवर्गसौख्यांशव्यञ्जकः प्रतिबिम्बकः॥ (४६)**

## अनुवाद

प्रतिबिम्ब रत्याभास—

विना श्रम के जो अभीष्ट प्रदान करती है, जिसमें रति के लक्षण (वाष्पादि एक या दो) दिखाई देते हैं और जो भोग, मोक्ष सुख को व्यक्त करती है उसको प्रतिबिम्ब रत्याभास कहते हैं॥ ४६॥

## दुर्गमसङ्गमनी

तस्मान्निरुपाधित्वमेव रतेर्मुख्यस्वरूपत्वं, सोपाधित्वस्त्वाभासत्वं, तच्च गौण्या वृत्त्या प्रवर्त्तमानत्वमिति प्राप्तेः तस्याभासस्य प्रतिबिम्बत्वादिद्वैविध्यमुद्दिश्य प्रतिबिम्बं लक्षयति— अश्रमेति। रतिलक्षणलक्षित इति, वाष्पाद्येकद्वयमात्रदर्शनात्, तद्रूपत्वेन प्रतीयमानोऽपि रत्याभासः भोगापवर्गसौख्यांशव्यञ्जकश्चेत्तर्हि प्रतिबिम्बक इत्यन्वयः, भोगापवर्गदातृत्वलक्षणभगवद्गुणद्वयावलम्बनाद् भोगापवर्गालिप्सोपाधित्वं तत्प्रतिबिम्बत्वमित्यर्थः। तथाप्यश्रमाभीष्टनिर्वाहीति माहात्म्यकथनम्॥ ४६॥

## अनुवाद

इसलिए निरुपाधित्व ही रति का मुख्य स्वरूप है। उपाधि रहने पर रति का आभासत्व होता है। गौणी वृत्ति के द्वारा प्रवर्त्तित होने के कारण वह प्रतिबिम्ब एवं छाया भेद से दो प्रकार है।

सम्प्रति प्रतिबिम्ब का वर्णन करते हैं— अश्रमाभीष्ट इत्यादि द्वारा। रतिलक्षणलक्षित अर्थात् वाष्पादि मात्र एक दो रति के लक्षण देखने में आते हैं। रति रूप में प्रतीयमान होने पर भी वह रत्याभास होता है। भोग, अपवर्ग सुखांश का प्रकाशक होने से उसको प्रतिबिम्ब कहते हैं। भोग, अपवर्ग दातृत्व लक्षण भगवान् के गुणद्वय का अवलम्ब करने के कारण भोग,अपवर्ग लाभ करने की लिप्सा रूप उपाधित्व ही उसका प्रतिबिम्बत्व है। तथापि यह अनायास अभीष्ट पूर्त्ति करता है, यह इसका माहात्म्य कथन है॥ ४६॥

## अर्थरत्नाल्प-दीपिका

अश्रमेति— विशेषणत्रयात्मकः प्रतिबिम्बाख्यो रत्याभासः स्यात्॥४६॥

## अनुवाद

"अश्रमाभीष्ट निर्वाही, रति लक्षण लक्षित, भोगापवर्ग सौख्यांश व्यञ्जकः"— विशेषण त्रयात्मक प्रतिबिम्ब नामक रत्याभास होता है॥ ४६॥

## भक्तिसार-प्रदर्शिनी

अश्रमेति— रतिलक्षणलक्षित इति। वाष्पाद्येकद्वयमात्रदर्शनात् तद्रूपत्वेन प्रतीयमानोऽपि

रत्याभासः। भोगापवर्गसौख्यांशव्यञ्जकश्चेत्तर्हि प्रतिबिम्बक इत्यन्वयः। तथाप्यश्रमाभीष्टनिर्वाही अश्रमेण मोक्षसाधन-शमदमादिश्रमं विनैवाभीष्टस्य मोक्षस्य निर्वाहक इत्यर्थः। एतेन प्रतिबिम्बस्य माहात्म्यकथनममिदं ज्ञेयम्॥ ४६॥

## अनुवाद

रतिलक्षणलक्षित अर्थात् वाष्पादि मात्र एक दो रति के लक्षण देखने में आते हैं। रति रूप में प्रतीयमान होने पर भी वह रत्याभास होता है। भोग, अपवर्ग सुखांश का प्रकाशक होने से उसको प्रतिबिम्ब कहते हैं।

तथापि अनायास मोक्ष का साधन शम, दम आदि के श्रम के बिना ही अभीष्ट मोक्ष का निर्वाहक है। इसके द्वारा प्रतिविम्ब के माहात्म्य का कथन हुआ है। ऐसा जानना होगा॥ ४६॥

**दैवात्सद्भक्तसङ्गेन कीर्त्तनाद्यनुसारिणाम्।**
**प्रायः प्रसन्नमनसां भोगमोक्षादिरागिणाम्॥ (४७)**
**केषाञ्चिद्धृदि भावेन्दोः प्रतिबिम्ब उदञ्चति।**
**तद्भक्तहृन्नभःस्थस्य तत्संसर्गप्रभावतः॥ (४८)**

## अनुवाद

दैवात् शुद्ध भक्त के सङ्ग में कीर्त्तनादि का अनुकरणकारी, अतएव प्रायः प्रसन्न मनवाले एवं भोग-मोक्ष में अनुरक्त लोक समूह के मध्य में किसी-किसी के हृदय में उस भक्त के हृदयाकाश में स्थित भावरूपी चन्द्र का प्रतिबिम्ब उदित होता है॥ ४७-४८॥

## दुर्गमसङ्गमनी

तत्र प्रक्रियामाह—भोगमोक्षादिरागिणां दैवात् कदाचिदेव, न तु मुहुः सद्भक्तसङ्गेन कीर्त्तनाद्यनुसारिणां तत्तदर्थान्तरलिप्सयैव तदनुकर्त्तृणां ततः प्रायः प्रसन्नमनसां दोषदर्शित्वाद्यभावेऽपि तत्तदर्थान्तरलिप्साशबलचित्तानां कथञ्चिद्धृदि तादृक् चित्ते तद्भक्तहृन्नभःस्थस्य तद्भक्तहृदेव नभः वस्त्वन्तरास्पृश्यत्वात् प्रेमेन्दूदययोग्यत्वाच्च। तत्स्थभावेन्दोः प्रतिबिम्ब उदञ्चति, न तु स्वरूपं; तत्तल्लिप्सालक्षणोपाधिं विना तत्प्रतिबिम्बस्याप्यनुदयात्। प्रतिबिम्बश्चायं न स्वरूपसदृशः, तत्तदेकैकगुणमात्रावलम्बनत्वात् तत्तल्लिप्सायास्तस्यास्वच्छत्वाच्च, शुद्धभावलिप्सा तु शुद्धं पूर्णञ्च तमाकर्षत्येव। विचित्रगुणगणावलम्बनत्वात्तदर्थप्रयत्नत्वाच्चेत्यर्थः। तर्हि कथं तादृशभक्तव्यवधाने सति स नापयाति? तत्राह— तत्संसर्गेति। तत्संसर्गप्रभावाच्चिरमुदञ्चत्येव संस्काररूपेणेति भावः॥ ४७-४८॥

## अनुवाद

यहाँ पर प्रतिबिम्ब रत्याभास के उदय होने की प्रक्रिया को कहते हैं। भोग-मोक्षादि में अनुरक्त लोक कदाचित् न कि बार-बार सद्भक्त के सङ्ग में कीर्त्तनादि का अनुसरण भोग-मोक्ष लिप्सा के साथ ही करते हैं, और इससे वे प्रायः प्रसन्न मन वाले होते हैं। अर्थान्तर लिप्सा रूपी दोष को न जान पाने पर भी

भोग-मोक्षादि लिप्सा युक्त चित्त वाले किसी-किसी व्यक्ति के हृदय में भगवद्भक्त के हृदयाकाश स्थित भावचन्द्रमा का प्रतिबिम्ब उदित होता है। यहाँ श्लोक में भक्तहृन्नभःस्थस्य अर्थात् भक्त के हृदयाकाश स्थित कहने का अभिप्राय यह है कि उसका हृदय आकाश के समान होता है, अतः अन्य वस्तु (कामनादि) का स्पर्श न रहने के कारण वह प्रेम चन्द्रमा के उदय के योग्य होता है। भक्त हृदयस्थ भावचन्द्रमा का प्रतिबिम्ब उदित होता है, न कि उनका स्वरूप। भोग-मोक्षादि लिप्सा लक्षण उपाधि के बिना भावचन्द्रमा के प्रतिबिम्ब का उदय नहीं होता है। अतएव यह प्रतिबिम्ब मूल भावचन्द्रमा स्वरूप नहीं होता है। यह मूल भावचन्द्रमा का मात्र कुछेक गुण अवलम्बन करके रहता है, एवं भोगादि लिप्सा होने के कारण अस्वच्छ होता है। किन्तु शुद्ध भाव लिप्सा शुद्ध एवं पूर्ण भाव को प्राप्त कराती है, कारण– यह भाव के विचित्र गुणों का अवलम्बन करके उसी भाव के लिए प्रयत्नशीला होती है।

यहाँ प्रश्न करते हैं कि फिर शुद्ध भक्त के व्यवधान होने पर वह प्रतिबिम्ब भी तिरोहित क्यों नहीं हो जाता है? इसके उत्तर में कहते हैं कि उन भक्त के संग के प्रभाव से वह प्रतिबिम्ब अनेक काल तक उदित रहता है, अर्थात् संस्कार रूप में रह जाता है॥ ४७-४८॥

## अर्थरत्नाल्प-दीपिका

तस्योदयो भाग्येनैवेत्याह– दैवादिति द्वाभ्याम्। प्रायः प्रसन्नमनसामन्यचित्तत्वात् सद्भक्तानां भावाभिलाषाभावेऽपि तदनुमोदनमात्रेण प्रायोविकशितचित्तानां हृदि तद् ग्रहणायोग्येऽपि तत्संसर्गस्य प्रभावतः माहात्म्यात्॥ ४७-४८॥

## अनुवाद

प्रतिबिम्ब रत्याभास का उदय भाग्य से ही होता है, उसको दैवात् इत्यादि दो श्लोकों से कहते हैं। प्रायः प्रसन्नमन एवं अन्य चित्त वाला (भोगादि अभिलाष वाला) होने के कारण सद्भक्तों के भाव अभिलाष का अभाव होने पर भी उसके अनुमोदन मात्र से प्रायः विकसित हृदय वाले व्यक्ति में प्रतिबिम्ब के ग्रहण की अयोग्यता होने पर भी सद्भक्त के संसर्ग के प्रभाव अर्थात् माहात्म्य से प्रतिबिम्ब रत्याभास का उदय होता है ॥ ४७-४८॥

## भक्तिसार-प्रदर्शिनी

तस्याविर्भावे प्रकारमाह– दैवादिति। सद्भक्तसङ्गाद्धेतोः कीर्त्तनाद्यनुसारिणां केषाञ्चित् भोगमोक्षादिरागिणां हृदि सद्भक्तहृदयरूपाकाशस्थस्य भावरूपचन्द्रस्य प्रतिबिम्ब उदञ्चति। ननु यथा चन्द्रस्य मेघादि व्यवधाने जलादौ प्रतिबिम्बो न तिष्ठति, तथाप्यत्रापि तादृशभक्तस्य व्यवधाने सति प्रतिबिम्बः कथं नापयाति? तत्राह– तत् संसर्गेति। तत्संसर्गप्रभावात् संस्काररूपेण चिरमुदञ्चत्येवेति भावः॥ ४७-४८॥

## अनुवाद

प्रतिविम्ब रत्याभास के आविर्भाव में प्रकार को दैवात् इत्यादि पद्य से कहते हैं। सद्भक्त का सङ्ग

होने के कारण कीर्त्तनादि का अनुसरण करने वाले कुछ भोगमोक्षादि कामी व्यक्तियों के हृदय में सद्भक्त के हृदय रूप आकाश में स्थित भाव रूप चन्द्रमा का प्रतिबिम्ब उदित होता है।

यहाँ शंका करते हैं कि जिस प्रकार मेघादि व्यवधान होने पर जलादि में चन्द्र का प्रतिबिम्ब नहीं पड़ता है उसी प्रकार भक्तगण के चले जाने पर भी प्रतिबिम्ब कैसे नहीं गया? कहते हैं कि भक्तजनों के सङ्ग के प्रभाव से प्रतिबिम्ब संस्कार रूप में अनेक काल तक रहता है॥ ४७-४८॥

**अथ च्छाया—**

**क्षुद्रकौतूहलमयी चञ्चला दुःखहारिणी।**
**रतेश्छाया भवेत् किञ्चित्तत्सादृश्यावलम्बिनी॥ (४९)**

### अनुवाद

छाया नामक रत्याभास का वर्णन कर रहे हैं—

जो क्षुद्र, कौतूहलमयी, चंचल, दुःख का नाश करने वाली और थोड़े अंश में रति का सादृश्य अवलम्बन करने वाली होती है उसको रति की छाया अर्थात् छाया रत्याभास कहते हैं॥ ४९॥

### दुर्गमसङ्गमनी

अथ छायेति। छायाशब्देनात्र कान्तिरुच्यते। "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरस्य नानार्थवर्गात्, सा चात्र प्रतिच्छविरेवोच्यते। तस्याश्च कान्तित्वादाभासशब्दस्य तत्र च प्रसिद्धत्वात्, तदेतदभिप्रेत्य छायां लक्षयति— क्षुद्रेति। क्षुद्रकौतूहलत्वं पारमार्थिकेऽपि कौतूहले तस्मिन् लौकिकत्वमननात्। तथापि परमार्थकौतूहलमयरतेस्तत्र यत् किञ्चिच्छविराभासत एवेति छायात्वमत्रेति भावः। रतेश्छाया तु किञ्चिद्यथा स्यात्तथा तस्या रतेः सादृश्यावलम्बिनी भवेदिति तु योजना; अतश्छायात्वाच्चञ्चलाऽपि, न तु प्रतिबिम्बवत् स्थिरा, भोगादिरागवल्लौकिककौतुकस्य स्थिरत्वाभावात्, तथापि वस्तुप्रभावाद् दुःखहारिणी संसारतापस्य क्रमाच्छमनीति।

न चात्र विशेषलक्षणे भोगादिसम्बन्धाभावादाभासगतस्य सामान्यलक्षणस्याव्याप्तिः स्यात्, कौतूहलानुभवस्य च भोगविशेषत्वात्, न चात्र भोगसम्बन्धेन प्रतिबिम्बेऽतिव्याप्तिः स्यात्, क्षुद्रेत्यनेनैव ततोऽविच्छिन्नत्वात्॥ ४९॥

### अनुवाद

यहाँ पर छाया शब्द का अर्थ कान्ति है। अमरकोष के नानार्थ वर्ग में सूर्य प्रिया, कान्ति, प्रतिबिम्ब और अनातप को छाया के पर्याय के रूप में कहा गया है। यहाँ पर भी कान्ति का अर्थ प्रतिच्छवि है। प्रतिच्छवि का कान्तित्व होने के कारण आभास शब्द का इसी अर्थ में प्रसिद्धि है, इसी अभिप्राय से छाया का लक्षण करते हैं— क्षुद्र इत्यादि पद्य से। पारमार्थिक कौतूहल में भी लौकिकता का मनन होने से क्षुद्र कौतूहल होता है। तथापि परमार्थ कौतूहलमय रति की यत्किञ्चित् छवि वहाँ पर आभासित होती है, इसी से इसको छाया कहते हैं। किन्तु रति की छाया थोड़े अंश में ही रति की समानता को धारण करती है। अतः छाया होने से यह चञ्चल अर्थात् अस्थिर होती है। प्रतिबिम्ब के समान स्थिर

नहीं होती है। इस अस्थिरता का कारण यह है कि भोगादि लिप्सा की जो स्थिरता होती है उस प्रकार की स्थिरता लौकिक कौतुक में नहीं पाया जाता है। तथापि वस्तु के प्रभाव से यह छाया संसार ताप रूपी दुःख का क्रम पूर्वक शमन करने वाली है।

छाया रत्याभास के इस विशेष लक्षण में भोगादि सम्बन्ध के अभाव से रत्याभासगत जो सामान्य लक्षण हैं उनकी अव्याप्ति नहीं होगी, इसका कारण यह है कि कौतूहल का अनुभव भी भोग विशेष है। और यहाँ पर इस भोग सम्बन्ध से प्रतिबिम्ब रत्याभास में इस छाया रत्याभास की अतिव्याप्ति नहीं होगी क्योंकि छाया रत्याभास में यह भोग केवल क्षुद्र (लौकिक) कौतूहलमय अस्थिर है, और प्रतिबिम्ब रत्याभास में भोगमोक्षादि की लिप्सा स्थिर रूप में रहती है॥ ४९ ॥

## अर्थरत्नाल्प-दीपिका

रतेश्छाया तु किञ्चित्तस्याः सादृश्यं तदवलम्बिनी भवेदिति योजना। यथान्यस्यामपि छायायां पुरुषावयवानां किञ्चित् सादृश्यम्, अद्भुता बालापि दुःखहारिणी॥ ४९ ॥

## अनुवाद

रति की छाया किञ्चित् रति के समान दिखाई देती है, अर्थात् उसको अवलम्बन करके होती है। उदाहरण के लिए— अन्य छाया में भी पुरुष अवयवों की कुछ अंश में समानता दिखाई देता है, इस प्रकार जानना होगा। अद्भुता बाला होने पर भी दुःखहारिणी होती है॥ ४९ ॥

## भक्तिसार-प्रदर्शिनी

पारमार्थिके भगवत्कीर्त्तन-भक्तनृत्यादि कौतूहले तस्मिन् जने सामान्यलौकिकत्वमननात् क्षुद्रकौतूहलमयी रतिच्छाया तु किञ्चिद् यथा स्यात्तथा तस्याः रतेः सादृश्यावलम्बिनी भवेदिति योजना। अतच्छायात्वाच्चञ्चलापि, न तु प्रतिबिम्बवत् स्थिरा। तथापि दुःखहारिणी संसारतापस्य क्रमाच्च शमनीति॥ ४९ ॥

## अनुवाद

पारमार्थिक भगवत्कीर्त्तन, भक्त-नृत्यादि कौतूहल में सामान्य लौकिकता का मनन करने से होने वाली क्षुद्र कौतूहलमयी छाया रत्याभास कुछ अंश में रति के सादृश्य का अवलम्बन करने वाली होती है। अतएव छाया होने से वह चञ्चला भी होती है, प्रतिबिम्ब की भाँति स्थिर नहीं होती है। तथापि वह दुःखहारिणी है, संसार ताप को क्रम पूर्वक शमन करने वाली है॥ ४९ ॥

**हरिप्रियक्रियाकालदेशपात्रादिसङ्गमात्।**
**अप्यानुषङ्गिकादेषा क्वचिदज्ञेष्वपीक्ष्यते॥ (५०)**

## अनुवाद

श्रीहरि के प्रिय क्रिया (श्रवण कीर्त्तन आदि), काल (जन्मयात्रादि), देश (वृन्दावनादि) एवं पात्रादि (श्रीकृष्ण भक्तादि) के साथ आनुषङ्गिक मिलन होने पर कभी-कभी अज्ञ व्यक्ति में भी इस

प्रकार रति की छाया दिखाई देती है॥ ५०॥

### दुर्गमसङ्गमनी

हरिप्रियक्रियादीनां सङ्गमाद्युगपन्मिलनादित्यर्थः।

### अनुवाद

श्रीहरि के प्रिय क्रिया आदि के सङ्गम से अर्थात् युगपत् मिलन से मूढ एवं अज्ञ व्यक्तियों में रति की छाया पड़ती है॥ ५०॥

### अर्थरत्नाल्प-दीपिका

हरिप्रियाणां क्रियाकालदेशपात्रादीनां सङ्गमात्, हरिप्रियपात्रं भक्तः, कथम्भूतात् आनुषङ्गिकात् उद्देशं विनैव भाग्येनैव लब्धादित्यर्थः। क्वचिदज्ञेष्वपीक्ष्यत इति भुक्तिमुक्तिकामिषु केषुचिदीक्ष्यत एवेत्यर्थः॥५०॥

### अनुवाद

श्रीहरि के प्रिय, क्रिया, काल, देश, पात्र आदि के सङ्ग होने पर मूढ एवं अज्ञ व्यक्तियों में रति की छाया पड़ती है। हरिप्रियपात्र भक्त को कहते हैं। किस प्रकार का संग? कहते हैं— आनुषंगिक अर्थात् उद्देश के बिना भाग्य से ही प्राप्त। कभी-कभी अज्ञ व्यक्तियों में भी दिखाई देती है, इस कथन का अभिप्राय यह है कि भुक्ति-मुक्ति कामी किसी-किसी में यह दिखाई देती है॥ ५०॥

### भक्तिसार-प्रदर्शिनी

हरिप्रियक्रियाकालादीनामानुषङ्गिकसङ्गात् क्वचिदज्ञेषु मोक्षेच्छा क्षान्त्यादिरहितमूढ़ेषु एषा रतिच्छायापीक्ष्यते॥ ५०॥

### अनुवाद

श्रीहरि के प्रिय जो क्रिया काल आदि हैं उनके आनुषङ्गिक सङ्ग से कभी-कभी मोक्षेच्छा, क्षान्ति आदि रहित मूढ़ व्यक्तियों में भी यह छाया नामक रत्याभास देखा जाता है॥ ५०॥

**किन्तु भाग्यं विना नासौ भावच्छायाप्युदञ्चति।**
**यदभ्युदयतः क्षेमं तत्र स्यादुत्तरोत्तरम्॥ (५१)**

### अनुवाद

किन्तु भाग्य के बिना भाव छाया का भी उदय नहीं होता है। जिसके उदय होने पर कृपा पात्र व्यक्ति का उत्तरोत्तर मङ्गल होता है॥ ५१॥

### अर्थरत्नाल्प-दीपिका

भावच्छायापीति— प्रतिबिम्बस्तु सुतरां नेति— पूर्व्वं भाग्यविशेषात् कीर्त्तनादीनां स्वयं कारणात् प्रतिबिम्बः। अधुना भाग्यात् तत्प्रियक्रियादीनामेकैकस्य सङ्गममात्राच्छाया। यदभ्युदयतो ययोः

प्रतिबिम्बच्छाययोरभ्युदयतः पूर्व्ववासनाक्षयपूर्व्वकं हरिकीर्त्तन-शरणादिभिः सम्यक् उदयात् उत्तरोत्तरं क्षेमं साधनेऽभिनिवेशादिरूपं हर्य्यासक्तिरतिरूपञ्च। तत्र प्रसादपात्रे जने॥ ५१॥

## अनुवाद

जब भाग्य के बिना भाव छाया का भी उदय नहीं होता है तब तो भाग्य के बिना प्रतिबिम्ब का उदय होगा ही नहीं, ऐसा जानना चाहिये। पूर्व में कहा गया है कि भाग्य विशेष से कीर्त्तनादि स्वयं कारण से प्रतिबिम्ब का उदय होता है। सम्प्रति भाग्य से श्रीकृष्ण के प्रिय क्रिया आदि के एक एक के सङ्ग से छाया का उदय होता है, इसको कहते हैं। प्रतिबिम्ब एवं छाया का उदय होने पर पहले की वासना का क्षय हो जाता है, उसके बाद श्रीहरि कीर्त्तन श्रवणादि से सम्यक् उदय होने पर उत्तरोत्तर कल्याण होता है। यह कल्याण साधन में अभिनिवेश आदि रूप और श्रीहरि में आसक्ति एवं रति रूप होता है। तत्र अर्थात् यह सब प्रसाद के प्रात्र व्यक्ति में होता है॥ ५१॥

**हरिप्रियजनस्यैव प्रसादभरलाभतः।**
**भावाभासोऽपि सहसा भावत्वमुपगच्छति॥ (५२)**

## अनुवाद

श्रीहरि के प्रिय व्यक्ति की प्रसन्नता को प्राप्त करने पर भवाभास भी सत्त्वर भावत्व को प्राप्त करता है॥ ५२॥

## अर्थरत्नाल्प-दीपिका

प्रसादभरलाभतोऽतिप्रसादलाभात्:, एवकारः साधनाभिनिवेशादि-व्यावर्त्तकः। भावाभासः प्रतिबिम्बच्छायात्मकः, सहसा शीघ्रं॥ ५२॥

## अनुवाद

प्रसादभरलाभतः का अर्थ है अति प्रसन्नता से; एव का अर्थ है कि बिना किसी साधनाभिनिवेश के ही केवल हरि के प्रिय भक्त की प्रसन्नता से ही सहसा यानि शीघ्र ही प्रतिबिम्ब या छायात्मक भावाभास भावत्व को प्राप्त करता है॥ ५२॥

**तस्मिन्नेवापराधेन भावाभासोऽप्यनुत्तमः।**
**क्रमेण क्षयमाप्नोति खस्थः पूर्णशशी यथा॥ (५३)**

## अनुवाद

और यदि श्रीहरि के प्रिय भक्तों के पास अपराध होता है तब उत्कृष्ट भावाभास भी आकाश स्थित पूर्ण चन्द्र की भाँति क्रमशः क्षय को प्राप्त होता है॥ ५३॥

## अर्थरत्नाल्प-दीपिका

तस्मिन्नेवापराधेन, न तु विषय भोगेनेत्यर्थः॥५३॥

### अनुवाद

तस्मिन्नेवापराधेन कहने का अभिप्राय यह है कि विषय भोग से नहीं किन्तु श्रीहरि के प्रिय भक्तों के पास अपराध होने से पूर्ण चन्द्रमा की भाँति भाव भी क्षय को प्राप्त होता है॥ ५३॥

### भक्तिसार-प्रदर्शिनी

तस्मिन् हरिप्रिय-जनेऽपराधेनानुत्तमः श्रेष्ठोऽपि रत्याभासः क्षयं प्राप्नोति॥ ५३॥

### अनुवाद

उसी हरि प्रिय भक्त के प्रति अपराध करने से श्रेष्ठ रत्याभास भी क्षय को प्राप्त होता है॥ ५३॥

**किञ्च—**

**भावोऽप्यभावमायाति कृष्णप्रेष्ठापराधतः।**
**आभासताञ्च शनकैर्न्यूनजातीयतामपि॥ (५४)**

### अनुवाद

और भी कहते हैं—

श्रीकृष्ण के अतिशय प्रिय जनों के पास अपराध होने पर भाव सम्पूर्ण रूप से विनष्ट हो जाता है। या फिर शनैः शनैः आभासता अथवा न्यून जातीयता को प्राप्त होता है॥ ५४॥

### दुर्गमसङ्गमनी

अभावं द्विविदस्यैवापराधस्याधिक्येन। एवमाभासतां मध्यमत्वेन; न्यूनजातीयतामल्पत्वेन, तत्र न्यूनजातीयत्वं वक्ष्यमाणानां शान्त्यादिपञ्चविधानां रत्याद्यष्टविधानाञ्च तारतम्येन ज्ञेयम्॥54॥

### अनुवाद

द्विविद वानर के अपराध की भाँति अपराधाधिक्य होने से रति अभाव को प्राप्त होती है। मध्यम अपराध हाने से भाव आभासता को प्राप्त करता है। अल्प अपराध होने पर न्यून जातीय रति में मति होती है। न्यूनजातीयत्व को अग्रिम ग्रन्थ में वर्णित शान्त्यादि पञ्चविध रति एवं रत्यादि अष्टविध स्तर के तारतम्य के अनुसार जानना होगा॥ ५४॥

### अर्थरत्नाल्प-दीपिका

कृष्णस्य स्वयं भगवतः प्रेष्ठा साधनसिद्धा भक्ताः। अभावं द्विविदस्यैवापराधस्याधिक्येन। आभासतां मध्यमत्वेन, न्यूनजातीयतामल्पत्वेन। तत्राभासता सालोक्यादि-चतुर्द्धा मुक्तिषु कामना। न्यूनजातीयत्वं वक्ष्यमाणानां शान्तादिपञ्चविधरतीनां यथोत्तरश्रेष्ठानां यथापूर्व्वत्वेन॥ ५४॥

### अनुवाद

यहाँ प्रेष्ठ शब्द का अर्थ है स्वयं भगवान् श्रीकृष्ण के साधन सिद्ध भक्तगण। इन सबों के पास द्विविद वानर के अपराध की भाँति अपराधाधिक्य होने से रति अभाव को प्राप्त होती है। मध्यम अपराध

हाने से भाव आभास को प्राप्त हो जाता है। अल्प अपराध होने पर अल्प जातीय भाव हो जाता है।

सालोक्यादि चार प्रकार की मुक्तियों की कामना को आभासता कहते हैं।

न्यून जातीयता की प्राप्ति का अभिप्राय यह है कि आगे वर्णित शान्तादि पाँच प्रकार की रतियों का उत्तर उत्तर श्रेष्ठ है, पूर्व पूर्व कनिष्ठ है, श्रेष्ठ भाव कनिष्ठ भाव हो जाता है॥ ५४॥

### भक्तिसार-प्रदर्शिनी

कृष्णस्य प्रेष्ठः अतिशय प्रियस्तस्मिन्नपराधतः। यथा रघुनाथस्य पार्षदोऽपि द्विविदनामा वानरस्तस्य लक्ष्मणस्थानेऽपराधस्याधिक्येन भावोऽभावं प्राप्तः। अपराधस्य मध्यमत्वेनाभासत्वम्, अल्पत्वे न्यूनजातीयत्वम्। तच्चोज्ज्वलरतिमान् दास्यं, दास्यवान् शान्त्यादिकं प्राप्नोति ॥५४॥

### अनुवाद

श्रीकृष्ण के प्रेष्ठ अर्थात् अतिशय प्रिय उन सबके पास अपराध होने पर भाव भी अभाव को प्राप्त होता है। जिस प्रकार द्विविद नाम वानर श्री रघुनाथ का पार्षद होकर भी श्री लक्ष्मण के स्थान में अपराध के आधिक्य के कारण उसका श्री रघुनाथ विषयक भाव अभाव में परिणत हो गया। अपराध के मध्यम होने के कारण भाव आभासता को प्राप्त करता है। अल्प अपराध होने पर न्यून जातीयता को प्राप्त करता है। जैसे उज्ज्वल भावाक्रान्त व्यक्ति दास्य को प्राप्त करता है। दास्य भक्तिमान व्यक्ति अपराध होने पर शान्त आदि को प्राप्त करता है॥ ५४॥

**गाढासङ्गात् सदायाति मुमुक्षौ सुप्रतिष्ठिते।**
**आभासतामसौ किंवा भजनीयेशभावताम्॥ (५५)**

### अनुवाद

सुप्रतिष्ठित मुमुक्षु व्यक्ति में सर्वदा गाढ आसक्ति होने पर वह भाव क्रमशः आभासता को प्राप्त करता है, अथवा भजनीय ईश्वर तत्त्व के साथ अभेद अभिमान मूलक अहंग्रहोपासना में प्रवेश करता है॥ ५५॥

### दुर्गमसङ्गमनी

भजनीयो य ईशस्तस्य भावोऽभिमान इव भावोऽभिमानो यस्य तत्तां याति, अहंग्रहोपासनामाविशतीत्यर्थः।

### अनुवाद

भजनीय जो ईश्वर हैं उनके भाव-अभिमान् के समान भाव-अभिमान को प्राप्त करता है। अर्थात् अहंग्रह उपासना में प्रवेश कर जाता है॥ ५५॥

### अर्थरत्नाल्प-दीपिका

असौ भावः, भजनीयो य ईशस्तस्य भावो ब्रह्मत्वं याति, तदभिमानितां प्राप्नोति ॥५५॥

### अनुवाद

श्लोकोक्त असौ शब्द का अर्थ है- भाव, भजनीय ईश्वर का जो भाव है उसको अर्थात् ब्रह्मत्व

को प्राप्त कर लेता है। अर्थात् ब्रह्म अभिमानिता को प्राप्त हो जाता है॥ ५५॥

**भक्तिसार-प्रदर्शिनी**

मुमुक्षौ कथम्भूते? सुप्रतिष्ठिते मोक्षस्य सर्वोत्कर्षव्यवस्थापक-ज्ञानशास्त्रे युक्त्यानुकूल-तर्करचनाद्वारा प्रतिष्ठां प्राप्ते भजनीयो य ईशस्तस्य भावोऽभिमानो यस्य तत्तां याति, अहंग्रहोपासनामाविशतीत्यर्थः॥५५॥

**अनुवाद**

किस प्रकार के मुमुक्षु? कहते हैं— 'सुप्रतिष्ठित' अर्थात् जो मोक्ष का सर्वोत्कर्ष प्रतिपादक ज्ञान-शास्त्र में युक्ति एवं तर्क रचना द्वारा प्रतिष्ठा प्राप्त हैं। भजनीयेशभावताम् अर्थात् भजनीय जो ईश्वर हैं उनका जो भाव है उसको प्राप्त करता है। अर्थात् अहंग्रहोपसना में प्रवेश कर जाता है॥ ५५॥

**अतएव क्वचित्तेषु नव्यभक्तेषु दृश्यते।**
**क्षणमीश्वरभावोऽयं नृत्यादौ मुक्तिपक्षगः॥ (५६)**

**अनुवाद**

इसलिए किसी किसी नवीन भक्त में नृत्यादि के समय मुक्तिपक्षगामी यह ईश्वर भाव क्षणकाल के लिए दिखाई पड़ता है॥ ५६॥

**दुर्गमसङ्गमनी**

क्षणमित्युपलक्षणं क्वचिच्चिरमभिव्याप्य, मुक्तिस्त्वत्र सारूप्यसार्ष्टिसामीप्यलक्षणा ज्ञेया।

**अनुवाद**

क्षण शब्द उपलक्षण में है अर्थात् किसी किसी में अनेक काल पर्यन्त मुक्ति भावाक्रान्त हृदय रहता है।

यहाँ पर मुक्ति शब्द से सारूप्य सार्ष्टि सामीप्य को जानना होगा॥ ५६॥

**अर्थरत्नाल्प-दीपिका**

ईश्वरस्येव भावश्चेष्टा दृश्यते, आन्तरत्वेन विज्ञैरेव सर्वदा ज्ञातुं शक्योऽपि सर्वैरेव नृत्यादौ साक्षादनुभूयते, मुक्तिः पञ्चविधा॥५६॥

**अनुवाद**

ईश्वर का भाव अर्थात् चेष्टा देखते हैं। आन्तर भाव होने के कारण विज्ञगण ही इसे सर्वदा जानने में सक्षम होते हैं। किन्तु नृत्य आदि के समय सभी व्यक्तिगण ईश्वर भाव का साक्षात् अनुभव करते हैं।

यहाँ पर मुक्ति का अभिप्राय सालोक्य, सार्ष्टि, सारूप्य, सामीप्य एवं एकत्व रूप पाँच प्रकार की मुक्तियों से है॥ ५६॥

**भक्तिसार-प्रदर्शिनी**

क्षणमित्युपलक्षणं क्वचिच्चिरमभिव्याप्य, मुक्तिस्त्वत्र सारूप्यसार्ष्टिसामीप्यलक्षणा ज्ञेया।

## अनुवाद

क्षण शब्द उपलक्षण में है अर्थात् किसी किसी में अनेक काल पर्यन्त मुक्ति भावाक्रान्त हृदय रहता है।

यहाँ पर मुक्ति शब्द से सारूप्य सार्ष्टि सामीप्य को जानना होगा॥ ५६॥

**साधनेक्षां विना यस्मिन्नकस्माद्भाव ईक्ष्यते।**
**विघ्नस्थगितमत्रोह्यं प्राग्भवीयं सुसाधनम्॥ (५७)**

## अनुवाद

साधन दर्शन के बिना जिसमें अकस्मात् भाव दिखाई देता है उसमें पूर्वजन्मगत सुसाधन विघ्न से स्थगित हो गया था, ऐसा जानना चाहिए॥ ५७॥

## दुर्गमसङ्गमनी

साधनेक्षामिति— साधनानि पूर्वोक्तसाधनाभिनिवेशकृष्णप्रसादभक्तप्रसादलक्षणानि कारणानि तेषामीक्षां शास्त्रादिद्वारा ज्ञानं विना यस्मिन् भावो रत्यादिरीक्ष्यते निश्चीयते तस्मिन् वृत्रादिष्विव प्राग्भवीयं साधनमूह्यम्।

## अनुवाद

साधनानि अर्थात् पूर्वोक्त साधनाभिनिवेश-कृष्णप्रसाद-भक्तप्रसाद रूप कारण जहाँ पर देखने में नहीं आता है अर्थात् शास्त्रादि ज्ञान बिना, अथच जहाँ पर भाव अर्थात् रति आदि दिखाई देता है वहाँ पर वृत्रासुरादि के समान पूर्वजन्मगत साधन को जानना चाहिए॥ ५७॥

## अर्थरत्नाल्प-दीपिका

सुष्ठु साधनं सुसाधनं उत्पादित-हर्य्यासक्तिकं श्रवणकीर्त्तनादि। विघ्नेन हरिभक्ताल्पाराधजैहिक-भोगलालसादिलक्षणेन स्थगितमावृतम्॥ ५७॥

## अनुवाद

पूर्व जन्म में अपराध शून्य होकर हरि में आसक्ति उत्पन्न करने वाला उत्तम रूप से श्रवण कीर्त्तनादि भक्ति के अङ्गों का अनुष्ठान हुआ था। श्रीहरि भक्त के पास अल्प अपराध होने के कारण इस जगत के भोगादि में लालसा होने के कारण भाव स्थगित हुआ अर्थात् विषय भोग की आसक्ति से आवृत हुआ, ऐसा जानना होगा॥ ५७॥

## भक्तिसार-प्रदर्शिनी

साधनेक्षामिति— पूर्वोक्तसाधनाभिनिवेशकृष्णप्रसादभक्तप्रसादलक्षणानि कारणानि तेषामीक्षां दर्शनं विना यस्मिन् भावो रत्यादिर्वीक्ष्यते, तस्मिन् वृत्रासुरादिष्विव प्राग्भवीयं साधनमूह्यम्॥ ५७॥

## अनुवाद

पूर्वोक्त साधनाभिनिवेश-कृष्णप्रसाद-भक्तप्रसाद रूप कारण जहाँ पर देखने में नहीं आता है,

अथच जहाँ पर भाव-दिखाई देता है वहाँ पर वृत्रासुरादि के समान पूर्वजन्मगत साधन को जानना चाहिए॥ ५७॥

**लोकोत्तरचमत्कारकारकः सर्वशक्तिदः।**
**यः प्रथीयान् भवेद्भावः स तु कृष्णप्रसादजः॥ (५८)**

### अनुवाद

लोकोत्तर चमत्कारकारी (साधन से उत्पन्न भाव से पृथक्) सर्वशक्तिप्रद जो वृद्धिशील भाव है, वह श्रीकृष्ण की प्रसन्नता से ही उत्पन्न होता है॥ ५८॥

### दुर्गमसङ्गमनी

ननु पूर्वं (१-३-६) साधनाभिनिवेशादित्रयेणाधुना च प्राग्भवीयसाधनेन भावजन्मोक्तं, तेषां मध्ये कतमः श्रेष्ठः? तत्र पूतनादिदृष्टान्तमभिप्रेत्याह— लोकेति।

### अनुवाद

१-३-६ में कथित है— "साधनाभिनिवेशेन कृष्णतद्‌भक्तयोस्तथा। प्रसादेनातिधन्यानां भावो द्वेधाभिजायते॥" यह पहले तीन प्रकार से भावोत्पत्ति को कहा है, और अभी पूर्व जन्म के साधन से उत्पन्न भाव का वर्णन किया गया है। इन सबके मध्य में कौन सा भाव श्रेष्ठ है? इसके उत्तर में पूतनादि के दृष्टान्त को लक्ष्य करके कहते हैं— लोकेति॥ ५८॥

### अर्थरत्नाल्प-दीपिका

ननु साधनेच्छाया अभावाच्छुकादिवत् कृष्णप्रसादजः कथं नानुमेयोऽयं भावस्तत्राह— लोकेति। साधनज एतादृशो नेति भावः॥ ५८॥

### अनुवाद

साधन की इच्छा के अभाव में यह क्यों न अनुमान किया जाय कि शुकादि की तरह श्रीकृष्ण कृपा से हार्द आदि रूप में भाव की प्राप्ति हुई है। इसके उत्तर में इस पद्य को कहा गया है। कहने का अभिप्राय यह है कि साधनजन्य भाव कृष्णप्रसादज भाव के समान नहीं होता है॥ ५८॥

### भक्तिसार-प्रदर्शिनी

नूनं पूर्वं (१।३।६) साधनाभिनिवेशादित्रयेणाधुना च प्राग्भवीयसाधनेन भावजन्मोक्तं, तेषां मध्ये कतमः श्रेष्ठस्तत्र सार्वज्ञादि पूतनादिदृष्टान्तेन भगवत्प्रसादस्याधिक्यमभिप्रेत्याह— लोकेति। सर्वशक्तिदो यः प्रथीयान् भावः सः॥ ५८॥

### अनुवाद

पहले (1/3/6) कहा गया है कि भाव तीन प्रकार से आता है— साधनाभिनिवेश से तथा कृष्ण या कृष्णभक्त की कृपा से। और अभी पूर्व जन्म के साधन से उत्पन्न भाव का भी वर्णन किया गया है।

साधनाभिनिवेशादि तीन प्रकार से तथा पूर्व जन्म की साधना से जो भाव आता है उनमें से कौन सा भाव श्रेष्ठ है? पूतना के दृष्टान्त से उत्तर देते हैं कि कृष्ण प्रसाद से प्राप्त भाव श्रेष्ठ है। सर्वशक्तिद: अर्थात् यह भाव सर्वशक्ति को देने वाला है॥ ५८॥

**जने चेज्जातभावेऽपि वैगुण्यमिव दृश्यते।**
**कार्य्या तथाऽपि नासूया कृतार्थः सर्वथैव सः॥ (५९)**

### अनुवाद

जात भाव व्यक्ति में भी यदि बाहर से दुराचारता रूप कुछ देखने में आता है तथापि उसमें असूया नहीं करनी चाहिये, कारण वह व्यक्ति भाव प्राप्त कर सब प्रकार से कृतार्थ हो गया है॥ ५९॥

### दुर्गमसङ्गमनी

वैगुण्यं बहिर्दुराचारता, तदिवेति तेन लिप्तत्वाभावात्। तथा चोक्तम्— "अपवित्रः पवित्रो वे"त्यादि, कृतार्थत्वञ्चात्र जातभावत्वादेव॥ ५९॥

### अनुवाद

वैगुण्यं अर्थात् बाहर से दुराचारता के तरह दिखाई देता है। वैगुण्यमिव कहने का अभिप्राय यह है कि वह उसमें लिप्त नहीं होता है। कहा गया है—

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरशुचिः॥

"चाहे अपवित्र हो या पवित्र, या फिर किसी भी अवस्था में हो, जो व्यक्ति पुण्डरीकाक्ष भगवान् का स्मरण करता है वह बाहर और अन्तर में शुद्ध होता है।"

प्रकृत प्रकरण में तो जात भाव होने के कारण वह सर्वथा कृतार्थ हो चुका है॥ ५९॥

### अर्थरत्नाल्प-दीपिका

कस्यचिज्जातभावस्यापि निषिद्धाचरणादौ प्रवृत्तिः स्वस्मिन् भाववृद्धये श्रीकृष्णेच्छया; इत्यभिप्रेत्याह— जने चेदिति। वैगुण्यमिव कृष्णेच्छया जातत्वादवास्तवमित्यर्थः। यतः सर्वथा कृतार्थो भगवत्कृपाविषयतया कृतकृत्य एव। तद् यथा श्रीकृष्णः श्रीविल्वमङ्गलं चिन्तामणिवेश्यायामासक्तं विधाय तद्वचनमात्रेण सर्व्वं संत्याज्य स्वलीलैकनिष्ठं कृत्वा गुरुणा लीलाशुक इति ख्यातिं प्रापय्य वृन्दावनागतं स्वं दर्शयामासेति। श्रीभरतस्य मृगासक्त्यात्मकं प्रारब्धं कर्म नष्टमप्युद्बोध्य पश्चान्मृग-शरीरे ब्राह्मणशरीरे च परमवैराग्यमुत्पाद्य भाववृद्धिमेव चकारेति च॥५९॥

### अनुवाद

जात भाव किसी किसी व्यक्ति का निषिद्ध आचरण में प्रवृत्ति देखी जाती है। उस प्रकार का निषिद्धाचरण श्रीकृष्ण की इच्छा से भाव को बढ़ाने के लिए होता है। इस उद्देश्य से कहते हैं— जने चेज्

इत्यादि पद्य। 'वैगुण्यमिव' अर्थात् विरुद्ध आचरण की भाँति प्रतीति होता है, ऐसा कहने का अभिप्राय यह है कि श्रीकृष्ण की इच्छा से आचरण होने के कारण अवास्तविक है। कारण वह व्यक्ति सर्वथा कृतार्थ है, भगवत् कृपा प्राप्त होने के कारण कृतकृत्य हो गया है।

जैसे श्रीकृष्ण विल्वमङ्गल को वेश्या चिन्तामणि में आसक्त करके, उसके वचन मात्र से ही सब कुछ परित्याग कराकर एकमात्र अपनी लीला में निष्ठाशील करवाकर, श्री गुरुदेव के द्वारा लीला शुक नाम धारण कराकर श्री वृन्दावन में लाकर अपना दर्शन दिये थे।

श्रीभरत को भी मृग में आसक्ति रूप नष्ट प्रारब्ध कर्म को उद्‌बुद्ध कराकर, उसके बाद मृग शरीर में एवं ब्राह्मण शरीर में परम वैराग्य उत्पादन करवाकर भाव की वृद्धि किये थे॥ ५९॥

## भक्तिसार-प्रदर्शिनी

वैगुण्यं बहिर्दुराचारता तदिवेति तेन लिप्तत्वाभावात्, तथा चोक्तम्— अपवित्रः पवित्रो वेत्यादि, कृतार्थत्वञ्चात्र जातभावत्वादेव॥ ५९॥

## अनुवाद

वैगुण्यं अर्थात् बाहर से दुराचारता के तरह दिखाई देता है। वैगुण्यमिव कहने का अभिप्राय यह है कि वह उसमें लिप्त नहीं होता है। कहा गया है—

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरशुचिः॥

"चाहे अपवित्र हो या पवित्र, या फिर किसी भी अवस्था में हो, जो व्यक्ति पुण्डरीकाक्ष भगवान् का स्मरण करता है वह बाहर और अन्तर में शुद्ध होता है।"

प्रकृत प्रकरण में तो जात भाव होने के कारण वह सर्वथा कृतार्थ हो चुका है॥ ५९॥

**यथा नारसिंहे—**

**भगवति च हरावनन्यचेता, भृशमलिनोऽपि विराजते मनुष्यः।**
**न हि शशकलुषच्छविः कदाचित्तिमिरपराभवतामुपैति चन्द्रः॥ (६०)**

## अनुवाद

जैसाकि नृसिंह पुराण में उक्त है—

श्रीहरि में अनन्य चित्त मानव अत्यन्त मलिन होने पर भी शोभित होता है। पूर्ण चन्द्र बाहर मृगचिह्न से लाञ्छित होने पर भी कभी भी अन्धकार के पास पराजित नहीं होता है॥ ६०॥

## दुर्गमसङ्गमनी

भृशं मलिनोऽपि सुदुराचारत्वेन बहिर्दृश्यमानोऽपि। विराजते— अन्यापराभूतया अन्तर्गतभक्त्या शोभत एव, तत्रार्थान्तरन्यासो— न हीति। "लोकच्छायामयं लक्ष्म तवाङ्के शशसंज्ञितमि"ति— श्रीहरिवंशोक्तेः। शशकलुषच्छवित्वेन बहिर्दृश्यमानोऽपीत्यर्थः।

## अनुवाद

भृशं मलिनोऽपि अर्थात् बाहर सुदुराचार दिखाई देने पर भी। 'विराजित होता है' अर्थात् दूसरे से पराभूत न होकर आन्तरिक भक्ति के द्वारा शोभित होता है। इसको अर्थान्तर न्यास अलङ्कार के द्वारा कहते हैं–

"न हि शशकलुषच्छविः कदाचित् तिमिरपराभवतामुपैति चन्द्रः॥"

"लोग तुम्हारे (चन्द्रमा) शरीर में छायामय चिह्न को शशक कहते हैं।" ऐसा श्रीहरिवंश पुराण में कहा गया है। अभिप्राय यह है कि बाहर शश कलुष छवि देखने में आने पर भी चन्द्र अन्धकार से अपराभूत रहकर सदैव उज्ज्वल रहता है॥ ६०॥

## अर्थरत्नाल्प-दीपिका

भृशमलिनोऽपि दुराचारतया दृश्यमानोऽपि विराजते भगवत्कृपास्पदतया भृशमालिन्यं परिभूय शोभत एव। अर्थान्तरन्यासोऽत्र पद्ये विशेषेणसामान्यसमानत्वात्। मनुष्य इति जातिबोधकत्वात् सामान्यम्॥६०॥

## अनुवाद

अत्यन्त मलिन होने पर भी अर्थात् दुराचार रूप में दिखाई देने पर भी। विराजित होता है– भगवत् कृपास्पद होने के कारण अत्यन्त मालिन्य को पराजित करके शोभित होता है।

इस पद्य में विशेष के द्वारा सामान्य की समानता दिखाई गयी है, इस कारण से अर्थान्तर न्यास नामक अलङ्कार का प्रयोग हुआ है। 'मनुष्य' शब्द में एकवचन का प्रयोग जाति बोधक होने से यहाँ 'मनुष्य' सामान्य है॥ ६०॥

## भक्तिसार-प्रदर्शिनी

भृशं मलिनोऽपि सुदुराचारत्वेन बहिर्दृश्यमानोऽपि। विराजते– अन्यापराभूततयान्तर्गतभक्त्या शोभत एव। तत्रार्थान्तरन्यासमाह– न हीति। लोकच्छायामयं लक्ष्म तवाङ्के शशसंज्ञितमिति हरिवंशोक्तेः। शशकलुषच्छवित्वेन बहिर्दृश्यमानोऽपि इत्यर्थः॥ ६०॥

## अनुवाद

भृशं मलिनोऽपि अर्थात् बाहर सुदुराचार दिखाई देने पर भी। 'विराजित होता है' अर्थात् दूसरे से पराभूत न होकर आन्तरिक भक्ति के द्वारा शोभित होता है। इसको अर्थान्तर न्यास अलङ्कार के द्वारा कहते हैं–

"न हि शशकलुषच्छविः कदाचित् तिमिरपराभवतामुपैति चन्द्रः॥"

"लोग तुम्हारे (चन्द्रमा) शरीर में छायामय चिह्न को शश कहते हैं।" ऐसा श्रीहरिवंश पुराण में कहा गया है। अभिप्राय यह है कि बाहर शश कलुष छवि देखने में आने पर भी चन्द्र अन्धकार से अपराभूत रहकर सदैव उज्ज्वल रहता है॥ ६०॥

रतिरनिशनिसर्गोष्णप्रबलतरानन्दपूररूपैव।
उष्माणमपि वमन्ती सुधांशुकोटेरपि स्वाद्वी॥　　(६१)

इति श्रीश्रीभक्तिरसामृतसिन्धौ पूर्वविभागे भावभक्तिलहरी तृतीया॥ ३॥

## अनुवाद

यह रति स्वभाव से निरन्तर उष्ण एवं प्रबलतर आनन्द प्रवाह स्वरूपा है। सुतरां अनेक प्रकार सञ्चारि भावमय उष्णता प्रकट करने पर भी कोटि-कोटि चन्द्र से भी मधुर है॥ ६१॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग स्थित
भावभक्ति नामक तृतीया लहरी समाप्त॥ ३॥

## दुर्गमसङ्गमनी

उत्तरोत्तराभिलाषवृद्धेरशान्तस्वभावत्वमुष्णत्वमुल्लासात्मकत्वादानन्दत्वमनिशोऽनादित एव यो निसर्गः स्वभावस्तेन उष्णा चासौ प्रबलतरानन्दरूपा चेति विग्रहः, ऊष्माणं तद्विधनानासञ्चारिभावलक्षणम्॥ ६१॥

इति दुर्गमसङ्गमनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके
पूर्वविभागे भावभक्तिलहरी तृतीया॥ ३॥

## अनुवाद

उत्तरोत्तर अभिलाष की वृद्धि होने के कारण अशान्त स्वभाव ही रति का उष्णत्व है। तथा उल्लासात्मक होने के कारण आनन्दपूर्ण है। अतः यह रति अनादि निरन्तर स्वाभाविक उष्ण एवं प्रबलतर आनन्द स्वरूप है। ऊष्माणं अर्थात् रति में ऊष्ण स्वभाव के अनेक प्रकार के सञ्चारि भाव होने के कारण यह उष्ण है॥ ६१॥

श्रीभक्तिरसामृतसिन्धु के दुर्गमसङ्गमनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित
भावभक्ति नामक तृतीया लहरी समाप्त॥ ३॥

## अर्थरत्नाल्प-दीपिका

अनिशं निरन्तरं निसर्गेण स्वभावेन उष्णा च सा प्रबलतरानन्दरूपा चेति विग्रहः। एव-कारोऽयोगव्यवच्छेदकः। अत ऊष्माणमपीत्यादि॥ ६१॥

इत्यर्थरत्नाल्पदीपिकानाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके
पूर्वविभागे भावभक्तिलहरी तृतीया॥ ३॥

## अनुवाद

रति निरन्तर स्वाभाविक उष्ण एवं प्रबलतर आनन्द रूपा होती है। "प्रबलतर आनन्दपूररूपैव" यहाँ पर अयोग व्यवच्छेदक रूप में एव का प्रयोग हुआ है, अतः रति उष्ण होते हुए भी आनन्दरूपा है, ऐसा कहा गया है ॥ ६१॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के अर्थरत्नाल्पदीपिका नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित भावभक्ति नामक तृतीया लहरी समाप्त॥ ३॥

## भक्तिसार-प्रदर्शिनी

अनिशं निरन्तरं यो निसर्गः स्वभावस्तेन ऊष्मा च सा प्रबलतरानन्दरूपा चेति विग्रहः। रतेरुष्णत्वं नाम उत्तरोत्तराभिलाषबुद्ध्याऽशान्तस्वभावत्वम्, उल्लासकत्वादानन्द रूपत्वञ्चेति ज्ञेयम्। ऊष्माणं तद्विधनानासञ्चारिभावलक्षणं वमन्ति अभिव्यक्तं करोतीत्यर्थः॥ ६१॥

इति भक्तिसारप्रदर्शिनीनाम्न्यां श्रीभक्तिरसामृतसिन्धुटीकायां लहरीचतुष्टयात्मके पूर्वविभागे भावभक्तिलहरी तृतीया॥ ३॥

## अनुवाद

रति निरन्तर स्वाभाविक उष्ण एवं प्रबलतर आनन्द रूपा है। रति का उष्णत्व उत्तरोत्तर अभिलाष (भगवान् की प्राप्ति, सेवा एवं सौहार्द्द का अभिलाष) बुद्धि से अशान्त स्वभाव के होने के कारण है। उल्लासप्रद होने के कारण आनन्द रूप भी है, ऐसा जानना चाहिए।

ऊष्माणं अर्थात् रति ऊष्ण स्वभाव के अनेक प्रकार के सञ्चारिभावों को प्रकाश करती रहती है॥ ६१॥

श्रीभक्तिरसामृतसिन्धु के भक्तिसारप्रदर्शिनी नामक टीका में लहरीचतुष्टयात्मक पूर्वविभाग स्थित भावभक्ति नामक तृतीया लहरी समाप्त॥ ३॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग में स्थित<br>भावभक्ति नामक तृतीया लहरी का<br>श्रीहरिदासशास्त्रि कृत<br>हिन्दी भाषानुवाद समाप्त॥ ३॥

# चतुर्थ लहरी— प्रेमभक्तिः

अथ प्रेमा—

सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥ (१)

### अनुवाद

अनन्तर प्रेम का वर्णन करते हैं—

भाव के ही अतिशय गाढ़ होने पर पण्डितगण उसे प्रेम कहते हैं। इसमें चित्त अतिशय स्निग्ध होता है, एवं प्रचुर ममत्व (श्रीकृष्ण के प्रति) होता है॥ १॥

### दुर्गमसङ्गमनी

अथ भावमप्युक्त्वा प्रेमाणमाह— सम्यगिति। अत्र सान्द्रात्मकत्वं स्वरूपलक्षणम्, अन्यद्द्वयं तटस्थलक्षणम्॥ १॥

### अनुवाद

भाव भक्ति का वर्णन करने के पश्चात् प्रेम भक्ति को कहते हैं— सम्यगिति श्लोक के द्वारा। भाव निविड़ आनन्द स्वरूप होने पर प्रेम नाम धारण करता है, यह प्रेम का स्वरूप लक्षण है। सम्यक् मसृणित स्वान्त और ममत्वातिशयाङ्कित, ये दो विशेषण प्रेम के तटस्थ लक्षण हैं॥ १॥

### अर्थरत्नाल्प-दीपिका

श्रीमन्मुकुन्दाय नमः। अथ प्रेमाणमाह— सम्यगिति, स भाव एव सान्द्रात्मा सन् प्रेमा। सान्द्रात्मत्वं स्वरूपलक्षणं, पूर्व्वं चित्तमासृण्यकृत्, अत्र तत्सम्यक्त्वम्। पूर्व्वं रुचिभिरत्र ममत्वेति॥ १॥

### अनुवाद

श्रीमुकुन्द को नमस्कार करता हूँ। प्रेम का वर्णन करते हैं— सम्यगिति। वह भाव ही सान्द्रात्मा होकर प्रेम होता है। यहाँ पर सान्द्रात्मत्व स्वरूप लक्षण है। भाव अवस्था में चित्त की मसृणता होती है, तथा प्रेम अवस्था में चित्त सम्यक् रूप से मसृणित (स्निग्ध) होता है। भाव अवस्था में रुचि के द्वारा चित्त स्निग्ध होता है, तथा प्रेम अवस्था में ममत्व के द्वारा स्निग्ध होता है॥१॥

### भक्तिसार-प्रदर्शिनी

अथ भावमप्युक्त्वा प्रेमाणमाह— सम्यगिति। सम्यङ्मसृणितं भावस्य प्रथमदशापेक्षयाऽतिशयार्द्रं स्वान्तं चित्तं यस्मिन् तथाभूतो यः सान्द्रात्मा निबिड़स्वरूपः प्रथमदशापेक्षया परमानन्दोत्कर्षं प्राप्त इति यावत्। अतएव कृष्णेऽतिशयममत्वाङ्कितो भावः स एव प्रेमा निगद्यते।

अत्रेयमाशङ्का– ननु भाव एव चेदुपादानः सन् सांख्यमतानुसारेण प्रेमाणमुत्पाद्य स्वयं प्रेमात्मिको भवति, तदा तन्मते उपादान-कारणमेव पूर्वावस्थां परित्यज्य कार्यरूपेण परिणमति, न तु कारणातिरिक्तः स्वतन्त्रः कार्यपदार्थोऽस्ति। यथा गुड़ एव कमपि विकारं प्राप्य पूर्वरूपं परित्यज्य च खण्डो भवति, जाते च खण्डे तस्माद् गुडस्य पृथक् स्थितिर्नास्ति। एवं खण्ड एव सिता भवति, सिता एव सितोपला भवति, तत्र सितोपलादशायां गुड़खण्डसितानां पृथक्स्थितिर्नास्ति। तद्वदत्रापि भावः पूर्वावस्थां परित्यज्य प्रेमरूपो भवतु, एवं प्रेम्णः सकाशाद् भावस्य पृथक्स्थितिर्मास्तु, तथाग्रे वक्ष्यमाणं प्रेम्ण एव स्नेहरूपत्वमेवं स्नेहादीनां रागादिरूपत्वञ्च, तत्रापि स्नेहादिभ्यः सकाशात् प्रेमादिस्थायिभावानां पृथक् स्थितिर्मास्तु। एवं सति श्रीराधिकाप्रभृतिषु चरमस्थायिरूपमहाभाव एव तिष्ठतु, न तु रति-प्रेम-स्नेह-मान-रागानुरागादयः। मैवं– श्रीकृष्णस्य ह्लादिनीशक्तेः सारवृत्तिरूपाणां रतिप्रेमस्नेहादीनां श्रीकृष्णस्यैवाचिन्त्यशक्तित्वात् पूर्वावस्थामपरित्यज्यैव भावः प्रेमरूपो भवति। पूर्वावस्थाया अत्यागादेव प्रेम्णः सकाशाद् भावस्य पृथक् स्थितिरपि ज्ञेया। एवं रीत्या स्नेहादिभ्यः सकाशात् प्रेमादीनां पृथक् स्थितिरप्यूह्या। तत्र दृष्टान्तो यथा– श्रीकृष्णस्य बाल्यदेह एव कमपि माधुर्याद्युत्कर्षं प्राप्य बाल्यावस्था-परित्यागं विनैव पौगण्डदेहो भवति। एवं पौगण्डदेह एव पूर्वस्मादप्युत्कर्षविशेषं प्राप्य कैशोरदेहो भवति, न तु प्राकृतमनुष्यशरीरादिरिव बाल्यावस्थां परित्यज्य पौगण्डाद्यवस्थां प्राप्नोति। श्रीकृष्णस्य बाल्यपौगण्डकैशोराणामेवं बाल्याद्युचित-लीलानाञ्च सर्वेषां नित्यत्वात्। किन्तु पौगण्डस्य प्राकट्ये बाल्यदेहोऽत्रान्तर्धाय यत्र यत्र ब्रह्माण्डे प्रकटलीलायां बाल्यलीलाया आरम्भस्तत्रैव प्रकटीभवति। एवमस्यैव वृन्दावनस्याप्रकटप्रकाशे यत्र बाल्यलीलाया आरम्भस्तत्रापि बाल्यदेहस्य प्राकट्यं ज्ञेयम्। ब्रह्मण आगामिनि कल्पे वैवस्वतमन्वन्तरे पुनरप्यत्रैव वृन्दावनस्य प्रकटप्रकाशे बाल्यदेहः प्रकटीभविष्यतीति। यथा– एतद्द्वीपस्थः सूर्योऽत्रान्तर्द्धाय सन्ध्याकाले द्वीपान्तरं गच्छति, पुनरपि यामचतुष्टयानन्तरमेतद्द्वीपे प्रकटीभविष्यतीति। लीलानां बाल्याद्यवस्थानाञ्च नित्यत्वं श्रीभागवतटीकायां महानुभावैर्विस्तार्य लिखितम्। विशेषजिज्ञासा चेत्, सा टीका द्रष्टव्या। प्रकृते तु रतिप्रेमादिस्थायिभाववतां भक्तानां मध्ये यस्य भक्तस्य स्थायिभावादेः स्वस्वकारणं प्राप्योदयस्तदा तस्यैवाभिव्यक्तिरन्येषां तु भावानामनभिव्यक्तत्वेन तस्मिन्नेव भक्ते स्थितिर्ज्ञेया। यथा कामक्रोधादिमतां सांसारिकाणां कामादीनां मध्ये एकतरस्योदयकालेऽन्येषां संस्काररूपेण स्थितिस्तद्वदेवेति ज्ञेयम्॥१॥

## अनुवाद

भाव का वर्णन करने के पश्चात् प्रेम का वर्णन करते हैं– सम्यगिति श्लोक से। प्रेम की प्रथम अवस्था भाव की अपेक्षा चित्त जब अतिशय आर्द्र होता है, एवं निविड़ स्वरूप को प्राप्त करता है, प्रथम अवस्था से परमानन्द की उत्कर्ष अवस्था को प्राप्त करता है, तब भाव प्रेम नाम से प्रकाशित होता है।

अतएव श्रीकृष्ण में अतिशय ममत्व युक्त भाव ही प्रेम नाम से कहा जाता है।

यहाँ पर इस प्रकार आशङ्का है– भाव यदि उपादान कारण होकर, सांख्य मत के अनुसार प्रेम को उत्पन्न करके स्वयं प्रेमात्मक होता है, तब उस मत में उपादान कारण ही पूर्व अवस्था को छोड़कर

कार्य रूप में परिणत होता है, कारण के अतिरिक्त स्वतन्त्र कोई कार्य पदार्थ नहीं होता है। जिस प्रकार गुड़ विकार को प्राप्त कर पूर्व रूप को छोड़कर खण्ड (खाँड़) होता है, खण्ड उत्पन्न होने के बाद खाँड़ से गुड़ की अलग स्थिति नहीं रहती है। उसी प्रकार खण्ड ही सिता होता है, सिता ही सितोपला (मिश्री) होता है। यहाँ सितोपलावस्था में गुड़, खण्ड व सिता की पृथक स्थिति नहीं होती है। उसी प्रकार यहाँ भाव पूर्व अवस्था को छोड़कर प्रेम रूप हो जाय, इस प्रकार प्रेम के सामने भाव की पृथक् स्थिति नहीं होनी चाहिए। इसी प्रकार आगे कथित प्रेम ही स्नेह रूप है, स्नेह रागादि रूप है। वहाँ पर भी स्नेहादि के सामने प्रेमादि स्थायि भावों की पृथक् स्थिति नहीं होनी चाहिए। इस प्रकार होने पर श्रीराधिका आदि में चरम स्थायिरूप महाभाव ही रहना चाहिए। रति, प्रेम, स्नेह, मान, राग, अनुराग आदि की स्थिति नहीं होनी चाहिए।

इस प्रकार शङ्का करना ठीक नहीं है। श्रीकृष्ण की ह्लादिनी शक्ति की सारवृत्ति रूप रति, प्रेम, स्नेह आदि श्रीकृष्ण की ही अचिन्त्य शक्ति होने से पूर्व अवस्था को न छोड़कर ही भाव प्रेम रूप धारण करता है।

भाव की पूर्व अवस्था को न छोड़ ही प्रेम से पृथक् स्थिति को जानना चाहिये। इस प्रकार रीति द्वारा स्नेहादि से प्रेम आदि की पृथक् स्थिति को जान लेना चाहिये।

इस विषय में दृष्टान्त इस प्रकार है– श्रीकृष्ण का बाल्य देह ही कोई अनिर्वचनीय माधुर्यादि का उत्कर्ष प्राप्त कर बाल्यावस्था को न छोड़कर ही पौगण्ड देह होता है। एवं इस प्रकार पौगण्ड देह ही पहले से उत्कर्ष विशेष प्राप्त कर कैशोर देह होता है। प्राकृत मनुष्य के शरीरादि की भाँति बाल्यावस्था को परित्याग करके पौगण्डादि अवस्था को नहीं प्राप्त करता है। कारण– श्रीकृष्ण के बाल्य, पौगण्ड, कैशोर अवस्था एवं बाल्यादि लीला सभी नित्य हैं। किन्तु पौगण्ड प्रकट होने पर बाल्य देह को अन्तर्धान करके जिस-जिस ब्रह्माण्ड में प्रकट लीला में बाल्यलीला का आरम्भ होता है, वहाँ प्रकट हो जाते हैं। इस प्रकार इस वृन्दावन के अप्रकट प्रकाश में जहाँ पर बाल्य लीला का आरम्भ होता है, वहाँ पर बाल्य देह का प्राकट्य जानना होगा।

ब्रह्मा के आगामि कल्प में वैवस्वत मन्वन्तर में पुनः इसी वृन्दावन के प्रकट प्रकाश में बाल्य देह प्रकट होगा। यथा– इस द्वीप के सूर्य, अन्तर्धान होकर सायंकाल में द्वीपान्तर को चले जाते हैं, पुनर्वार चार प्रहर के बाद इस द्वीप में प्रकट होते हैं।

लीलाओं का एवं बाल्यादि अवस्थाओं का नित्यत्व श्रीभागवत की टीका में महानुभावगण विस्तारपूर्वक लिखे हैं। विशेष जानने की इच्छा होने पर वह टीका देखना आवश्यक है।

किन्तु इस स्थल में रति, प्रेमादि स्थायिभाव वाले भक्तों के मध्य में जिस भक्त का स्थायिभाव आदि का अपना-अपना कारण प्राप्त कर उदय होता है, उस समय उसी की अभिव्यक्ति होती है, दूसरे भाव अनभिव्यक्ति होकर उस भक्त में रहते हैं। जिस प्रकार काम क्रोधादि वाले सांसारिकों के कामादि के मध्य में एक के उदय के समय अन्य संस्कार रूप में रहते हैं, इस प्रकार ही जानना होगा॥ १॥

**यथा पञ्चरात्रे—**

**अनन्यममता विष्णौ ममता प्रेमसङ्गता।**
**भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः॥ इति।** (२)
**भक्तिः प्रेमोच्यते भीष्ममुखैर्यत्र तु सङ्गता।**
**ममताऽन्यममत्वेन वर्जितेत्यत्र योजना॥** (३)

## अनुवाद

श्रीनारद पञ्चरात्र में कहा गया है—

जिस भाव भक्ति में शरीर घट आदि में जो ममता है, उसको छोड़कर श्री विष्णु के विषय में ममता होती है उस भक्ति को भीष्म, प्रह्लाद, उद्धव, नारद आदि व्यक्तिगण प्रेम कहते हैं॥ २॥

अन्यत्र ममता वर्जित अथच श्रीविष्णु में सङ्गत जो ममता, उस स्वरूपा भाव भक्ति को ही भीष्म आदि ने प्रेम आख्या दी है। पूर्व श्लोक की इस प्रकार योजना करनी होगी॥ ३॥

## दुर्गमसङ्गमनी

अत्र स्वमतमुदाहरणम् 'एवं व्रत' (भा.११-२-४०, भ.र.सि. १-४-६) इत्यादि वक्ष्यमाणप्रकारमेव ज्ञेयम्। मतान्तरमपि योजनाऽन्तरेण सङ्गमयितुमाह—यथेति। भक्तिरत्र भावः।

## अनुवाद

हमारे मत में प्रेम का उदाहरण आगे (भा.११-२-४०, भ.र.सि. १-४-६) में दिया जाएगा। मतान्तर को भी अपने मत से सङ्गति करने के लिए कहते हैं— यथा इत्यादि।

यहाँ पर भक्ति शब्द का अर्थ है— भाव भक्ति॥ २॥

## अर्थरत्नाल्प-दीपिका

विष्णौ भक्तिः सान्द्रभाव-लक्षणा, यत्र भक्तौ। अनन्य ममतेति सम्यङ् मसृणितस्वान्तत्वम्॥२-३॥

## अनुवाद

'श्रीविष्णु भक्ति' कहने से यहाँ पर सान्द्रभाव लक्षणा भक्ति को समझना होगा। अनन्य ममता का अर्थ है— चित्त का सम्यक् रूप से मसृणित अर्थात् द्रवीभूत होना॥ २-३॥

## भक्तिसार-प्रदर्शिनी

नारदपञ्चरात्रपदस्य योजनामाह— भक्तिरिति। भक्तिरत्र भावः, देहगेहादिनिष्ठममत्वेन वर्जिता, अथ च विष्णौ सङ्गता या ममता, तद्रूपा भक्तिर्भीष्मप्रमुखैः प्रेम उच्यते इत्यर्थः॥ २-३॥

## अनुवाद

नारद पञ्चरात्र के वचन का प्रयोग दिखाते हैं भक्तिरिति कारिका के द्वारा। यहाँ पर भक्ति शब्द का अर्थ भाव भक्ति है। देह गेहादि निष्ठ ममत्व वर्जित अथच विष्णु में सङ्गता जो ममता, उस प्रकार की भक्ति को भीष्मादि प्रमुख व्यक्ति प्रेम कहते हैं, ऐसा जानना चाहिए॥ २-३॥

**भावोत्थोऽतिप्रसादोत्थः श्रीहरेरिति स द्विधा॥　　(४)**

### अनुवाद

वह प्रेम भाव से उदित तथा श्रीहरि के अति प्रसाद से उदित भेद से द्विविध है॥ ४॥

**तत्र भावोत्थः—**

**भाव एवान्तरङ्गाणामङ्गानामनुसेवया।**
**आरूढः परमोत्कर्षं भावोत्थः परिकीर्त्तितः॥　　(५)**

### अनुवाद

भावोत्थ (भाव से उदित) प्रेम का वर्णन करते हैं—

भाव के अनुभाव रूप श्रवण कीर्त्तनादि अन्तरङ्ग अङ्ग समूह की निरन्तर सेवा के द्वारा भाव के परमोत्कर्ष प्राप्त होने पर उसको भावोत्थ प्रेम कहा जाता है॥ ५॥

### भक्तिसार-प्रदर्शिनी

भाव इति भावस्यानुभावरूपश्रवणकीर्त्तनाद्यन्तरङ्गाणामङ्गानामनुसेवया परमोत्कर्षमारूढ़ा रतिः एव भावोत्थः प्रेमा परिकीर्त्तितः॥ ५॥

### अनुवाद

भाव भक्ति के अनुभाव रूप श्रवण कीर्त्तन आदि अन्तरङ्ग अङ्गों की सेवा से परम उत्कर्ष प्राप्त कर रति ही भावोत्थ प्रेम नाम से जानी जाती है॥ ५॥

**तत्र वैधभावोत्थो, यथैकादशे (११-२-४०)—**

**एवंव्रतः स्वप्रियनामकीर्त्या, जातानुरागो द्रुतचित्त उच्चैः।**
**हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः॥　　(६)**

### अनुवाद

अनन्तर वैध भावोत्थ प्रेम का उदाहरण प्रस्तुत करते हैं— भा. ११-२-४०—

निज प्रियतम श्रीहरि के नाम कीर्त्तन करते करते प्रेमोत्पत्ति हेतु द्रवित हृदय होकर उन्मादवत् कभी उच्चैः स्वर से हास्य, रोदन, प्रेमोद्गारशब्द करते हैं; एवं लोक लज्जा त्यागकर नृत्य करने लगते हैं॥ 6॥

### दुर्गमसङ्गमनी

वैध्या निर्वृत्तो वैधः, स चासौ भावश्चेति तदुत्थः। अत्रैवम्व्रत इति वैधीसम्बन्धात्तन्निर्वृत्तत्वं, प्रियेति भावोत्थत्वं, स्वेति ममतायुक्तत्वं, जातानुराग इति तदतिशयित्वञ्च ज्ञेयम्॥ ६॥

### अनुवाद

वैधी के द्वारा उत्पन्न वैध कहलाता है। वैधी भक्ति के द्वारा वैध भाव होता है। वैध भाव से वैधी प्रेम उत्पन्न होता है।

एवम्व्रत इस पद्य के द्वारा वैधी सम्बन्ध से फल दिखाया गया है। भाव से उत्पन्न प्रेम सम्बन्ध का सूचक सम्बोधन– प्रिय, तथा स्वप्रिय नाम कीर्त्तन के द्वारा प्रभु के साथ ममतायुक्त सम्बन्ध सूचित हुआ है। 'जातानुराग' अतिशय ममत्व का सूचक शब्द है॥ ६॥

## अर्थरत्नाल्प-दीपिका

वैध्या निर्वृत्तो वैधः, स चासौ भावश्चेति तदुत्थः। अत्रैवंव्रत इति वैधभावत्वम्। स्वप्रियनामेति अन्तरङ्गाङ्गासुसेवनं, जातानुराग इति भावोत्कर्षप्राप्त्या प्रेम्णो भावोत्थत्वम्। उच्चैर्द्रुतचित्तत्वं सम्यङ् मसृणितस्वान्तत्वम्। हसतीत्यादि ममतातिशयाङ्कितत्वम्॥ ६॥

## अनुवाद

वैधी के द्वारा उत्पन्न वैध कहलाता है । वैधी भक्ति के द्वारा वैध भाव होता है। वैध भाव से वैधी प्रेम उत्पन्न होता है।

एवंव्रत शब्द से वैधी भाव सूचित हुआ है। स्व प्रियनाम कीर्त्तन शब्द से भक्ति के अन्तरङ्ग अङ्गों का सेवन सूचित हुआ है। जातानुराग शब्द से भाव के उत्कर्ष अवस्था प्राप्त होने पर प्रेम का भावोत्थ होना सूचित हुआ है। उच्चैर्द्रुतचित्त द्वारा सम्यक् रूप से स्निग्ध अन्तःकरण लक्षित हुआ है। एवं हसति इत्यादि के द्वारा अतिशय ममता लक्षित हुआ है॥ ६॥

## भक्तिसार-प्रदर्शिनी

एवंव्रत इति। एवं पूर्ववचनोक्तप्रकारेण साधने व्रत इत्यर्थः। अनेन वैधीसम्बन्धाद् वैधीनिष्पाद्यत्वमस्योक्तम्। प्रियनामकीर्त्येत्यत्र कृष्णस्य प्रियत्वकथनेन तन्नामकीर्त्तनस्य भावोत्थत्वमुक्तम्। स्वेति– प्रियनिष्ठस्वीयत्वकथनेन ममतायुक्तत्वमुक्तम्। जातानुराग इति ममत्वस्यातिशयित्वमुक्तम्। रौति रोदनातिरिक्तोच्च शब्दं करोति। लोकवाह्यः लोकातीतः॥६॥

## अनुवाद

एवंव्रत शब्द से पूर्व बचनोक्त जो साधन समूह हैं, उनका व्रत। इनका वैधी भक्ति से सम्बन्धित होने से इनसे जो उत्पन्न भाव है, वह वैधी भक्ति से निष्पन्न भाव है। 'प्रियनामकीर्त्या' इसमें कृष्ण के प्रियत्व कथन के द्वारा उनके नाम का कीर्त्तन भाव से उत्थित है। प्रिय श्रीकृष्णनिष्ठ स्वीयत्व कथन से ममतायुक्तत्व सूचित हुआ है। जातानुरागः शब्द से हृदय में अतिशय ममत्व की सूचना हुयी है। रौति शब्द से– रोदन के अतिरिक्त अन्य उच्च शब्द करता है। लोकबाह्यः अर्थात् लोकातीत॥ ६॥

**रागानुगीयभावोत्थो, यथा पाद्मे–**

**न पतिं कामयेत् कञ्चिद् ब्रह्मचर्य्यस्थिता सदा।**
**तामेव मूर्त्तिं ध्यायन्ती चन्द्रकान्तिर्वरानना॥ (७)**
**श्रीकृष्णगाथां गायन्ती रोमाञ्चोद्भेदलक्षणा।**
**अस्मिन्मन्वन्तरे स्निग्धा श्रीकृष्णप्रियवार्त्तया॥ (८)**

## अनुवाद

रागानुगीय भावोत्थ प्रेम का वर्णन पद्म पुराण के अनुसार करते हैं—

वरानना चन्द्रकान्ति अन्य पति की कामना न करके सदा ब्रह्मचर्य का पालन करने लगीं। वह निरन्तर श्रीकृष्ण की मूर्त्ति का ध्यान करती रहती थीं। रोमाञ्च के साथ श्रीकृष्ण के गाथा का गायन करती थीं। इस प्रकार वह इसी मन्वन्तर में श्रीकृष्ण की प्रिय वार्त्ता से स्नेहवती हो गयीं॥ ७-८॥

## दुर्गमसङ्गमनी

तामेव मूर्त्तिं ध्यायन्तीति तस्यां मूर्त्तौ पूर्वं भावो जात आसीदिति सूचितं, कञ्चिदन्यं पतिं न कामयेन्न कामयेतेति गाढममतया प्रेम दर्शितं; स्निग्धा बभूवेति शेषः॥ ७-८॥

## अनुवाद

उस मूर्त्ती की ही ध्यान करती रहीं, अर्थात् उसी मूर्त्ति में पहले भाव उत्पन्न हुआ था। किसी अन्य पति की कामना उसने नहीं की, इसके द्वारा गाढ़ ममता के कारण प्रेम दिखाया गया है। वह श्रीकृष्ण की प्रिय वार्त्ता से स्नेहवती हो गयी थीं॥ ७-८॥

## अर्थरत्नाल्प-दीपिका

न पतिं कामयेत् ब्रह्मचर्य्यस्थिता सदेति— इन्द्रियार्थाणां स्वयमरोचकत्वेन भावस्य सूचनम्। तस्य रागानुगीयत्वं मूर्त्तिदर्शनजातत्वात्; मूर्त्तिं ध्यायन्तीति श्रीकृष्णगाथां गायन्तीति चान्तरङ्गानुसेवनम्। पूर्व्वं यत्र जातो भावस्तामेवेत्यनेन ममत्वातिशयाङ्कितत्वम्। रोमञ्चोद्भेदलक्षणेति, सम्यङ् मसृणितस्वान्तत्वं श्रीकृष्णप्रियवार्त्तया स्निग्धा प्रेमवती बभूवेत्यर्थः॥ ७-८॥

## अनुवाद

किसी अन्य पति की कामना नहीं की व ब्रह्मचर्य व्रत में सदा स्थित थी— इससे ज्ञापित हुआ है कि अर्थों के प्रति इन्द्रियों की स्वयमरोचकता होने के कारण भाव का प्रकाश हुआ। उसका रागानुगीयत्व श्रीमूर्त्ति दर्शन से हुआ है।

भक्ति के अन्तरङ्ग अङ्गों के साधनों का अनुसेवन है— श्रीमूर्त्ति का ध्यान, एवं श्रीकृष्ण गाथा का गान करना। पहले भाव उत्पन्न हुआ, फिर उससे चित्त अतिशय ममत्व युक्त हुआ। रोमाञ्च होने लगा, इससे सम्यक् मसृणित स्वान्त होकर श्रीकृष्ण की प्रिय वार्त्ता से स्निग्धा अर्थात् प्रेमवती हो गयीं॥ ७-८॥

## भक्तिसार-प्रदर्शिनी

तामेव मूर्त्तिं ध्यायन्तीत्यनेन तस्यां मूर्त्तौ पूर्वं भावो जात आसीदिति सूचितम्। कञ्चिदन्यं पतिं न कामयेन्न कामयेतेति गाढममतया प्रेम दर्शितम्। रोमाञ्चस्योद्भेदः अतिशय इत्यर्थः स एव लक्षणं चिह्नं यस्याः। स्निग्धा स्नेहवती बभूवेति शेषः॥ ७-८॥

## अनुवाद

'उस मूर्ति का ही ध्यान करती रही'— इससे सूचित होता है कि उस मूर्ति में पहले भाव उत्पन्न

हुआ था। 'किसी अन्य पति की कामना नहीं की'— इससे गाढ़ ममता द्वारा प्रेम प्रदर्शित हुआ है। रोमाञ्चस्योद्‌भेदः अर्थात् अतिशय रोमाञ्च हुआ था। यही उसका लक्षण था। स्निग्धा यानि वह स्नेहवती हुयी थी॥ ७-८॥

**अथ हरेरतिप्रसादोत्थः—**

**हरेरतिप्रसादोऽयं सङ्गदानादिरात्मनः॥ (९)**

**अनुवाद**

श्रीहरि के अति प्रसादोत्थ प्रेम का लक्षण करते हैं—
स्व सङ्ग दानादि ही श्रीहरि के अति प्रसाद हैं॥ ९॥

**दुर्गमसङ्गमनी**

सङ्गदानमादिर्यस्य सः।

**अनुवाद**

सङ्ग दान आदि में है जिसके वह॥ ९॥

**अर्थरत्नाल्प-दीपिका**

सङ्गदानमादिर्यस्य सः॥ ९॥

**अनुवाद**

सङ्ग दान आदि में है जिसके वह॥ ९॥

**भक्तिसार-प्रदर्शिनी**

हरेरिति— आत्मनः सङ्गदानादिरेव हरेरतिप्रसादस्य कार्यत्वात् अतिप्रसाद उच्यते॥ ९॥

**अनुवाद**

निज सङ्ग दान करना आदि श्रीहरि की अति प्रसन्नता का कार्य होने के कारण जो प्रेम उत्पन्न होता है, उसको श्रीहरि के अति प्रसाद से उत्पन्न प्रेम कहते हैं॥ ९॥

**यथैकादशे (११-१२-७)—**

**ते नाधीतश्रुतिगणा नोपासितमहत्तमाः।**
**अव्रतातप्ततपसः मत्सङ्गान्मामुपागताः॥ इति। (१०)**

**अनुवाद**

जैसाकि एकादश स्कन्ध (भा. ११-१२-७) में कहा गया है—

उन लोकों ने न तो वेदों का अध्ययन किया था और न विधिपूर्वक महापुरुषों की उपासना की

थी। इसी प्रकार उन्होंने कृच्छ्र चान्द्रायण आदि व्रत और कोई तपस्या भी नहीं की थी केवल मेरे सङ्ग के प्रभाव से वे मुझे प्राप्त किये॥ १०॥

### दुर्गमसङ्गमनी

त इति। पूर्वोक्तेषु ते केचिद्बलिप्रभृतयः। ते च मत्प्राप्त्यर्थं न अधीताः श्रुतिगणा यैः; तथा अध्ययनार्थं नोपासिता महत्तमास्तत्पारगा यैः। मत्सङ्गादिति— तेषां सतां मध्ये प्रधानस्य मम सङ्गात्प्रेमाणं प्राप्य मामुपागता इत्यर्थः। किन्तु श्रीभगवतः स्वतन्त्रत्वेऽपि सतां मध्ये स्वयं गणनं विनयस्वभावादेव कृतमिति श्रीभगवत् प्रसादोत्थ एवायं ज्ञेयः॥ १०॥

### अनुवाद

पूर्वोक्त बलि महाराज प्रभृति मेरे सङ्ग से ही मुझको प्राप्त किये। मुझको प्राप्त करने के लिये उन्होंने वेद का अध्ययन नहीं किया, अध्ययन करने के लिए वेद पारग व्यक्तियों की उपासना नहीं की, केवल मेरे सङ्ग से ही मुझको प्राप्त किया।

उन सज्जनगणों के मध्य में प्रधान मेरे सङ्ग से प्रेम प्राप्त कर मुझको प्राप्त किये। किन्तु श्रीभगवान् के स्वतन्त्र होने पर भी सज्जन गणों के मध्य में अपनी गणना करना विनय स्वभाव के कारण हुआ है, इसलिए श्रीभगवत् प्रसाद से उत्थित यह प्रेम है, इस प्रकार जानना होगा॥ १०॥

### अर्थरत्नाल्प-दीपिका

ते वृषपर्वादियज्ञपत्न्यस्ता मत्सङ्गात् प्रेमाणं प्राप्य मामुपागता इत्यर्थः। पूर्व्वोक्ता त्वाष्ट्रकायाधवादयस्तु मत्सङ्गादेव॥ १०॥

### अनुवाद

वृषपर्वा आदि एवं यज्ञपत्नि आदि मेरे सङ्ग से प्रेम को प्राप्त कर मुझको प्राप्त किये। पूर्वोक्त त्वाष्ट्र, कायाधू आदि मेरे सङ्ग से ही प्रेम प्राप्त कर मुझको प्राप्त किये॥ १०॥

### भक्तिसार-प्रदर्शिनी

ते नेति— पूर्वोक्तेषु मध्ये केचिद् बलिप्रभृतय इत्यर्थः। ते च मत्प्राप्त्यर्थं नाधीताः श्रुतिगणा यैः; तथा अध्ययनार्थं नोपासिता महत्तमा वेदपारगा यैः। मत्सङ्गादिति— तेषां सतां मध्ये प्रधानस्य मम सङ्गात्प्रेमाणं प्राप्य मामुपागता इत्यर्थः। किन्तु भगवतः स्वतन्त्रत्वेऽपि सतां मध्ये स्वयं गणनं विनयस्वभावादेव कृतमिति श्रीभगवत्-प्रसादोत्थ एवायं ज्ञेयः॥ १०॥

### अनुवाद

पहले कहे गये विवरण के मध्य में बलि प्रभृति ने मेरे सङ्ग से ही प्रेम प्राप्त कर मुझको प्राप्त किया। उन्होंने मुझको प्राप्त करने के लिए वेद अध्ययन नहीं किया, एवं वेद पारग व्यक्तियों की उपासना भी नहीं की।

उन सज्जनगणों के मध्य में प्रधान, मेरे सङ्ग से प्रेम प्राप्तकर मुझको प्राप्त कर लिया। किन्तु

भगवान् के स्वतन्त्र होने पर भी सज्जन गणों के मध्य में अपनी गणना करना भगवान् के विनय स्वभाव से ही हुआ है, इसलिए श्रीभगवत् प्रसाद से उत्थित यह प्रेम है, इस प्रकार जानना होगा॥ १०॥

**माहात्म्यज्ञानयुक्तश्च केवलश्चेति स द्विधा॥ (११)**

### अनुवाद

वह प्रेम माहात्म्यज्ञानयुक्त एवं केवलमाधुर्यज्ञानयुक्त दो प्रकार का होता है॥ ११॥

### दुर्गमसङ्गमनी

पुनश्च तस्यैव प्रेम्णो भेदद्वयमाह— माहात्म्येति। केवलो माधुर्य्यमात्रज्ञानयुक्त इत्यर्थः॥ ११॥

### अनुवाद

पुनर्वार उस प्रेम के भेदद्वय को माहात्म्येति श्लोक द्वारा कहते हैं। केवल शब्द का अर्थ है— माधुर्यमात्रज्ञानयुक्त॥ ११॥

### अर्थरत्नाल्प-दीपिका

रूपगुणलीलादीनां माधुर्य्यमात्रानुभवहेतुत्वं केवलत्वम्॥ ११॥

### अनुवाद

रूप, गुण, लीला आदि के माधुर्य मात्र अनुभव का कारण केवलत्व है॥ ११॥

### भक्तिसार-प्रदर्शिनी

पुनश्च तस्यैव प्रेम्णो भेदद्वयमाह— माहात्म्येति। केवलो माधुर्य्यमात्रज्ञानयुक्त इत्यर्थः॥ ११॥

### अनुवाद

पुनर्वार उस प्रेम के भेदद्वय को माहात्म्येति श्लोक द्वारा कहते हैं। केवल शब्द का अर्थ है— माधुर्यमात्रज्ञानयुक्त॥ ११॥

**तत्राद्यो, यथा पञ्चरात्रे—**

**माहात्म्यज्ञानयुक्तस्तु सुदृढः सर्वतोऽधिकः।**
**स्नेहो भक्तिरिति प्रोक्तस्तया साष्ट्यादिर्नान्यथा॥ (१२)**

### अनुवाद

माहात्म्यज्ञान युक्त प्रेम का वर्णन पञ्चरात्र में इस प्रकार है—

माहात्म्य ज्ञान युक्त (ईश्वर ज्ञान युक्त) अथच सुदृढ़ ममता युक्त, समस्त श्रेय विषय से अधिक जो स्नेह, उसको भक्ति कहते हैं। इसी भक्ति से सार्ष्टि आदि मुक्ति होती है, अन्यथा नहीं॥ १२॥

### दुर्गमसङ्गमनी

अत्र पाञ्चरात्रिकपद्यद्वयमाह। माहात्म्यज्ञानसद्भावांश एव, न तु लक्षणांशे॥ १२॥

### अनुवाद

उदाहरण के लिए पाञ्चरात्रिक ग्रन्थ के पद्य द्वय को कहते हैं। माहात्म्य ज्ञान सद्भाव अंश में ही उद्धृत किये हैं, लक्षण अंश में नहीं॥ १२॥

### अर्थरत्नाल्प-दीपिका

स्नेहः सान्द्रात्मा भावः, भक्तिः प्रेमरूपा; सुदृढ़ इति ममतया बद्धमूलः, सर्व्वतोधिकश्चित्तस्य सम्यङ् मासृण्यहेतुत्वात् सर्व्वश्रेयोभ्यः श्रेष्ठः। तया प्रेमस्वरूपया भक्त्या। सार्ष्ट्यादिचतुर्धा प्रेमसेवोत्तरा मुक्तिः। नान्यथा सुखैश्वर्य्योत्तरा सा न॥ १२॥

### अनुवाद

स्नेह शब्द का अर्थ है, निविड़ भाव। यहाँ भक्ति शब्द का अभिप्राय प्रेमरूपाभक्ति से है। सुदृढ़ अर्थात् ममता के द्वारा बद्धमूल। सर्व्वतोधिकः अर्थात् चित्त का सम्यक् मसृण होने के कारण समस्त मङ्गलों से भी श्रेष्ठ है। तया अर्थात् उस प्रेमरूपा भक्ति से ही सार्ष्टि, सालोक्य, सारूप्य और सामीप्य ये चार प्रेम सेवोत्तरा मुक्ति होती है। नान्यथा अर्थात् सुखैश्वर्योत्तरा से नहीं होती है॥ १२॥

### भक्तिसार-प्रदर्शिनी

अत्र पाञ्चरात्रिकपद्यद्वयमाह। माहात्म्यज्ञानसद्भावांशे एव ज्ञेयम्। माहात्म्यज्ञानञ्च ईश्वरोऽयमिति ज्ञानजन्यः सख्यादिभावसङ्कोचक-संभ्रमविशेषः। अतएव रागानुगानामैश्वर्यज्ञानसत्वेऽपि तन्न सख्यादिभाव-सङ्कोचकमिति ज्ञेयम्। माहात्म्यज्ञानयुक्तोऽथच सर्वतोऽधिकस्नेहो भक्तिरुच्यते, तया भक्त्या॥ १२॥

### अनुवाद

उदाहरण के लिए पाञ्चरात्रिक ग्रन्थ के पद्य द्वय को कहते हैं। माहात्म्य ज्ञान सद्भाव अंश में जानना चाहिये।

'यह ईश्वर हैं', इस ज्ञान से जन्य सख्यादि भाव का सङ्कोचक सम्भ्रमविशेष को माहात्म्य ज्ञान कहते हैं। अतएव रागानुगा में ऐश्वर्य ज्ञान रहने पर भी उससे सख्यादि भाव का सङ्कोच नहीं होता है, ऐसा जानना है।

माहात्म्य ज्ञानयुक्त अथच सबसे अधिक स्नेह को भक्ति कहते हैं, उस भक्ति के द्वारा चार प्रकार की मुक्ति होती है॥ १२॥

**केवलो, यथा तत्रैव—**

**मनोगतिरविच्छिन्ना हरौ प्रेमपरिप्लुता।**
**अभिसन्धिविनिर्मुक्ता भक्तिर्विष्णुवशङ्करी॥ इति।**　　(१३)

### अनुवाद

केवल प्रेम का वर्णन नारद पञ्चरात्र में इस प्रकार है—

हरि में अभिसन्धान रहित एवं प्रेम परिपूर्ण जो निरवच्छिन्न मनोगति है, उसको भक्ति कहते हैं। यह श्रीविष्णु को वश में करती है॥ १३॥

### अर्थरत्नाल्प-दीपिका

भक्तिः सान्द्रात्मभावः, विष्णुवशङ्करीति प्रेम, हरौ मनोगतिरविच्छिन्नेति ममतातिशयाङ्कितत्वम्। प्रेमपरिप्लुतेति— सम्यङ्मसृणितस्वान्तत्वम्। अभिसन्धिरैश्वर्य्यानुसन्धानं तेन विमुक्तेति केवलत्वम्॥ १३॥

### अनुवाद

भक्ति शब्द से निबिड़ भाव को कहते हैं। विष्णुवशङ्करी से प्रेम को कहते हैं। हरि में अविच्छिन्न मनोगति से अतिशय ममत्व को जानना है। प्रेमपरिप्लुत शब्द से सम्यक् रूप से आर्द्रचित्त जानना है। अभिसन्धि अर्थात् ऐश्वर्य्यानुसन्धान, इससे विमुक्त अर्थात् केवल प्रेम॥ १३॥

### भक्तिसार-प्रदर्शिनी

तत्र नारद पञ्चरात्रे— हरौ अविच्छिन्ना मनोगतिरूपा या भक्तिः, सा विष्णुवशङ्करीत्यर्थः। अभिसन्धिविनिर्मुक्ता फलाभिसन्धिरहिता॥ १३॥

### अनुवाद

तत्र शब्द का अर्थ है— नारदपञ्चरात्र। जो भक्ति हरि में अविच्छिन्न मनोगति रूपा है वह श्रीविष्णु को वश में करती है। अभिसन्धिविनिर्मुक्त का अर्थ है किसी भी फल की इच्छा न होना।

**महिमज्ञानयुक्तः स्याद्विधिमार्गानुसारिणाम्।**
**रागानुगाश्रितानान्तु प्रायशः केवलो भवेत्॥ (१४)**

### अनुवाद

विधि मार्ग के भक्तवृन्द का प्रेम माहात्म्य ज्ञान युक्त होता है। और राग मार्ग के भक्तगणों प्रेम प्रायकर केवल माधुर्य ज्ञान युक्त होता है॥ १४॥

### दुर्गमसङ्गमनी

प्रायश इति। वैध्यंशयुक्तत्वेऽपि न केवलः स्यादित्यर्थः॥ १४॥

### अनुवाद

प्रायशः कहने का अभिप्राय यह है कि वैधी अंश युक्त होने पर वह केवल नहीं होती है॥ १४॥

### अर्थरत्नाल्प-दीपिका

वेदर्चानां गोपीत्वप्राप्तौ महिमज्ञानस्यापि श्रवणं प्रायश इत्युक्तम्॥ १४॥

### अनुवाद

वेद की ऋचाओं ने गोपी स्वरूप को प्राप्त किया ऐसा महिमज्ञान का वर्णन होने से प्रायशः शब्द का प्रयोग किया गया है॥ १४॥

### भक्तिसार-प्रदर्शिनी

प्रायश इति रागानुगतस्यैवार्चनभक्तौ कदाचिद् वैधभक्त्युदितरुक्मिण्यादिसाहित्येन भावनायुक्तत्वे सति न केवलः स्यादित्यर्थः॥ १४॥

### अनुवाद

प्रायशः शब्द का अभिप्राय है— रागानुगीय अर्चन पद्धति में भक्त यदि वैधी भक्ति से उदित रुक्मिणी आदि के सहित भावना करके अर्चन करता है, तो वह भक्ति केवला नहीं होगी॥ १४॥

**आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया।**
**ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचिस्ततः॥ (१५)**
**अथासक्तिस्ततो भावस्ततः प्रेमाभ्युदञ्चति।**
**साधकानामयं प्रेम्णः प्रादुर्भावे भवेत् क्रमः॥ (१६)**

### अनुवाद

पहले श्रद्धा होती है। उसके बाद साधु सङ्ग होता है। इसके अनन्तर भजन क्रिया होती है। इससे अनर्थ निवृत्ति होती है। अनन्तर निष्ठा, फिर रुचि होती है। इसके बाद आसक्ति, फिर इससे भाव होता है। भावोदय के बाद प्रेम उदित होता है। साधकों में प्रेमोदय होने का यह क्रम है॥ १५-१६॥

### दुर्गमसङ्गमनी

तत्र बहुष्वपि क्रमेषु सत्सु प्रायिकमेकं क्रममाह— आदावितिद्वयेन। आदौ प्रथमे साधुसङ्गशास्त्रश्रवणद्वारा श्रद्धा तदर्थविश्वासः। ततः प्रथमानन्तरं द्वितीयः साधुसङ्गो भजनरीतिशिक्षानिबन्धनः। निष्ठा तत्राविक्षेपेण सातत्यम्। रुचिरभिलाषः, किन्तु बुद्धिपूर्विकेयम्, आसक्तिस्तु स्वारसिकी॥१५-१६॥

### अनुवाद

भक्ति में प्रेमोदय होने के लिए अनेक क्रम वर्त्तमान होने पर भी प्रसिद्ध एक क्रम का वर्णन आदौ श्रद्धा इत्यादि दो श्लोकों के द्वारा करते हैं।

आदौ अर्थात् प्रथम साधु सङ्ग में शास्त्र श्रवण के द्वारा श्रद्धा अर्थात् शास्त्रों में वर्णित विषयों में (शास्त्रों के अर्थ में) सुदृढ़ विश्वास होता है। इसके बाद भजनरीति शिक्षा के लिए द्वितीय साधुसङ्ग होता है। निष्ठा का अर्थ है— भजन में विक्षेप रहित सातत्य। रुचि का अर्थ है— अभिलाष, यह बुद्धि पूर्वक होता है; किन्तु आसक्ति स्वारसिकी अर्थात् स्वाभाविकी होती है॥ १५-१६॥

### अर्थरत्नाल्प-दीपिका

आदौ प्रथमं केनापि भाग्योदयेन श्रीकृष्णस्य भक्तौ श्रद्धा। साधुसङ्ग उद्यमेन साधुभिर्मिलनम्। भजनक्रिया भजनस्य कारणम्। अनर्थस्य अप्रारब्ध-प्रारब्धरूपस्य पापस्य निवृत्तिर्नाशः। निष्ठा आग्रहेण पुनः पुनर्भजनकारणम्। रुचिः पापबीजनाशाद् भक्तौ माधुर्य्यानुभवः। आसक्तिरविद्यानिवृत्तेर्हरौ मनोभिनिवेशः॥ १५-१६॥

### अनुवाद

आदौ अर्थात् प्रथम किसी भाग्य के उदय होने से श्रीकृष्ण की भक्ति में श्रद्धा होती है। साधुसङ्ग अर्थात् उद्यमपूर्वक साधुजन के साथ मिलन। भजनक्रिया अर्थात् भजन का कारण। अनर्थ निवृत्ति अर्थात् अप्रारब्ध-प्रारब्धरूप पाप का नाश। निष्ठा आग्रह पूर्वक पुनः-पुनः भजन का कारण है। रुचि पापबीजनाश के बाद भक्ति के माधुर्य्य का अनुभव होना है। आसक्ति अविद्यानिवृत्ति होकर हरि में मनोभिनिवेश का होना है॥ १५-१६॥

### भक्तिसार-प्रदर्शिनी

अत्र बहुष्वपि क्रमेषु सत्सु प्रायिकमेकं क्रममाह— आदावितिद्वयेन। आदौ प्रथमे साधुसङ्गे शास्त्रश्रवणद्वारा श्रद्धा तदर्थविश्वासः। ततः श्रद्धानन्तरं द्वितीयः साधुसङ्गः भजनरीतिशिक्षार्थम्। निष्ठा भजने अविक्षेपेण सातत्यम्। रुचिरभिलाषः, किन्तु बुद्धिपूर्विकेयम्। आसक्तिस्तु स्वारसिकी स्वाभाविकीत्यर्थः। एतेन निष्ठासक्त्योर्भेदो ज्ञेयः॥ १५-१६॥

### अनुवाद

भक्ति में प्रेमोदय होने के लिए अनेक क्रम वर्त्तमान होने पर भी प्रसिद्ध एक क्रम का वर्णन आदौ श्रद्धा इत्यादि दो श्लोकों के द्वारा करते हैं।

आदौ अर्थात् प्रथम साधु सङ्ग में शास्त्र श्रवण के द्वारा श्रद्धा अर्थात् शास्त्रों में वर्णित विषयों में (शास्त्रों के अर्थ में) विश्वास होता है। इसके बाद भजनरीति शिक्षा के लिए द्वितीय साधुसङ्ग होता है। निष्ठा का अर्थ है— भजन में विक्षेप रहित सातत्य। रुचि का अर्थ है— अभिलाष, किन्तु यह बुद्धि पूर्वक होता है। लेकिन आसक्ति स्वारसिकी अर्थात् स्वाभाविकी होती है। इससे निष्ठा और आसक्ति के भेद का ज्ञान होता है॥ १५-१६॥

**धन्यस्यायं नवः प्रेमा यस्योन्मीलति चेतसि।**
**अन्तर्वाणिभिरप्यस्य मुद्रा सुष्ठु सुदुर्गमा ॥ (१७)**

### अनुवाद

जिस धन्य व्यक्ति के चित्त में यह नवीन प्रेम प्रकाशित होता है, उनकी मुद्रा अर्थात् भावपरिपाटी का ज्ञान शास्त्रज्ञ व्यक्तियों के लिए भी अति सुदुर्गम होता है॥ १७॥

### दुर्गमसङ्गमनी

अन्तर्वाणिभिः शास्त्रविद्भिः। मुद्रा परिपाटी॥ १७॥

### अनुवाद

अन्तर्वाणिभिः अर्थात् शास्त्रों को जानने वालों के लिए। मुद्रा का अर्थ है— परिपाटी॥ १७॥

### अर्थरत्नाल्प-दीपिका

अन्तर्वाणिभिः शास्त्रज्ञैः, मुद्रा ज्ञानप्रकारः॥ १७॥

### अनुवाद

अन्तर्वाणिभिः अर्थात् शास्त्रों को जानने वालों के लिए। मुद्रा यानि ज्ञान का प्रकार॥ १७॥।

### भक्तिसार-प्रदर्शिनी

यस्य धन्यस्य अयं नवप्रेमा चेतसि उन्मीलति। अन्तर्वाणिभिः शास्त्रविद्भिरपि अस्य भक्तस्य मुद्रा परिपाटी सुदुर्गमा॥१७॥

### अनुवाद

जिस धन्य व्यक्ति के चित्त में यह नवीन प्रेम उदित होता है। अन्तर्वाणिभिः यानि शास्त्रज्ञ व्यक्तिगण के लिए भी इस भक्त की मुद्रा परिपाटी सुदुर्गम है॥ १७॥

**अतएव श्रीनारदपञ्चरात्रे यथा—**

**भावोन्मत्तो हरेः किञ्चिन्न वेद सुखमात्मनः।**
**दुःखञ्चेति महेशानि! परमानन्दमाप्लुतः॥** (१८)

### अनुवाद

अतएव श्रीनारदपञ्चरात्र में कथित है—

हे पार्वति! श्रीहरि के भाव में उन्मत्त व्यक्ति परमानन्द में निमग्न होकर आत्म विषयक सुख दुःख का कुछ भी अनुभव नहीं करते हैं॥१८॥

### दुर्गमसङ्गमनी

सुदुर्गमत्वमेव दर्शयति— अतएवेति। अयं भावः— शास्त्रविद्भिर्हि सुखप्राप्तिदुःखहानी एव पुरुषार्थत्वेन निर्णीते। ते च तादृशभक्तानां बहिरेव तैर्ज्ञायेते, नान्तः; तेषामन्तस्तु सुखदुःखे भगवत्प्राप्त्यप्राप्तिकृते एव। यथोक्तं (भा. ३-१५-४८) "नात्यन्तिकं विगणयन्त्यपि ते प्रसादमि" त्यादि। (भा. ३-१५-४९) 'कामं भवः स्ववृजिनैर्निरयेषु नस्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेते'त्यादि च॥ १८॥

### अनुवाद

सुदुर्गमत्व के प्रदर्शन के लिए कहते हैं— अतएव इत्यादि। कहने का अभिप्राय यह है कि शास्त्रज्ञगण सुख प्राप्ति और दुःख निवृत्ति को ही पुरुषार्थ के रूप में निर्णय करते हैं। वे प्रेमी भक्त के केवल बाह्य सुख-दुःख को ही जान पाते हैं, आन्तरिक अवस्था को नहीं। इसका कारण है कि उनका

आन्तरिक सुख-दुःख भगवत्प्राप्ति एवं अप्राप्ति कृत होता है। जैसाकि भा. ३-१५-४८ व ४९ में इस प्रकार कहा गया है—

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पित भयं भ्रुव उन्नयैस्ते।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्त्तन्यतीर्थ यशसः कुशला रसज्ञाः॥
कामं भवः स्ववृजिनैर्निरयेषु नः स्ता
च्चेतोऽलिवद्यति न तु पदयो रमेत।
वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः
पूर्य्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥

प्रभो! आपका सुयश अत्यन्त कीर्त्तनीय और सांसारिक दुःखों की निवृत्ति करने वाला है। आपके चरणों की शरण में रहने वाले जो महाभाग आपकी कथाओं के रसिक हैं, वे आपके आत्यन्तिक प्रसाद मोक्ष पद को भी कुछ अधिक नहीं गिनते। फिर जिन्हें आपकी जरा सी टेढ़ी भौंह ही भयभीत कर देती है, उन इन्द्र पद आदि अन्य भोगों के विषय में तो कहना ही क्या है।

भगवन्! यदि हमारा चित्त भौंरे की तरह आपके चरण कमलों में ही रमण करता रहे, हमारी वाणी तुलसी के समान आपके चरण सम्बन्ध से ही सुशोभित हो और हमारे कान आपकी सुयश सुधा से परिपूर्ण रहे तो अपने पापों के कारण भले ही हमारा जन्म नरकादि योनियों में हो जाय इसकी हमें कोई चिन्ता नहीं है॥१८॥

## अर्थरत्नाल्प-दीपिका

अतएव बाह्यचेष्टा लोकातीतेत्याह— अतएवेति। शास्त्रविद्भिरयमत्रनिष्ठ इति चेष्टयैव ज्ञायते सा चास्य तर्कानुकूला न, अतो ज्ञानाभाव इत्यर्थः॥१८॥

## अनुवाद

प्रेमी भक्तों की बाह्यचेष्टा लोकातीत होती है, इसको अतएवेत्यादि द्वारा कहते हैं। शास्त्रज्ञ व्यक्तिगण 'यह इस प्रकार है', इसका ज्ञान अनुमान से ही करते हैं, किन्तु भगवत् प्रेमी भक्त की अवस्था तर्कगम्या नहीं होती है, इसलिए उस विषय में ज्ञान का अभाव रहता है॥ १८॥

## भक्तिसार-प्रदर्शिनी

सुदुर्गमत्वमेव दर्शयति— अतएवेति। हे महेशानि दुर्गे! अयं भावः— शास्त्रविद्भिरपि सुखप्राप्तिदुःखहानी एव पुरुषार्थत्वेन निर्णीते। तादृशभक्तानां ते सुखदुःखे शास्त्रविद्भिर्बहिरेव ज्ञायते, नान्तः। तेषामन्तस्तु सुखदुःखे भगवत्प्राप्त्यप्राप्तिकृते एव। यथा 'नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादि' (भा. ३-१५-४८), भगवत्प्रापकभक्त्यभावेनात्यन्तिकस्य मोक्षस्याप्यनादरात्। एवं कामं भवः स्ववृजिनैर्निरयेषु न स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेतेत्यादि (३-१५-४९)

सनकादीनामुक्तौ निरयेषु नारकीषु योनिषु मम भवो जन्म स्यादित्यनेन यत्र भक्तिः सम्भवति, तस्यां नारकीयोनावपि जन्म समीचीनमिति तेषामभिप्रायादिति ॥१८॥

## अनुवाद

सुदुर्गमत्व का प्रदर्शन करते हैं— अतएव इत्यादि से। हे महेशानि दुर्गे! शास्त्रज्ञगण सुख प्राप्ति एवं दुःख निवृत्ति को ही पुरुषार्थ रूप में निर्णय करते हैं। वे प्रेमी भक्त के केवल बाह्य सुख-दुःख को ही जान पाते हैं, आन्तरिक अवस्था को नहीं। इसका कारण है कि उनका आन्तरिक सुख-दुःख भगवत्प्राप्ति एवं अप्राप्ति कृत होता है। जैसाकि भा. ३-१५-४८ में इस प्रकार कहा गया है—

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पित भयं भ्रुव उन्नयैस्ते।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्त्तन्यतीर्थ यशसः कुशला रसज्ञाः॥

"प्रभो! आपका सुयश अत्यन्त कीर्त्तनीय और सांसारिक दुःखों की निवृत्ति करने वाला है। आपके चरणों की शरण में रहने वाले जो महाभाग आपकी कथाओं के रसिक हैं, वे आपके आत्यन्तिक प्रसाद मोक्ष पद को भी कुछ अधिक नहीं गिनते। फिर जिन्हें आपकी जरा सी टेढ़ी भौंह ही भयभीत कर देती है, उन इन्द्र पद आदि अन्य भोगों के विषय में तो कहना ही क्या है।"

इस प्रकार प्रेमी भक्त भगवत् प्रापक भक्ति के अभाव से आत्यन्तिक मोक्ष का भी अनादर करते हैं।

भा. ३-१५-४९ में कहा गया है—

कामं भव स्ववृजिनै र्निरयेषु नः स्ता
च्चेतोऽलिवद्यदि नु ते पदयो रमेत।
वाचश्च न स्तुलिसिवद्यदि तेऽङ्घ्रिशोभाः
पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥

"भगवन्! यदि हमारा चित्त भौंरे की तरह आपके चरण कमलों में ही रमण करता रहे, हमारी वाणी तुलसी के समान आपके चरण सम्बन्ध से ही सुशोभित हो और हमारे कान आपकी सुयश सुधा से परिपूर्ण रहे तो अपने पापों के कारण भले ही हमारा जन्म नरकादि योनियों में हो जाय इसकी हमें कोई चिन्ता नहीं है।"

यहाँ सनकादियों का कथन कि 'नारकी योनियों में मेरा जन्म हो जाय' इससे जहाँ पर भक्ति प्राप्त करना सम्भव है, उस नारकी योनि में भी जन्म लेना समीचीन है। उन सबों (सनकादि) के कहने का यही तात्पर्य है॥ १८॥

**प्रेम्ण एव विलासत्वाद्वैरल्यात्साधकेष्वपि।**
**अत्र स्नेहादयो भेदा विविच्य न हि शंसिताः॥ (१९)**

**श्रीमत्प्रभुपदाम्भोजैः सर्वा भागवतामृते।**
**व्यक्तीकृतास्ति गूढापि भक्तिसिद्धान्तमाधुरी॥ (२०)**

### अनुवाद

स्नेह, प्रणय आदि प्रेम के ही अवस्था विशेष हैं। साधक के शरीर में प्रेम की अवस्थाओं का प्रचार विरल है, अतएव इस प्रकरण में उसका निर्देश नहीं किया गया है॥ १९॥

श्रीमत् प्रभु श्रीसनातन गोस्वामिपाद बृहद्भागवतामृत नामक निज ग्रन्थ में अति गूढ़ भक्ति सिद्धान्त माधुरी का वर्णन सुस्पष्ट रूप से किये हैं॥ २०॥

**गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी।**
**तुष्यतु सनातनात्मा, प्रथमविभागे सुधाम्बुनिधेः॥ (२१)**

**इति श्रीभक्तिरसामृतसिन्धौ पूर्वविभागे प्रेमभक्तिलहरी चतुर्थी॥ ४॥**

**इति श्रीश्रीभक्तिरसामृतसिन्धौ रसोपयोगि-स्थायिभावोपपादनो नाम पूर्वविभागः समाप्तः॥**

### अनुवाद

श्रीकृष्ण पक्ष में—

श्रीगोपाल रूप में शोभित होकर भी जिन्होंने रघुनाथ के भाव का विस्तार किया है, वे सनातनात्मा (नित्यविग्रह) श्रीकृष्ण श्रीभक्तिरसामृतसिन्धु ग्रन्थ के पूर्व विभाग में प्रसन्न हों॥ २१॥

श्लेष पक्ष में—

श्रीगोपालभट्ट गोस्वामी एवं ग्रन्थकार मुझ रूप नामक व्यक्ति की शोभा अर्थात् इच्छाओं का पोषणकर्त्ता; तथा श्रीरघुनाथदास गोस्वामी के भाव अर्थात् श्रीकृष्णप्रेम का विस्तारकारी, वे सनातन नामक देहधारी अर्थात् श्रीसनातन गोस्वामी इस सुधा समुद्र के पूर्व विभाग से प्रसन्न हों॥ २१॥

श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ के पूर्वविभाग में स्थित
प्रेमभक्ति नामक चतुर्थ लहरी समाप्त॥ ४॥
श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ में
रसोपयोगिस्थायिभावोपपादन नामक पूर्वविभाग समाप्त ॥ १॥

### दुर्गमसङ्गमनी

गोपालेति श्लिष्टमिदं, तत्र कृष्णपक्षे, रघुनाथभावस्य रघुनाथत्वस्य विस्तारी रघुनाथादीनामप्यवतारीत्यर्थः। तत्र तदुपासकानामभीष्टपूरणायेति भावः। अहो कृपामाहात्म्यमिति विवक्षितम्। पक्षे स्ववर्गस्य नामचतुष्टयमुद्दिष्टं। तत्र द्वितीयं श्रीमद्ग्रन्थकृच्चरणानां नाम; प्रथमतृतीये तन्मित्रयोः; चतुर्थञ्च श्रीमत्तदग्रजचरणानां, भावः कृष्णप्रेमा॥ ११॥

इति दुर्गमसङ्गमनीनाम्न्यां श्रीश्रीभक्तिरसामृतसिन्धुटीकायां पूर्वविभागः समाप्तः॥ १॥

## अनुवाद

गोपाल इत्यादि श्लोक श्लिष्ट है। कृष्ण पक्ष में— रघुनाथ भाव का यानि रघुनाथत्व का विस्तार किये हैं। अभिप्राय यह है कि श्रीकृष्ण श्रीरघुनाथ आदि के भी अवतारी हैं। वे इन रघुनाथदि अवतारों में इनके उपासकों का अभीष्ट पूरण किये हैं, यह भाव है। अहो! इससे इनके कृपा माहात्म्य विवक्षित होता है। पक्षान्तर में निजगण के चार नाम उल्लेख किये हैं। इन नामों में द्वितीय (रूप) से ग्रन्थ प्रणेता स्वयं का नाम उल्लेख किये हैं। प्रथम (गोपाल) तथा तृतीय (रघुनाथ) से अपने मित्रद्वय का नाम एवं चतुर्थ (सनातन) से निज अग्रजचरण का नाम लिखे हैं। यहाँ पर भाव शब्द से श्रीकृष्ण प्रेम को जानना होगा॥ २१ ॥

श्रीश्रीभक्तिरसामृतसिन्धु की श्रीदुर्गमसङ्गमनी नामक टीका में
पूर्वविभाग समाप्त॥ १ ॥

## अर्थरत्नाल्प-दीपिका

गोपालेति श्लिष्टमिदम्। सनातनात्मा श्रीकृष्णः गोपालरूपेण शोभां कान्तिं दधदपि रघुनाथस्य भावः समुद्रबन्धनादिक्रिया तस्य विस्तारी। पक्षे सनातनात्मा स्वाग्रजः। गोपालो गोपालभट्टः रूपो ग्रन्थकृत्, तयोः शोभामिच्छां दधत् पुष्णन्नपि 'बिभर्त्ति भृति-पोषयोः दधाति' चेत्याख्यातचन्द्रिकायाम्। रघुनाथस्य तन्नाम्नोऽस्य बन्धोर्भावः श्रीकृष्णप्रेम तस्य विस्तारी वर्द्धकः। शोभा कान्तीच्छयोरुक्तेति विश्वः॥२१ ॥

इत्यर्थरत्नाल्पदीपिकानाम्न्यां श्रीहरिभक्तिरसामृतसिन्धुटीकायां पूर्वविभागः॥

## अनुवाद

"गोपाल रूप शोभां" इत्यादि श्लोक श्लेष युक्त है। सनातनात्मा श्रीकृष्ण गोपाल रूप से शोभा कान्ति को धारण करके भी रघुनाथ के भाव से समुद्र बन्धन आदि क्रिया का विस्तार किये हैं।

पक्षान्तर में, सनातनात्मा श्रीरूप के अग्रज हैं। गोपाल यहाँ पर श्रीगोपाल भट्ट हैं। रूप हैं— वर्त्तमान ग्रन्थकार। वे श्रीसनातन गोस्वामी उन दोनों की शोभा-इच्छा को विस्तार-पुष्ट करते हुये विराजित हैं। 'बिभर्त्ति भृति पोषयो दधाति' यह आख्यात चन्द्रिका ग्रन्थ में उल्लिखित है।

रघुनाथ नामक बन्धु का भाव जो श्रीकृष्ण प्रेम, उसका विस्तारी अर्थात् वर्द्धन कारी। विश्व कोष के अनुसार शोभा शब्द का कान्ति और इच्छा अर्थ में प्रयोग होता है॥ २१ ॥

श्रीभक्तिरसामृतसिन्धु के अर्थरत्नाल्पदीपिका नामक टीका में पूर्वविभाग समाप्त॥

## भक्तिसार-प्रदर्शिनी

गोपालेति श्लिष्टमिदं पद्यम्। तत्र श्रीकृष्णपक्षे— सनातनात्मा श्रीकृष्णः भक्तिसुधाम्भोधेः प्रथमविभागे तुष्यतु। कीदृशः— गोपालक-स्वरूपेण शोभां दधत्। रघुनाथस्य भावः सेतुबन्धादिलीला

तं काम्यवनादौ विस्तारी। सनातन नामा आत्मा देहो यस्येति व्युत्पत्त्या श्रीसनातन-गोस्वामिपक्षे गोपालभट्टगोस्वामी मल्लक्षणरूपनामा चानयोः शोभां दधत् पुष्णन् रघुनाथदासस्य भावः प्रेमा तस्य विस्तारी॥ २१॥

समाप्तोऽयं पूर्व विभागः॥

## अनुवाद

"गोपालरूपशोभां" यह पद्य श्लिष्ट है। श्रीकृष्ण पक्ष में— सनातनात्मा श्रीकृष्ण भक्तिरसाम्भोध ग्रन्थ के प्रथम विभाग में सन्तुष्ट होंवे। किस प्रकार के श्रीकृष्ण— गोपालनकारी स्वरूप से शोभित। रघुनाथ का भाव— सेतु बन्ध आदि लीला का काम्यवन आदि में विस्तार करने वाले।

सनातन नामक आत्मा देह है, जिनका— इस प्रकार की व्युत्पत्ति के द्वारा सनातन गोस्वामी के पक्ष में— गोपाल भट्ट गोस्वामी तथा मुझ स्वरूप रूप गोस्वामी के प्रति शोभा का पोषण करते हुये रघुनाथ दास गोस्वामी के भाव-प्रेम के विस्तारकारी॥ २१॥

॥ पूर्व विभाग समाप्त ॥

श्रीहरिदासशास्त्रि कृत हिन्दी भाषानुवाद में
श्रीभक्तिरसामृतसिन्धु नामक ग्रन्थ का पूर्वविभाग समाप्त॥ १॥

# श्रीहरिदास शास्त्री सम्पादित ग्रन्थावली

(श्रीगदाधरगौरहरि प्रेस से प्रकाशित)

| क्रम सद्ग्रन्थ | मूल्य |
|---|---|
| १-वेदान्तदर्शनम् भागवतभाष्योपेतम् | १५०.०० |
| २-श्रीनृसिंह चतुर्दशी | १०.०० |
| ३-श्रीसाधनामृतचन्द्रिका | २०.०० |
| ४-श्रीगौरगोविन्दार्चनपद्धति | २०.०० |
| ५-श्रीराधाकृष्णार्चनदीपिका | २०.०० |
| ६-७-८-श्रीगोविन्दलीलामृतम् | ४५०.०० |
| ९-ऐश्वर्यकादम्बिनी | ३०.०० |
| १०-श्रीसंकल्पकल्पद्रुम | ३०.०० |
| ११-१२-चतु:श्लोकीभाष्यम्, श्रीकृष्णभजनामृतम् | ३०.०० |
| १३-प्रेम सम्पुट | ४०.०० |
| १४-श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| १५-ब्रजरीतिचिन्तामणि | ४०.०० |
| १६-श्रीगोविन्दवृन्दावनम् | ३०.०० |
| १७-श्रीकृष्णभक्तिरत्नप्रकाश | ५०.०० |
| १८-श्रीहरेकृष्णमहामन्त्र | ५.०० |
| १९-श्रीहरिभक्तिसारसंग्रह | ५०.०० |
| २०-धर्मसंग्रह | ५०.०० |
| २१-श्रीचैतन्यसूक्तिसुधाकर | १०.०० |
| २२-श्रीनामामृतसमुद्र | १०.०० |
| २३-सनत्कुमारसंहिता | २०.०० |
| २४-श्रुतिस्तुति व्याख्या | १००.०० |
| २५-रासप्रबन्ध | ३०.०० |
| २६-दिनचन्द्रिका | २०.०० |
| २७-श्रीसाधनदीपिका | ६०.०० |
| २८-स्वकीयात्वनिरास, परकीयात्वनिरूपणम् | १००.०० |
| २९-श्रीराधारससुधानिधि (मूल) | २०.०० |
| ३०-श्रीराधारससुधानिधि (सानुवाद) | १००.०० |
| ३१-श्रीचैतन्यचन्द्रामृतम् | ३०.०० |
| ३२-श्रीगौरांग चन्द्रोदय | ३०.०० |
| ३३-श्रीब्रह्मसंहिता | ५०.०० |
| ३४-भक्तिचन्द्रिका | ३०.०० |
| ३५-प्रमेयरत्नावली एवं नवरत्न | ५०.०० |
| ३६-वेदान्तस्यमन्तक | ४०.०० |
| ३७-तत्वसन्दर्भः | १००.०० |
| ३८-भगवत्सन्दर्भः | १५०.०० |
| ३९-परमात्मसन्दर्भः | २००.०० |
| ४०-कृष्णसन्दर्भः | २५०.०० |
| ४१-भक्तिसन्दर्भः | ३००.०० |
| ४२-प्रीतिसन्दर्भः | ३००.०० |
| ४३-दश:श्लोकी भाष्यम् | ६०.०० |
| ४४-भक्तिरसामृतशेष | १००.०० |
| ४५-श्रीचैतन्यभागवत | २००.०० |
| ४६-श्रीचैतन्यचरितामृतमहाकाव्यम् | १५०.०० |
| ४७-श्रीचैतन्यमंगल | १५०.०० |
| ४८-श्रीगौरांगविरुदावली | ४०.०० |
| ४९-श्रीकृष्णचैतन्यचरितामृत | १५०.०० |
| ५०-सत्संगम् | ५०.०० |
| ५१-नित्यकृत्यप्रकरणम् | ५०.०० |
| ५२-श्रीमद्भागवत प्रथम श्लोक | ३०.०० |
| ५३-श्रीगायत्री व्याख्याविवृतिः | १०.०० |
| ५४-श्रीहरिनामामृत व्याकरणम् | २५०.०० |
| ५५-श्रीकृष्णजन्मतिथिविधिः | ३०.०० |
| ५६-५७-५८-श्रीहरिभक्तिविलासः | ६००.०० |
| ५९-काव्यकौस्तुभः | १००.०० |

६०-श्रीचैतन्यचरितामृत २५०.००
६१-अलंकारकौस्तुभ २५०.००
६२-श्रीगौरांगलीलामृतम् ३०.००
६३-शिक्षाष्टकम् १०.००
६४-संक्षेप श्रीहरिनामामृत व्याकरणम् ८०.००
६५-प्रयुक्ताख्यात मंजरी २०.००
६६-छन्दो कौस्तुभ ५०.००
६७-हिन्दुधर्मरहस्यम् वा सर्वधर्मसमन्वय: ५०.००
६८-साहित्य कौमुदी १००.००
६९-गोसेवा ४०.००
७०-पवित्र गो ५०.००
७१-गोसेवा (गोमांसादि भक्षण विधिनिषेध विवेचन) ५०.००
७२-रस विवेचनम् ५०.००
७३-अहिंसा परमो धर्म: ११०.००
७४-भक्ति सर्वस्वम् ५०.००
७५.उत्तमा-भक्ति का लक्षण एवं माहात्म्य (श्रीश्रीभक्तिरसामृतसिन्धु: भगवद्भक्तिभेदनिरूपक: प्रथमालहरी– सामान्यभक्ति:) १५०.००
७६-श्रीमद्भगवद्गीतोक्त भगवत्प्राप्ति का उपाय तथा श्रीगुर्वाष्टक, सेवापराध और नामापराध ५०.००
७७-श्रीमन्त्रभागवत ५०.००
७८-श्रीरासलीला ५०.००
७९-श्रीभक्तिरसामृतसिन्धु (पूर्व विभाग) ४००.००
८०-श्रीकृष्णभावनामृतमहाकाव्यम् प्रकाशनरत
८१-श्रीसिद्धान्त दर्पण प्रकाशनरत
८२-श्रीभक्तिरसामृतसिन्धु (दक्षिण, पश्चिम व उत्तर विभाग) प्रकाशनरत

**बंगाक्षर में मुद्रित ग्रन्थ**

१-श्रीबलभद्रसहस्रनाम स्तोत्रम् १०.००
२-दुर्लभसार १०.००
३-साधकोल्लास ५०.००
४-भक्तिचन्द्रिका ४०.००
५-श्रीराधारससुधानिधि (मूल) २०.००
६-श्रीराधारससुधानिधि (सानुवाद) ३०.००
७-श्रीभगवद्भक्तिसार समुच्चय ३०.००
८-भक्तिसर्वस्व ५०.००
९-मन:शिक्षा ३०.००
१०-पदावली ३०.००
११-साधनामृतचन्द्रिका ४०.००
१२-भक्तिसङ्गीतलहरी २०.००

**अंग्रेजी भाषा में मुद्रित ग्रन्थ**

१-पद्यावली (Padyavali) २००.००
२-गोसेवा (Goseva) ५०.००
३-पवित्र गो (The Pavitra Go) ८०.००
४- A Review of "Beef in ancient India" २००.००
५-Scriptural Prohibitions on Meat-Eating १००.
६. Dinachandrika ५०.००
७-THE MEANS TO ATAIN BHAGAVAN AS PER SRIMAD-BHAGAVAD-GITA, SRI-GURVASTAK AND ADVERTENT AVOIDANCE OF SEVA-APARADHA AND NAMA-APARADHA (Free e-book)
८-AHIMSA, THE SUPREME DHARMA (Free e-book)

**अन्य भाषाओं में मुद्रित ग्रन्थ**

१– Pavitra Go (Spanish)
२- Goseva Pavitra Go (Italian)
३-गोसेवा (गोमांसादि भक्षण विधिनिषेध विवेचन) (तमिल)

**वी.सी.डी.**

१- श्रीहरिदास– निवास एक परिचय (हिन्दी)

**॥श्रीहरि:॥**

अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा॥ भ.र.सि. १/१/११

अन्याभिलाषिता शून्य, ज्ञान कर्मादि के द्वारा अनावृत एवं अनुकूल्य से कृष्णानुशीलन को उत्तमा भक्ति कहते हैं।

मुद्रकः श्रीगदाधरगौरहरि प्रेस, श्रीहरिदास निवास
पुरानी कालीदह, वृन्दावन, मथुरा, उत्तर प्रदेश